# अलङ्कारसर्वस्व-सञ्जीविनी

हिन्दीभाषानुवादेन पाठान्तरविवेकेन च परिष्कृतं
श्रीमद्राजानकरुय्यकप्रणीतम् अलङ्कारसर्वस्वम्
श्रीविद्याचक्रवर्तिप्रणीता च
सञ्जीविनी टीका

अनुवादक-सम्पादकः
डा० रामचन्द्र द्विवेदी
एम. ए. पीएच. डी.,
साहित्याचार्यः, दर्शनाचार्यः

प्रकाशकः
मोतीलाल बनारसीदास
दिल्ली :: वाराणसी :: पटना

# ALAṄKĀRASARVASVA - SAÑJĪVINĪ

Alaṅkārasarvasva of Rājānaka Ruyyaka,
Critically edited with Hindi Translation and
Śrīvidyācakravartin's Commentary, Sañjīvinī

*by*

**R. C. Dwivedi,** M.A., Ph.D.,

Sāhityācārya, Darśanācārya

MOTILAL BANARSI DASS

Delhi : : Varanasi : : Patna

विद्वत्कविसहृदयचक्रवर्तिभ्यः

श्रीचिन्तामणिद्वारकानाथदेशमुखमहोदयेभ्यः

प्रतिभांशुजालकुङ्कुमतिलकितदिक्सुन्दरीमुखाब्जेभ्यः ।
नूतननिबन्धकुसुमं तेभ्यो विनयादुपायनीक्रियते ।।

# विषयानुक्रमणी



## भाषानुवाद-सञ्जीविनीसहितम् अलङ्कारसर्वस्वम्

## परिशिष्टानि



———

# निवेदनम्

श्रूयते श्रेयांसि बहुविघ्नानीति। वर्षद्वयात्पूर्वमुपक्रान्तं ग्रन्थस्यास्य मुद्रणं कथमेतावच्चिरायितमिति विचिन्त्य सूक्तेरेव साधुतां सामर्थ्यं च निश्चिनोमि।

अलङ्कारसर्वस्वस्य पाठान्तरादिविमर्शपूर्वं परिष्कारो लखनऊविश्वविद्यालये १९५९ तमे खिस्ताब्दे प्रस्तुतस्य मम शोधप्रबन्धस्यैकं परिशिष्टमभूत्। तदेवाधुना मदुपज्ञेन हिन्दीभाषानुवादेन श्रीविद्याचक्रवर्तिप्रणीतया सञ्जीविनी-टीकया च सह सहृदयानामालोकपथमवतरतीति कमप्यमन्दमानन्दमनुभवामि। सञ्जीविनी टीकेयं सरला प्रसन्ना ग्रन्थार्थव्याचक्षणविचक्षणा च वर्तते। एतदनुसन्धानेन काव्यज्ञानां परितोषो भविष्यतीति द्रढीयान्मे प्रत्ययः।

इतः पूर्वं प्रकाशिते मम 'अलंकारमीमांसा'ऽभिधे ग्रन्थे ग्रन्थकृतः श्रीमद्रा-जानकरुय्यकस्य तट्टीकाकृतां जयरथ-समुद्रबन्ध-श्रीविद्याचक्रवर्तिप्रभृतीनां सविमर्शं संस्तवः प्रस्तुतः। (श्रीविद्याचक्रवर्तिप्रणीता अलङ्कारसर्वस्वनिष्कृष्टार्थ-कारिका अपि सर्वप्रथमं सानुवादं पाठान्तरविवेकपुरस्सरं च तत्र प्रकाशिताः।) भरतमुनिमारभ्य जगन्नाथादिपर्यन्तं चन्द्रकलेव वृद्धिमुपेयुषी अलङ्कारमीमांसा चोपन्यस्ता। अलङ्कारतन्त्रस्य बहवोऽन्ये विषयाश्च न चिरादेव प्रकाश्यमाने मदीये 'स्टडीज इन दि अलङ्कारशास्त्र' इत्याख्ये शोधग्रन्थेऽपि विवेचिताः सन्ति। इह पुनरुपोद्घाते समासेनैव ग्रन्थकृट्टीकाकृतां विषये पिण्डितार्थः समुद्धृतः, संस्करणादिविषयेऽन्यत्रानुक्तं प्रकृतं च प्रततम्।

साहित्यशास्त्रानुसन्धानकर्मणि यैः सुतनिर्विशेषस्नेहेन पन्थाः प्रदर्शितस्तेऽस्म-द्गुरवो लखनऊविश्वविद्यालयस्य वाराणसेयसंस्कृतविश्वविद्यालयस्य चोपकुल-पतिचराः श्रीमन्तः को० अ० सुब्रह्मण्यअय्यरमहोदयाः साम्प्रतं ग्रन्थप्रकाशना-वसरे सप्रश्रयं प्रणतिपुष्पैः पूज्यन्ते। विश्वविश्रुतयशसः डॉ० कान्तिचन्द्र-पाण्डेयाः, 'खिस्ते' इत्युपाह्वाः श्रीमुकुन्दशास्त्रिणः श्रीबटुकनाथशास्त्रिणश्च विशिष्य वन्दनीयाः। एतैरेव सर्वैर्गुरुभिरारोपितः पोषितश्च विद्यातरुरुन्नतः सन् फले पचेलिमतामामोदञ्चाञ्चतीति किमत्र मे वैशिष्टयम्, गुरूणामेव गौरवम्।

अखिलभारतीयसंस्कृतविद्यापीठस्य निदेशको बन्धुनिर्विशेषः डॉ० मण्डनमिश्रः, देहलीविश्वविद्यालये संस्कृतविभागाध्यक्षपदमलङ्कुर्वाणः सौजन्यवैदुष्यविभूषितः

डॉ० रसिकविहारीजोशीमहोदयः, स्नातकोत्तरसान्ध्यशिक्षणसंस्थाने रीडरपदभाक् डॉ० देवराजचाननामहोदयश्च सुहृत्सम्मितैः स्वविमर्शैर्मामनारतमुपचक्रुरिति ते सर्वे धन्यवादार्हाः ।

अस्मन्मित्रवर्य्यस्य डॉ० रामचन्द्रपाण्डेयस्य (देहलीविश्वविद्यालयस्य बौद्धदर्शनविभागे रीडरपदभाजः) प्रेरणयैव प्रकाशकस्य मम च ग्रन्थप्रकाशन-कर्मणि प्रवृत्तिरभवदिति तदुपकारभरं स्वान्तेन सम्भावयामि। कालिदासस्य 'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधावि'ति सूक्ति चरितार्थयन्ती सौभाग्यभास्करी मे कमला कैरक्षरैरद्याभिनन्द्येति न वेद्मि। भारतीयविद्याविचक्षणाः कीर्तिवपुषः डॉ० पी० के० गोडेमहोदयाः, त्रिवेन्द्रम-पटना-बीकानेरादिषु स्थितानां संस्कृतपुस्तकालयानामध्यक्षाश्च मयाऽत्र सविशेषं सादरं च स्मर्यन्ते ये पाण्डुलिपीनामध्ययनादेः सौविध्यं विधाय मूलपाठालोचनं सम्भवमकार्षुः ।

अस्य ग्रन्थस्य मुद्रणं वाराणस्यामभूदहं च देहल्यां स्थित इति मुद्रणे प्रमादानवधानव्यवधानहेतोर्याः काश्चिदशुद्धयो भवेयुस्ता दोषज्ञैरपि गुणैकपक्ष-पातिभिः संशोध्य पठनीयाः ।

मदुपज्ञेन हिन्दीभाषानुवादेन श्रीविद्याचक्रवर्तिप्रणीतया सञ्जीविनीटीकया पाठान्तरविवेकेन चालङ्कृतमिदमलङ्कारसर्वस्वं विपश्चिदपश्चिमानां परितोषाय भूयादिति साम्बं शिवं प्रार्थयमानः संस्कृतसंस्कृतितत्त्वज्ञेभ्यो देहलीविश्वविद्यालय-स्योपकुलपतिपदमलङ्कुर्वद्भ्यो मनीषिमतल्लिकाभ्यः श्रीचिन्तामणिद्वारकानाथ-देशमुखमहोदयेभ्यो नमोवाकमुच्चारयन्निदं समर्पयामि ।

स्नातकोत्तरसान्ध्यशिक्षणसंस्थानम्
देहलीविश्वविद्यालयः

विदुषामाश्रवः
रामचन्द्रद्विवेदी

———

# उपोद्घातः

## प्राचीनानि संस्करणानि प्रस्तुतञ्च संस्करणम्

इतः पूर्वं राजानकरुय्यकप्रणीतस्यालङ्कारसर्वस्वस्य त्रिधा संस्करणानि प्राकाश्यन्त। न चैतान्यद्योपलभ्यन्ते। सर्वप्रथमं श्रीदुर्गाप्रसादद्विवेदी काव्यमालायां (३५ संख्याङ्कितायां) १८९३ खिृस्ताब्दे काश्मीरिकस्य जयरथस्यालङ्कारविमर्शिनीटीकया सह ग्रन्थममुं जुगुम्फ। तदाधारेणैव श्री एच० जेकोबीमहोदयो मूलग्रन्थस्य जर्मनभाषया १९०८ तमे खिृस्ताब्देऽनुवादं व्यधात्।[१] तदनु श्री के० साम्बशिवशास्त्री अनन्तशयनसंस्कृतग्रन्थावल्याश्चत्वारिंशद्ग्रन्थाङ्कतया दाक्षिणात्यस्य समुद्रबन्धस्य व्याख्यानेन सहेमं १९१५ खिृस्ताब्दे सम्पादयामास[२]। गौरीनाथपाठकोऽपि वाराणसीतः शारदासंस्कृतग्रन्थमालाया नवमप्रसूनत्वेन १९२६तमे खिृस्ताब्दे विषमस्थलप्रकाशिन्या 'महालक्ष्मी'-टिप्पण्या[3] सहितमलङ्कारसर्वस्वं मुद्रापयामास। तत्र निर्णयसागरस्य १९३९ तमेऽब्दे, अनन्तशयनस्य च १९२८ तमेऽब्दे द्वितीयं संस्करणमपि प्राकाश्यत। तयोरेत एव संस्करणे मया सम्पादनेऽध्ययने च प्रयुक्ते।

निर्णयसागरस्य द्वितीयं संस्करणं (मयाऽत्र 'नि०' संकेतेन सूचितम्) पुस्तकद्वयाधारेण सम्पादितम्। तत्रैकन्तु प्रागेव काव्यमालायां १८९३ खिृस्ताब्दे प्रकाशितं प्रथमं[४] संस्करणमपरञ्चानन्तशयनीयं प्रथमं संस्करणम्। द्विती-

---

१. अयमनुवादः जेड० डी० एम० जी० इति संकेतेन परिचितायाः जर्मनपत्रिकाया द्वाषष्टितमेऽङ्के क्रमेण २८९-३३९; ४५८; ५९७-६२८ पृष्ठेषु प्रकाशितोऽभवत्।

२. अस्य संस्करणस्योपोद्घाते सम्पादकः 'अलङ्कारसूत्रं' रुय्यककृतं तद्वृत्तिश्चालङ्कारसर्वस्वाख्या मङ्खुकप्रणीतेति निश्चिक्ये।

३. परीक्षार्थं विद्यार्थिनां सौकर्याय कृतेयं 'महालक्ष्मी' प्रायेण जयरथकृतविमर्शिनीशब्दानेवानुदति, इतस्ततः प्रकृतार्थप्रकाशकान्युद्धरणानि वोपादत्त इति व्याख्यादृष्टचा नवनवार्थोन्मेषदृष्टचा वा नास्या मनागपि महत्त्वम्।

४. एतत्संस्करणन्तु नागरीलिपिबद्धं मातृकाद्वयमाश्रित्य समापाद्यत इति सम्पादकवचोभिर्ज्ञायते। तद्विवरणन्तु नोपलब्धम्।

येऽप्यस्मिन् निर्णयसागरसंस्करणे मूले टीकायां च सहस्रशो दोषाः सन्तीति विदितमेव विदितवेदितव्यानाम्[१] ।

अनन्तशयनसंस्करणस्याधारभूतानामादर्शपुस्तकानां[२] (मातृकाणाम्) विवरणं सम्पादकेन स्वोपोद्घाते (द्वितीयपृष्ठे) प्रकटितम् । तत एवेदं ज्ञायते यदत्र प्रयुक्तानि मलयालमलिपिनिबद्धानि करवगसंज्ञकानि त्रीण्यलङ्कारसर्वस्वस्यादर्शपुस्तकानि चतुश्शतवर्षवृद्धदेश्यानि दक्षिणे सुलभानि चासन्निति । मुद्रणदृष्टया सम्पादनदृष्टया चानन्तशयनसंस्करणं[3] निर्णयसागरीयसंस्करणापेक्षया साधुतरम् । दाक्षिणात्यपाठालोचनदृष्टयाऽप्यस्य महत्त्वं वर्तते । अथाऽप्यत्र काश्मीरदेशोद्भवस्य रुय्यकस्य मूलपाठपरम्परा विच्छिन्नेव, क्वचिच्च समुद्रबन्धव्याख्यानप्रभावेण कवलितेव प्रतिभाति । तथा हि मङ्गलपद्य एव 'निजे'तिस्थाने 'गुर्वे'तिपाठः पुष्पिकाश्लोके च 'इति मङ्खुको वितेने···' इति विन्यासो मूलपरम्परायाः विपर्यास एव । अपराणि च बहून्यत्रार्थे उदाहरणानि सन्ति यानि मदीये संस्करणे पाठान्तरटिप्पणीभिः सुज्ञेयानि[४] ।

शारदासंस्कृतग्रन्थमालायाः संस्करणं निर्णयसागरीयं संस्करणमाश्रित्य कृतम् । अत्र मक्षिकास्थाने मक्षिकापात एव दृश्यते ।

यदाहं प्राथम्येनालङ्कारसर्वस्वमीमांसायां प्रवृत्तस्तदा मया मद्गुरुणा चानुभूतं यदनन्तशयनसंस्करणं प्राचीनपुस्तकाधारेण सम्पादितमपि काश्मीरपरम्परां नानुसन्धत्ते, जयरथटीकातश्च तत्र बहुत्र वैषम्यमप्यवलोक्यते, निर्णयसागरीयं संस्करणं च मुद्रणादिदोषबहुलं विद्यते, शारदासंस्कृतग्रन्थमालायाश्चान्यथासिद्धम् । कैश्चिदपि शारदालिपिनिबद्धानां मातृकाणामप्युपयोगः सम्पादने न विहित इति पाठविषये प्रतिपदं सन्देहो भ्रान्तिर्विचिकित्सैव वा समजनि । तत एव मे मूलग्रन्थस्य विमर्शिनीटीकया सह शारदादिलिपिप्राप्तपुस्तकसाहाय्येन संशोधने प्रवृत्तिरुदपद्यत । क्रमेण समाप्तिमधिगच्छति चास्मिन्कार्ये मया श्रीविद्याचक्रवर्तिप्रणीता सञ्जीविनी टीका समधिगता । पुस्तकद्वयञ्च निष्क्र-

---

१. अस्मिन्प्रसङ्गे मदीय संस्करणे ६, १६, ५५ इत्यादिषु पृष्ठाङ्केषु स्थिताष्टिप्पण्योऽवलोकनीयाः ।

२. प्रथमद्वितीयसंस्करणयोराधारभूता मातृकास्तु ता एव ।

३. एतदेव द्वितीयम् अनन्तशयनीयं संस्करणं मया 'अ०' संकेतेनात्र सन्दृब्धम् ।

४. द्रष्टव्याः पृष्ठाङ्काः—१, १६, २६, २७, ३२, ३६, ५५, इत्यादयः ।

ष्टार्थकारिकायाः । सैवात्र विमर्शिनीस्थाने पूर्वमप्रकाशितत्वादत्र प्रकाशमेति । अस्याष्टीकायास्तत्कर्तुश्च विषयेऽलङ्कारसर्वस्वमीमांसाप्रकरणे मयाऽन्यत्र पूर्वमेवोक्तं, श्रीविद्याचक्रवर्तिप्रणीताश्च निष्कृष्टार्थकारिका अपि तत्र सानुवादं सर्वप्रथमं प्रकाशं नीताः ।

सञ्जीविनीटीकया सह प्रकृतेऽस्मिन्नलङ्कारसर्वस्वसंस्करणे निर्णयसागरीयकाव्यमालायामनन्तशयनसंस्कृतग्रन्थावलौ मुद्रितयोर्ग्रन्थयोरेव नोपयोगः कृतोऽपि तु शारदादिलिपिनिबद्धं मातृकात्रयमप्युपयुक्तम् । यत्र क्वचन विमर्शिनीटीकायां तन्मातृकासु, काव्यप्रकाशाद्यन्यालङ्कारग्रन्थेषु दृष्टाः पाठा अपि टिप्पणीषु निवेशिताः । सञ्जीविनीटीकायां विद्यमानो पाठभेदस्तु मूलग्रन्थस्य टीकया सहाध्ययनेनैव सुलभ इति क्वचिदेव तत्संकेतो विहितः । एतट्टीकानुसारेणैव स्वमतिकल्पनाभिर्वा ग्रन्थयोजना प्रमाणमन्तरा महान्तमुपप्लवमुत्पादयेदिति प्राप्तानि पाठान्तराणि यथामति विमृश्य यथासम्भवं काश्मीरिकपरम्परापाठो नियोजितः । अलंकारसर्वस्वसंस्करणे प्रयुक्तानां मुद्रितपुस्तकयोः पाण्डुलिपीनां च क्रमेण विवरणमित्थमस्ति । वामकोणे संकेताक्षराणि विद्यन्ते ।

मुद्रितपुस्तके

| | |
|---|---|
| अ. राजानकरुय्यकप्रणीतम् अलङ्कारसूत्रं श्रीमङ्खुकप्रणीतया अलङ्कारसर्वस्वाख्यया वृत्त्या समुद्रबन्धव्याख्यासनाथया समेतम् । | अनन्तशयनसंस्कृतग्रन्थावलिः,ग्रन्थाङ्कः ४० द्वितीयं संस्करणम्, सम्पादकः के० साम्बशिवशास्त्री, १९२८ |
| नि. राजानकरुय्यककृतम् अलंकारसर्वस्वम् जयरथकृतटीकया समेतम् । | काव्यमाला ३५, द्वितीयं संस्करणं निर्णयसागरमुद्रणयन्त्रालयतः, १९३९ |

सर्वस्वमातृकाः

ना. पुण्यपत्तनस्थभाण्डारकरप्राच्यविद्यासंस्थानात्प्राप्तेयं मातृका तदीये सूचीपत्रे[1] निम्ननिर्दिष्टरीत्या वर्णिता—

---

1 Descriptive catalogue of the Government Collections of Manuscripts Depositeed at the Bhandarkar oriental Research Institute, Vol. xii. Poona, 1936

No 25 अलंकारसर्वस्व Alaṅkārasarvasva

230
———
1875-70

Size :—14 in. by 6⅛ in.

Extent :—40 leaves, 11 lines to a page, 53 letters to a line.

Description :—country paper ; not very old ; Devanāgarī characters ; handwriting clear, bold, legible and uniform; marginal notes ; corrections made with yellow pigment.

Age*:—The Ms is not very old.

Begins. – ॐ स्वस्ति श्रीगणेशाय नमः ।

ॐ नमस्कृत्य परां वाचं[१]···मन्यन्ते etc.

Ends.—"तस्मादाश्रयाश्रियिभावेनैव चिरन्तनमतानुसृतिः ॥८८॥

समापितमिदमलङ्कारसर्वस्वाख्यमलङ्कारशास्त्रम् ॥

मि(इ)दमलङ्कारशास्त्रं समापितं नीतमिति भद्रम् ।

References :—Same as in No. 24.

अस्या मातृकाया लेखोऽतीव स्पष्टः शुद्धश्च । तेन चेयं द्विशतवृद्धदेश्या प्रतिभाति । केनचिद्विदुषा लिपिकेन शारदालिपिनिबद्धायाः कस्याश्चन मातृकाया इयं प्रतिलिखितेति प्रतीयते । मङ्गलपद्ये रुय्यक कृतित्व-सूचको 'निजे'ति पाठ एवात्रोपलभ्यते । काव्यमालायां प्रकाशितेन पाठेनास्या एकत्वं प्रायेण वर्तते । शा. संकेतेन सूचयिष्यमाणाया मातृकया सहेयं प्रायशः सर्वत्रैव संवदति । नागरीलिप्याधारेणास्याः सङ्केतो 'ना.' इति कृतः ।

---

* अस्माद्विवरणात् लेखकस्य ( Author ) विषये उल्लेखोऽनपेक्षितत्वान्न दीयते । लेखकोऽत्र सर्वत्रैव रुय्यको निर्दिष्टः । प्रारम्भसमाप्त्यौ चात्र समासेनैव निर्दिष्टौ ।

१ अत्रत्यः शेषांशस्तु सूचीपत्रे द्रष्टव्योऽनपेक्षितत्वात्साकल्येन नोद्ध्रियते ।

शा. पुण्यपत्तनस्य भाण्डारकरप्राच्यविद्यासंस्थान एवेयमपि मातृका वर्तते । अस्याश्च विवरणं तदीये सूचीपत्रे इत्थमस्ति—

No. 24 अलंकारसर्वस्व — Alaṅkārasarvasva 237 / 1875-76

Size :—7¼ in. by 7¼ in.

Extent :—110 leaves ; 10 lines to a page ; 24 letters to a line.

Description :—Country paper ; old and somewhat musty in appearance ; Śāradā characters ; handwriting bold and legible ; the Ms. is complete comprising folios 1 to 110.

Age :—The Ms. appears to be old (Vide Saṁvat on folio 117b)

Begins :—ॐ स्वस्ति ।। श्रीगणेशाय नमः ।। श्रीसरस्वत्यै नमः ।।
ॐ नमस्कृत्यपरां वाचं[१]—वाच्योपस्कारकत्वेनोक्तः etc.

Ends :—folio $110^b$

संसृष्टिसंकरयोरपि कयोश्चित्तद्रूपत्वात्[१]—समापितमिदमङ्कारसर्वस्वमिति श्रेयः कृतिस्तत्रभगवद्राराजानकरुय्यकस्येति ।।

References :—(1) (i) Mss Aufrecht.
i, $32^b$ ; ii, $6^b$ ; iii, $7^b$
(2) S.K.Dc : Sanskrit Poetrics, Vol. I, p. 19 off.

अस्यां मातृकायामलङ्कारसर्वस्वं जयरथप्रणीता तट्टीकाऽलङ्कारविमर्शिनी शोभाकरप्रणीतञ्चालङ्काररत्नाकरमिति त्रयो ग्रन्था विद्यन्ते । अन्तिमश्च ग्रन्थस्त्रिधा विभज्य लिखितः । प्रारम्भेऽलङ्कारसर्वस्वमस्ति, तदनु 'सर्वस्वालङ्कारसूत्राणी'तिशीर्षकेण सूत्राणां पृथगप्युल्लेखोऽस्ति । एतदनन्तरमलङ्काररत्नाकरसूत्राणि लिखित्वा "अलङ्काररत्नाकरे वर्तमानानां प्राकृतगाथानां संस्कृतीकरणम्" इति शीर्षकेण तत्र स्थितानि

१ एतन्मध्यान्तःपात्यंशस्तु नोद्ध्रियते ।

प्राकृतोदाहरणानि पृथक्कृत्य लिखितानि । एतदनन्तरमलङ्कारविमर्शिनी प्रारभते । अन्ते चालङ्कारत्नाकरमस्ति । यद्यपि मातृकायाः कर्णदं प्रान्तेषु जीर्णत्वात्त्रुटितमस्त्यथापि दिष्टया ग्रन्थांशस्तु सुरक्षितः । यत्र तत्र भोजनान्वेषिभिः कीटैः क्वचन लघूनि क्वचिच्च महान्ति छिद्राणि कृतानि तथापि 'छिद्रेष्वनर्था बहुलीभवन्ती''ति भयन्नापादितम् । मूललिपिकेनान्येन वा केनचित् पुटकप्रान्तेषु यत्र क्वचन विमर्शिनीटीकांशोऽपि सुखावबोधायोल्लिखितः । तथा हि 'नमस्कृत्य परां वाच'मिति सर्वस्वमङ्गलश्लोकस्य टीकात्वेन परिसरलेखो (marginal notes) विहतो यो हि विमर्शिनीटीकाया भागत्वेन[१] निर्णयसागरसंस्करणे प्रकाशितो वर्तते । शारदा-

[१] निर्णयसागरसंस्करणस्य विमर्शिनीभागत्वेन "मंगलकामनया ग्रन्थकृन्निजेष्टदेवता.... तदेतत्तावदास्ताम्" इत्यादिः पाठो मया परीक्षितासु विमर्शिनीमातृकासु क्वापि नोपलब्धः । ययोश्च पुस्तकयोरादर्शमवलम्ब्य निर्णयसागरस्थं पुस्तकं मुद्रापितमभूत् तत्रापि 'क' संज्ञक एवायं पाठो नापरत्र । अन्येभ्यो विवरणात्मकसूचीपत्रेभ्योऽपि विमर्शिनीप्रारम्भो 'निजेति' प्रतीकादेवोपलभ्यते ।

निर्णयसागरीयेऽस्मिन्पाठे "सोऽयमेवाग्रे विमृष्यति विमर्षिणीकारः" इत्यनया पङ्क्त्या प्रतिभाति यदयं सर्वोऽपि पाठः केनचित् पाठकेन लिपिकेन वा भूमिकात्मना पश्चाद्योजितः । स एव कालेन 'क' संज्ञकपुस्तके केनाऽपि टीकांशत्वेन स्वीकृतः । जयरथः क्वापि 'विमर्षिणीकार'इति शब्देन नात्मानमभिधत्ते ।

"सोऽयमेवे"ति कथनं च कञ्चिदन्यमेव तटस्थं लेखकं सूचयति । पुनश्च जयरथस्य व्याख्यानपद्धतौ प्रतिपदं व्याख्यानं, विशेषतश्च पद्यानां प्रायो न दृश्यते । अत्र तु मङ्गलपद्यस्य प्रथमार्धमादाय तेषामेव पदानां विवरणं पौनःपुन्येन किञ्चिदुपबृंहणपूर्वकं वर्तते । तथा हि नमस्कृत्येत्यादिपदानि मङ्गलान्वययोजनावसरे व्याख्यातान्यपि "एतादृशीं तां नमस्कृत्ये"त्यादिना किञ्चिद्भेदेन पुनरुपात्तानि । ततश्चाग्रे 'निजेति' 'तात्पर्यमिति' प्रतीकोपादानपुरस्सरं मया परीक्षितेषु सर्वेष्वादर्शपुस्तकेषूपलब्धमेव व्याख्यानं प्रवर्तते । एवं परीक्षितानामादर्शपुस्तकानां 'निजे'तिपदात्प्रारम्भरूपात्संवादात्मकबहिःप्रामाण्यात्, पुनरुक्तिरूपादन्तःप्रामाण्यात्, जयरथलेखसरणिसमीक्षणाच्च स्फुटमिदमाभाति यत् "मङ्गलकामनया ग्रन्थकृदि"त्यादिकमारभ्य "तदेतत्ताव-

लिपिनिबद्धत्वात् सर्वस्वभागः 'शा०' संकेतेन सूचितः। यत्र क्वचन पाठनिर्धारणेऽस्या मातृकाया विमर्शिनीटीकांशस्योपयोगे मातृकेयं 'भा१' संकेतेन सूचिता। इयं शतद्वयवर्षेभ्योऽधिकं वृद्धा प्रतिभाति।

शा१

पुण्यपत्तनस्थभाण्डारकरप्राच्यविद्यासंस्थाने सुरक्षिता भूर्जपत्रलिखिता शारदालिपिनिबद्धा मातृकेयं पुण्यपत्तनं गत्वा पाठविवेकाय प्रयुक्ता। अस्या विवरणञ्च तदीये सूचीपत्रेऽधोलिखितं वर्तते—

| | |
|---|---|
| अलङ्कारसर्वस्वं | Alaṅkārasarvasva |
| No. 26 | 238 / 1875-76 |

Size :—9 in. by 8 in.

Extent :—62 leaves, 19 lines to a page ; 20 letters to a line.

Description :—Birch-bark ; thin and brittle but preserved in good condition ; Śāradā charactters ; handwriting bold, uniform and legible ; folios 1-4 missing ; incomplete.

Age: —The Ms. is very old.

Begins.—···षितान्यपरवाच्या ·····क्रमितवाच्यात्यंतति ·····रप्यमे··· क्षणमूलशब्दशक्तिमूल······र्थशक्तिमूलोव ··त्तध्वनिः संलक्ष्यक्रमव्या·····ध्वनिरलंकारध्वनिश्चेति। तत्रा·····संज्ञायां दर्शितः। काव्यस्य श्रृङ्गारप्रधान······श्रेष्ठस्तु यथावसरं तत्रैव विभक्तः॥

Ends.—संसृष्टिसंकरप्रकारयोरपि कयोश्चित्तद्रूपत्वात्। [1]संपूर्णमिमम-

---

दास्ता"मित्यन्तो निर्णयसागरप्रकाशितो विमर्शिनीटीकाभागः केनापि स्वकल्पित एव जयरथोक्तलक्षणार्थविस्तराय मङ्गलार्थकल्पनाय च निवेशितः। अत्र कियानंशः जयरथस्येति वक्तुं न सुशकम्। "निजेति"स्थलादेव टीकोपक्रमस्वीकारे तदिदमसमञ्जसं भवेद्यत्कथमयं स्वकृतमङ्गलमनाचरन् काश्मीरष्टीकाकृन्मङ्गलार्थं पूर्वार्धमव्याख्यायैव निजेत्यादितदुत्तरभागादेव प्रवर्तते। अतोऽत्र जयरथस्य कश्चिदेवांशो यो हि पश्चात्प्रक्षिप्तेन विस्तरेणाकुलीकृतः।

[1] एतन्मध्यान्तःपात्यंशः सर्वत्र समानत्वान्नोद्ध्रियते; सूचीपत्रत एव द्रष्टव्यः।

लङ्कारसर्वस्वमिति ॥ श्रेयो भवतु लेखकपाठकयोः । कृतीराजानकरुय्यकस्येति ॥ ॐ ॥

References.—Same as in NO. 24.

मातृकेयं लिप्यक्षरादिपरामर्शेन त्रिशतवर्षवृद्धदेश्याऽस्तीति ज्ञायते । इमां परीक्ष्यास्या आयुर्विषये दिवङ्गतस्य डॉ० पी० के० गोडेमहोदयस्यापीदमेव मतमासीत् । सेयमतितरां जीर्णत्वात् पुटकादिपरिवर्तने नष्टैव न स्यादिति मे महद्भयमुत्पादयति स्म । नागरीलिपिनिबद्धा प्रथमं निर्दिष्टा मातृकाऽस्या एव प्रतिलिपिराधारभूता वाऽभवदिति प्रायेण पाठसम्वादात्प्रतीयते । शारदालिपिनिबद्धा (शा० संकेतेन सूचिता) मातृका, या इतः पूर्वं मया निर्दिष्टा, पाठदृष्ट्या भिन्नाऽस्ति । एकलिपिनिबद्धत्वेऽप्येतयोर्भेदो वर्तते । शा१ मातृका प्रथमापेक्षया लेखदृष्ट्याऽपि शुद्धतरा स्वच्छतरा च वर्तते । अस्यामप्यलङ्कारसर्वस्वं सहैव विद्यते; विमर्शिन्यनुसारं पाठान्तरनिर्देशे मातृकेयं भा२ संकेतेन सूचिता ।

सं० सञ्जीविनीहस्तलेखः

अत्रोपन्यस्ते सञ्जीविनीटीकापाठे यत्र तत्र मूलग्रन्थस्य स्वीकृतपाठाद्भेदो वर्तते । स चायं भेदः सुखावबोद्धव्य इति सर्वत्र पार्थक्येन पाठान्तरटिप्पणीषु निर्देशो न कृतः । कृते तन्निर्देशे सञ्जीविनीपाठः 'सं.' इति संकेतेन सूचितः ।

सञ्जीविनीहस्तलेखोऽयं मया 'यूनिवर्सिटी मैनष्क्रप्टस लाइब्रेरी, त्रिवेद्रम' इति स्थाने निदेशकस्य, तस्मिन्नेव च संग्रहालयाध्यक्षपदभाजः के० एस० महादेवशास्त्रिणः कृपया लखनऊविश्वविद्यालयकृते प्राप्तोऽभूत् । अयं ग्रन्थः के० वासुदेवन् पिल्लईमहोदयेन नागरीलिप्यां प्रतिरूपितः तत्रत्यपाण्डुलिपिपुस्तकालयपण्डितेन एम० माधवन्महोदयेन च निरीक्ष्य मह्यं प्रहितः । साम्प्रतं लखनऊविश्वविद्यालये सुरक्षितोऽयं प्रतिरूपितः हस्तलेखः । तत्र चास्य ग्रन्थाङ्कोऽस्ति—R s. 891. 208 V 67 An. 172515

अयं हस्तलेखः प्रायेण शुद्धः, पूर्णश्च । यत्र क्वचन वर्तमाना अशुद्धयो मया यथामति संशोध्य कोष्ठके निवेशिताः । मन्ये सञ्जीविनीप्रकाशनेन काव्यमीमांसकानां परितोषो भविष्यतीति ।

जयरथादिसूचिता ग्रन्थविपर्यासादयः

रुय्यकात्पञ्चसप्ततिवर्षाभ्यन्तर एव तद्देशे लब्धजन्मा जयरथो ग्रन्थस्यासंगतत्वं विपर्यासं पाठान्तराणि अपपाठादिकं च सूचयति । वस्तुतः

शुद्धपाठपरीक्षणदृशाऽलङ्कारसर्वस्य भाग्यं नातीव स्पृहणीयम्। जयरथसमय एवेयं प्रसिद्धिरासीद्यदयं ग्रन्थो "ग्रन्थकृतः पश्चात् कैरपि पत्रिकाभिर्लिखित" इति।[१] लिपिकैः स्वमतिजाड्यादनवधानाद्ग्रन्थान्तरसङ्गतत्वाच्च (जयरथानुसारं) "प्रतिपदमेव ग्रन्थस्यास्य विपर्यासः कृतः"।[२] अन्येऽपि टीकाकारा यत्र क्वचन पाठान्तरादिकं निर्दिशन्ति, क्वचिच्च जयरथेन दूषितं पाठमपि स्वीकुर्वन्तो दृश्यन्ते। अपरत्र बहुत्र जयरथनिर्दिष्टः पाठ एव तदनन्तरलिखितेषु प्राचीनादर्शेषु प्रचचारेति जयरथप्रमुखैराचार्यैः सूचितानां केषाञ्चन पाठान्तरादीनामनुसन्धानमत्र ग्रन्थक्रमावलम्बेन समासतः प्रस्तूयते।

(१) तत्र यमकालङ्कारसूत्रवृत्तिः—"अत्र क्वचिद्भिन्नार्थत्व"मित्यादि (पृ०३३)। एतत्स्थाने "क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्व"मिति पाठः प्रचचार। एतत्पाठस्वीकारे यमकस्य भेदद्वयमेवोक्तं भवति। रुय्यकस्य तु प्रकारत्रयमभिप्रेतम्। अत एवायमपपाठ एव स्यादित्याशयेनाह विमर्शिनीकारः "अतश्च भेदनिर्देशग्रन्थो यथास्थित एव ज्यायान्[३]"। समुद्रबन्धव्याख्यायां सञ्जीविन्याञ्च जयरथस्वीकृत एव पाठोऽस्ति। तदेतज्जयरथेन कृतं पाठलोचनमपपाठादिनिरासे महत्साहाय्यकमभूदिति मे विश्वासः।

(२) किं पद्मस्येति पद्ये (पृ० ५५) वक्त्रस्य पूर्वमिन्दुना रूपणं तत्परम्परया च पीयूषेणाधरामृतस्य रूपणं विद्यते। तदेव चात्र विवक्षितम्। केनचित् लिपिकेनात्र "पीयूषस्याधरामृतेन श्लिष्टशब्दनिरूपणम्[४]" इत्यपपाठः कल्पित इति[५] जयरथवचनाद्विज्ञायते। अस्मदादर्शपुस्तकेषु शुद्ध एव पाठः प्राप्यते। अनन्तशयनसंस्करणे समुद्रबन्धव्याख्यायां सञ्जीविन्याञ्चादमेवापपाठो लभ्यते। सोऽयमपपाठो न सर्वथा दुष्ट इति धियेव जयरथपरवर्तिभिष्टीकाकारैः स्वीकृतो भवेदित्यूहः संभवति।

---

१. विमर्शिनी, पृ० १३७, काव्यमाला, (द्वितीयं संस्करणम्)। अन्यत्रापि (पृ० ८६) विमर्शिनीकारस्तथैवाह—"अयं हि (ग्रन्थो) ग्रन्थकृतः पश्चात् कैश्चिद्विपश्चिद्भिः पत्रिकाभिर्लिखित इत्यवगीता प्रसिद्धिः।"

२. तत्रैव, पृ० १६०।

३. विमर्शिन्यां, पृ० २६।

४. सर्वत्रात्र 'रूपणमिति स्थाने 'निरूपण'मित्यशुद्धः पाठः विमर्शिन्यां दृश्यते।

५. विमर्शिनी, पृ० ४७।

(३) उल्लेखालङ्कारमुपसंहरता रुय्यकेणोक्तम्–"एवमलङ्कारान्तरविच्छित्त्याश्रयेणाप्यलङ्कारो निदर्शनीय" इति (पृ० ७५)। जयरथश्रीविद्याचक्रवर्तिटीकयोरयमेव पाठोऽवस्थितः। द्वाभ्यामपि 'अलङ्कारे'तिस्थाने 'कारकान्तरे'ति पाठान्तरमपि सूचितम्। अनन्तशयनसंस्करणे (पृ० ४४) समुद्रबन्धव्याख्यायां च (तत्रैव) पाठान्तरं कारकान्तरेत्येतदेव दृश्यते। तदनुसारेण समुद्रबन्धः "अत्र कारकग्रहणं विभक्तिमात्रस्योपलक्षणम्। अकारकविभक्तिष्वपि विषयभेदेनानेकाधात्वोल्लेखसम्भवात्" (पृ० ४४-४५) इति व्याख्याय षष्ठ्यां, पञ्चम्यां, चतुर्थ्यां, तृतीयायां, द्वितीयायां प्रथमायाञ्च कारकविच्छित्तिमुदाहरति[१]। यद्यपि श्रीविद्याचक्रवर्ती समुद्रबन्धश्चोभावपि दाक्षिणात्यौ तथापि पूर्वस्तु अलङ्कारेति जयरथसम्मतं पाठमेवोररीकरोति, उत्तरस्तु पाठान्तरमुपादत्ते। श्लेषालङ्कारविच्छित्त्याश्रयेणोपक्रान्तो ग्रन्थकारः उपसंहारे अलङ्कारान्तरविच्छित्त्याश्रयेणायमुल्लेखः सम्भवत्येतदेवाभिप्रैति। अतः समुद्रबन्धस्वीकृतः कारकान्तरेति पाठोऽपपाठ एव प्रतिभाति।

(४) जयरथदृष्टेषु केषुचित् प्राचीनादर्शेषु पूर्वं भ्रान्तिमान् तदनु अपह्नुतिश्चास्ताम्। उल्लेखालङ्कारश्चातिशयोक्त्यनन्तरं निरूपित आसीत्। अपह्नुतिसूत्रे('विषयापह्नवेऽपह्नुतिः, (पृ० ७६) वस्त्वन्तरप्रतीतिरिति पदस्य भ्रान्तिमत्सूत्रात् ("सादृश्याद्वस्त्वन्तरप्रतीतिः" पृ० ६८) अनुवृत्तिः। तथाहि तत्रापह्नुतिसूत्रवृत्तिः–"वस्त्वन्तरप्रतीतिरित्येव" (पृ० ७६)। भ्रान्तिमदपह्नुतिमध्ये उल्लेखालङ्कारसूत्रस्य पठितत्वात् कथमियमनुवृत्तिः संभवतीत्यसामञ्जस्यमपासितुं कैश्चित् लिपिकैः ग्रन्थक्रमो व्यत्यस्तः। ते च भ्रान्तिमदपह्नुत्युत्प्रेक्षातिशयोक्तिग्रन्थस्य पश्चादुल्लेखालङ्कारस्य निरूपणं संगतमिति विचार्य ग्रन्थक्रममन्यथाचक्रुः। अत्राहुर्विमर्शिनीकाराः—

अत एव केचन मण्डूकप्लुतिन्यायेनानुवर्तनस्यानुचितत्वाद्भ्रान्तिमदनन्तरंमपह्नुतिर्ग्रन्थकृता लक्षिता, उल्लेखश्चातिशयोक्त्यनन्तरमिति ग्रन्थं विपर्यासितवन्तः। न चैतत्। यत उल्लेखस्तावदतिशयोक्त्यनन्तरं ग्रन्थकृता न लक्षितः। यद्वक्ष्यति "एवमध्यवसायाश्रयेणालंकारद्वयमुक्त्वा गम्यमानौपम्याश्रया अलंकारा इदानीमुच्यन्ते। तत्रापि पदार्थवाक्यार्थगतत्वेन तेषां द्वैविध्येऽपि पदार्थगतमलंकारद्वयं क्रमेणोच्यते" इति[२]। 'वस्त्व-

[१]. द्रष्टव्या समुद्रबन्धव्याख्या, पृ० ४५, अनन्तशयनसंस्करणे।

[२]. विमर्शिन्यां, पृ० ६२।

न्तरप्रतीति'रितिपदस्योल्लेखेऽप्यनुवर्तनाज्जयरथनिर्दिष्टः क्रम एवोचितः। स एव च सर्वत्रोपलभ्यते, तत्रैव च ग्रन्थस्य स्वारस्यम्।

(५) भेदेऽभेदरूपामतिशयोक्तिं 'कमलमनम्भसी'त्यादिनोदाहरता ग्रन्थकृता स्ववृत्तावुक्तम् – "अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदः" (पृ० १०४)। अतिशयोक्तेश्च भेदपञ्चकमुदाहृत्योपसंहरति – "अत्र चातिशयाख्यं यत्फल"-मित्यादिना "तदभिप्रायेणैवाध्यवसितप्राधान्य"मित्यन्तेन (पृ. १०९)। पूर्वत्र मुखादीनां कमलाद्यध्यवसायं स्वकण्ठेन निर्दिशन्नपि उत्तरग्रन्थे "ननु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीय" इत्यादिकथनेन ग्रन्थकारः स्वोक्तमेव कथङ्कारं विरुणद्धीति पूर्वापरपराहतोऽयं ग्रन्थांश इति जयरथः शङ्कते, न चैतत् "वचनं पूर्वापरपराहतमस्य वैदुष्यशालिनो ग्रन्थकारस्य सम्भाव्यम्" इति च तत्र टीकते[१]। अतिशयोक्तौ तावद्धर्मिणामभेदाध्यवसायो धर्माणां वेति विचारे प्रस्तोष्यमाणे सति रुय्यकदृशा धर्माणामेवाभेदाध्यवसायो भवतु अत एव सः सर्वत्रातिशयोक्तिभेदेषु कविसमर्पितधर्मेण वास्तवं सौन्दर्यमध्यवसितं भवतीत्युपसंहरति। जयरथस्तु सर्वत्रातिशयोक्तिषु धर्माणामभेदाध्यवसाययोजने उपमादिष्वतिशयोक्तिप्रसक्तिं शङ्कमानो यथाप्रसङ्गं धर्माणां धर्मिणां वाऽभेदाध्यवसाय इति मनुते। वस्तुतः उपक्रमे "वदनादीनां कमलाद्यैरभेदाध्यवसाय" इति वदन्नपि ग्रन्थकारोऽतिशयाख्यफलं निमित्तत्वेन विमृशन् सर्वत्र चातिशयोक्तिभेदेषु तत्तत्त्वं परामृशन्नेव पूर्वोक्तं परिष्कुरुते। दृष्टिभेदेनैवात्रोपसंहारप्रकरणे "न तु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीय" इति वचनम्। विमर्शिनीकारस्तु न केवलं धर्माणामेवापि तु धर्मिणामप्यभेदाध्यवसायो भवतीति स्वमतमवद्धार्यति, स्वमतानुसरणाच्च ग्रन्थेऽसंगतत्वं विभावयति। तथा हि जयरथः— "उपलक्ष्यं (? उपेक्ष्यं) चैतत्। यावता ह्यध्यवसितप्राधान्यमस्या लक्षणम्। तच्च धर्मिणामस्तु धर्माणां वेति को विशेषो येनाव्याप्तिः स्यात्। प्रत्युत धर्मयोरभेदाध्यवसायाभ्युपगमे उपमादीनामप्यतिशयोक्तिप्रसङ्गः स्यात्। तत्रापि धर्माणामेव भेदेऽभेदविवक्षणात्। एवं च विजातीयत्वेन भेदे धर्मयोरप्यव्याप्तिः प्रसज्यत इत्यलमसङ्गतग्रन्थार्थोदीरणेन"[२]।

वस्तुतस्तु नात्र ग्रन्थस्यासङ्गतत्वम्। उत्तरस्मिन्नुपसंहारग्रन्थे प्रयोजकदृशा विचारणात्। समुद्रबन्धश्रीविद्याचक्रवर्तिनौ नात्र किमप्यसङ्गतं

---

१. द्रष्टव्या विमर्शिनी, पृ० ८५-८६

२ विमर्शिनी, पृ० ८८–८९

विभावयतो जयरथस्तु स्वाभिमतमपश्यन् प्रकरणभेदमविचार्यैव ग्रन्थकृदालोचने प्रवर्तते । ग्रन्थस्य साधुत्वात्तदनादृतोऽपि पाठो यथास्थित एवोचितः जयरथविभावितो दोषस्तूपेक्ष्यः । नायं ग्रन्थस्य दोषो, मतभेदोऽयमुभयोः ।

(६) विमर्शिनी-सञ्जीविनीटीकयोरनुसारं श्लेषप्रकरणे ग्रन्थक्रमोऽधोनिर्दिष्टोऽस्ति—

(अ) ···ग्रन्थगौरवभयात्तु पृथग् नोदाहृतम् । (पृ० १७५)

(ब) एष च नाप्राप्तेषु·······तुल्ययोगितायाः प्रतिभानम् । (पृ० १७७-७९)

(स) अलङ्कार्यालंकरणभावस्य ······लोकवद्व्यवस्थापनात् । (पृ० १७५-७७)

मदीये संस्करणे ग्रन्थक्रमस्तु अ. स. ब. क्रमेण वर्तते । अत्रार्थे टिप्पणी (पृ० १७५ टि. १) तत एव द्रष्टव्या ।

(७) अप्रस्तुतप्रशंसायाः प्रकरणे पर्यायोक्तात्तद्भेदं निरूप्य (पृ० १९७) तां साधर्म्येण ग्रन्थकार उदाजहार । उदाहरणानि नोपलभ्यन्ते, केवलं तदुपसंहृतिपरम् "एतानि साधर्म्योदाहरणानि" (पृ० १९७) इत्येतदेवोपलभ्यते । सञ्जीविनीकारस्तु सामान्याद्विशेषप्रतीतौ, विशेषात्सामान्यप्रतीतौ, कारणात्कार्यप्रतीतौ कार्याच्च कारणप्रतीतौ (श्लोकाङ्काः १२६–१२९) यदुदाहृतं तदेव मन्ये साधर्म्योदाहरणत्वेनापि ज्ञेयमित्यभिप्रैति । तथा हि तत्रैव (पृ० १९७) तट्टीका—"अथैतानि चत्वारि साधर्म्योदाहरणत्वेनापि ज्ञेयानीत्याह एतानि साधर्म्यं इति ।" सामान्यविशेषकार्यकारणभावेनोपात्तान्युदाहरणानि कथं साधर्म्येणापि योजयितुं शक्यन्त इति न जानीमः । जयरथस्तु पत्रिकान्तरसंगतत्वादतिदेशवाक्यमिदं केनचिल्लिपिकेन लिखितमुदाहरणपत्रिका च न लिखितेति ग्रन्थलोपं विभावयति[१] । समुद्रबन्धोऽप्येतदभावमुल्लिख्य स्वनिर्मितान्युदाहरणान्युपादत्ते ।

(८) अत्रैव प्रकरणे पुनर्वैधर्म्येण 'धन्याः खलु वने वाताः' (पृ० १९७) इत्याद्येकमेवोदाहरणं दत्त्वा तद्वृत्तौ ग्रन्थकारः "वाच्यस्य संभवे उक्तान्येवोदाहरणानी'ति विवृणोति । अत्र बहुवचनमुदाहरणान्तराभावेऽसंगतं तेन च बहून्युदाहरणानि लिपिकस्यानवधानान्नष्टानीति सुविदितं भवति । विमर्शिनीकारो ग्रन्थस्योदाहरणानि लुप्तानीत्यभिप्रायेण वाच्यस्य सम्भवे त्रीण्युदाहरणानि[१] स्वयमेव दत्त्वा ग्रन्थस्य संगतत्वं व्यवस्थापयति । समुद्रबन्धो-

[१] द्रष्टव्या विमर्शिनी, पृ० १३७-१३८ ।

ऽपि मातृकाभ्रंशमत्र विभावयति। सञ्जीविनीकारस्त्वत्रापि ग्रन्थलोपं न विभावयति। तदनुसारं च पूर्वमुपात्तान्युदाहरणान्येव वाच्यस्य सम्भवे उन्नेतुं शक्यन्त इति तट्टीकातोऽवसीयते। ग्रन्थस्य पाठपरम्पराया यथालोचनं जयरथेन क्रियते, न तथा श्रीविद्याचक्रवर्तिना समुद्रबन्धेन वा।

(९) कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः। तत्र रुय्यकमते कार्यानुत्पत्ति-बाधिका कारणसत्ता च बाध्यमाना। विशेषोक्तिस्वरूपं विवृण्वतो ग्रन्थ-कारस्यैतदेवाभितम्। तथा हि रुय्यकः—"एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम्" (पृ० २३०)।

श्रीविद्याचक्रवर्ती समुद्रबन्धश्च ग्रन्थकृदभिमतमेव समर्थयतः। जय-रथस्तु पूर्वोक्तवचनं लिपिकल्पितमपपाठं[१] मत्वा कार्याभावस्य बाध्यत्वं कारणस्य च बाधकत्वं स्वीकृत्य पूर्वोक्तपाठस्थाने "एवं विशेषोक्तौ कारण-सत्तया कार्याभावस्यैव बाध्यमानत्वमुन्नेयम्"[२] इतिपाठस्यैव ग्राह्यत्वं ग्रन्थ-कृदभिमतत्वं च परिकल्पयति। एतत्पाठपरिकल्पनायाञ्च कारणद्वयमुप-स्थापयति। तत्र प्रथमं तावदिदं यद् रुय्यकः प्रायः सर्वत्रैव स्वपितृ राजानकतिलकस्य मतमलङ्कारमीमांसायामनुसरति। तिलकश्च "कारण-सामग्र्यमिह बाधकत्वेनैव प्रतीयते, कार्यानुत्पत्तिस्तु बाध्यत्वेन"[३] इति मेने। अपरञ्चेदं यत् "हरतापि तनुं यस्य शम्भुना न हृतं बल"मित्यादौ (पृ० २३५) प्रसिद्धे विशेषोक्त्युदाहरणे जयरथानुसारं "बलाहरणेन कार्याभावेन तनुहरणरूपं कारणं न बाध्यते, अपि तु सत्यपि तनुहरणाख्ये (कारण-) सामग्र्ये कथं न बलं हृतमिति कार्याभावस्यैव प्रतीतिः" इति लक्ष्यानु-सन्धानेनापि तिलकोक्तमेव साम्प्रतं मेने। जयरथप्रकल्पितः पाठो ग्रन्थकृतो-ऽप्यासीदिति वक्तुं न शक्यते। न केवलं जयरथेन कार्याभावस्य बाधकत्व-व्यवस्थापकः कारणसत्तायाश्च बाध्यत्वव्यवस्थापकः पाठः (यं हि विमर्शि-नीकार अपपाठ इति मनुते) प्राचीनादर्शेषु दृष्टः किन्तु परवर्तिभ्यां टीका-कृद्भ्यामपि स एव पाठो लक्षितो व्याख्यातश्च। मदीयेऽपि संस्करणे पूर्व एव पाठोऽस्ति, न पुनः जयरथनिर्दिष्टः। रुय्यकेण तिलकस्य सर्वत्रैवानुसरणं न कृतमिति जयरथेन प्रायःपदोपादानादेव स्पष्टीकृतम्। वस्तुतश्च विशेषोक्तौ कार्याभावप्रतीतिरेव प्रामुख्यं भजन्ती कारणसत्तां बाधते।

१ लेखककल्पितश्चायमपपाठः।—विमर्शिनी, पृ० १५८।

२ विमर्शिनी, तत्रैव।

३ विमर्शिन्यां तत्रैवोद्धरणम्।

४ विमर्शिनी, पृ० १५८।

तथा हि पूर्वोक्ते हरतापीत्युदाहरणे बलाहरणरूपः कार्याभाव एव तनुहरणरूपां कारणसत्तां बाध्यत्वेनोपस्थापयति। कारणसत्तायास्तु बाधकत्वे बलाहरणाभावे सचमत्कारता न स्यात्। अत्रापि जयरथः स्वाभिमतमेवोपस्थापयितुं मूलपाठं दूषयन्निव प्रतीयते।

(१०) मदीये संस्करणे विभावनाप्रकरणे ग्रन्थक्रमोऽधोनिर्दिष्टः वर्तते[1]—

(अ) अपि तु तदनुप्राणितत्वेन। (२३१ पृष्ठेऽन्तिमपङ्क्तिः)

(ब) इयं च विशेषोक्तिवदुक्तानुक्त······अत्र सहजत्वं निमित्तं गम्यमानाम् (पृ० २३१-३२)

(स) असम्भृतं मण्डनमिति······परिणाम इत्यद्यतनाः (पृ० २३२-३३)

जयरथानुसारमत्र ग्रन्थविपर्यासो लिपिकेन कृतः। तदनुसारम् असम्भृतमित्यादिको (स) भागः 'अपि तु तदनुप्राणितत्वेन' इति (अ) भागानन्तरमेवोपपन्नः। जयरथनिर्दिष्टदिशा ग्रन्थस्य संस्कारोऽभूत्। स च दक्षिणेषु प्रचारं लेभे। तत एव अनन्तशयनसंस्करणे समुद्रबन्धव्याख्यायाञ्च जयरथनिर्दिष्टः ग्रन्थक्रमः समुपलभ्यते। तथा हि तत्र 'तदनुप्राणितत्वेने'त्यनन्तरम् 'असम्भृतं मण्डनमिति···इति त्वद्यतनाः' इति पाठः। एतदनन्तरञ्च 'इयं च विशेषोक्तिवदि'त्यादिना प्रारभ्य 'अत्र सहजत्वं निमित्तं गम्यमान'मित्यन्तः पाठः। तत्र च जयरथादिष्वदृष्टोऽधिकोऽपि मालाविभावनोदाहृतिपरो ग्रन्थोऽस्ति—'इयं च मालयापि भवन्ती दृश्यते। यथा अनिद्रो दुःस्वप्नः'···इत्यादि[2]। समुद्रबन्ध इव श्रीविद्याचक्रवर्त्यपि 'इयं च मालयाऽपि भवन्ती दृश्यते। यथा—अनिद्रो दुःस्वप्नः···इत्यादिकं ग्रन्थमधिकयति। अधिकञ्चामुमंशम्[3] 'अत्र सहजत्वं निमित्तं गम्यमान'मिति ग्रन्थानन्तरं विनिवेशयति। ततश्चास्मत्संस्करणानुकूलः क्रम एव प्रवर्तते।

वस्तुतस्त्वत्र यथास्थितग्रन्थस्वीकारे न कोऽपि दोषः। जयरथसमये मदीयसंस्करणानुकूलमेव ग्रन्थक्रम आसीत् मालाविभावनोदाहृतिपरो ग्रन्थश्च मूले नासीदिति जयरथकृतपाठालोचनेन तट्टीकातश्च विज्ञायते।

---

१. मदीये संस्करणे २३१-२३३ पृष्ठाङ्काः द्रष्टव्याः।

२. द्रष्टव्यम्, अनन्तशयनसंस्करणे पृ० १४०-१४१। अत्र च २३१-३२ पृ० टि० ६।

३. 'तत्रोक्तनिमित्तोदाहृता' (पृ० २३३) इत्यतः प्राक् असम्भृतमिति प्रतीकोपादानान्मूलग्रन्थपाठः 'तत्रासम्भृतमित्युक्तनिमित्तोदाहृता' आसीदित्यपि तट्टीकातो (पृ० २३२) विज्ञायते।

दक्षिण एव मालाविभावनांशः प्रचचार, जयरथसमये सोंऽशो नासीदिति च सुविदितं भवति ।

(११) असम्भृतं मण्डनमिति, कामस्य पुष्पव्यतिरिक्तमस्त्रमिति च (पृ० २३२-३३)। अत्रालङ्कारविषये बहुधा विप्रतिपत्तयः। तत्र रुय्यकस्य मतेनात्र परिणामः। तथा हि—"आरोप्यमाणस्य प्रकृते सम्भवात् परिणाम इत्यद्यतनाः" (पृ० २३३)। अत्राद्यतनपदेन ग्रन्थकारो रुय्यक एव श्रीविद्याचक्रवर्त्यनुसारमभिप्रेतः[1]। जयरथस्तु परिणामालंकारे प्रकृतोपयोगः, अत्र च तत्सम्भवो वर्णित इति सिद्धान्तदृशा मतमिदं ग्रन्थकारस्य न सम्भवतीति पक्षमिमं लिपिकपरिकल्पितं मनुते। तथा हि विमर्शिनीकारः—

"तृतीयस्तु पक्षो न ग्राह्यः। [2]लेखकपरिकल्पितत्वात्। तथाह्यारोप्यमाणस्य प्रकृते संभव इति न परिणामलक्षणम्। आरोप्यमाणस्य प्रकृत उपयोग इति तस्य लक्षितत्वात्। सम्भवोपयोगयोश्च नैकत्वम्। भिन्नत्वात्। ग्रन्थकृतापि साहित्यमीमांसायामेतच्छ्लोकविवृतौ पक्षद्वयमेवोक्तम्"। —विमर्शिनी, पृ० १६०।

श्रीविद्याचक्रवर्ती सम्भवादिति पदस्य स्थाने 'उपयोगादि'ति पाठं मत्वा सम्भवपदस्य वात्रोपयोगरूपमर्थं विभाव्य स्वव्याख्याने प्रवर्तते[3]। समुद्रबन्धस्तु "प्रकृते सम्भवादिति" प्रतीकोपादानेन (अनन्तशयनसंस्करणे, पृ० १४०) सम्भवादित्येव पाठः इति स्पष्टयति। तदनुसारमपि सम्भवपदस्योपयोगित्वरूप एवार्थः। तथा हि—"आरोप्यमाणस्य मण्डनादेः प्रकृते देवीशरीरयष्टावुपयोगित्वादित्यर्थः" इति तस्य व्याख्यानम्।

(१२) "धवलो सि जइ वि" इत्यादौ प्राकृतोदाहरणे (पृ० ३१४) प्रथमार्धे रुय्यकदृशाऽतद्गुण एवालङ्कारः। तदनुसारी चास्मत्संस्करणपाठः "धवलोऽसीति त्वतद्गुण एव" इति (पृ० ३१५) वर्तते। जयरथस्त्वत्रातद्गुणस्थाने तद्गुणपदं पठित्वा एतद्ग्रन्थैकदेशं कल्पितं विभावयति प्राकृतो-

---

१ अद्यतना इति आचार्यः स्वात्मप्रमुखान्वक्ति।—सञ्जीविनी, पृ० २३३।

२ लिपिकृते लेखकशब्दस्यैव प्रयोगो विमर्शिनीकृता सर्वत्र कृतः।

३ आरोप्यमाणस्य मण्डनादेर्वयोरूपे प्रकृते प्रतिपत्तिरूपादुपयोगात् परिणामोऽयम्। मण्डनादिकं हि वयोरूपोपग्राहि प्रतिपत्तिकर्मत्वेनोपयुज्यते। —सञ्जीविनी, पृ० २३३।

दाहरणे च विभावनालङ्कार इति विषमालंकारनिषेधमुखेन स्वमतमप्युद्घाटयति—

"धवलोऽसीति तु[१] तद्गुण एवेति। ग्रन्थैकदेशस्तु क्वचिल्लेखकैः कल्पित इत्युपेक्ष्य एव। पुस्तकान्तरेष्वस्यादृष्टेः। न च गाथाव्याख्यानं प्रस्तुतं येनात्रालंकारान्तरस्यापि व्याख्यानं स्यात्। नाप्यत्र तद्गुणः। तस्य हि स्वगुणत्यागेनाप्यन्यगुणस्वीकारो लक्षणम्। न चात्र स्वगुणत्यागो नाप्यन्यगुणस्वीकारः। तस्य धवलत्वव्यभिचारात्। किन्त्वत्र कारणाभावेऽपि कार्योत्पादनाद्विभावना, न तु विरूपकार्योत्पत्त्या विषमालंकारः"।
—विमर्शिनी, पृ० २१५।

अतद्गुणपाठस्वीकारे (स एव च पाठः श्रीविद्याचक्रवर्तिना समुद्रबन्धेन[२] च स्वीकृतः) न कामप्यसङ्गतिं पश्यामः। धवलताहेतौ सत्यपि धवलत्वगुणाननुहारो 'मज्झ रंजिअं हिअअम्' इति वर्णनेन स्पष्टीभवत्यतोऽत्रातद्गुणालंकारस्वीकरणेन न कापि हानिः।

जयरथस्तु 'तद्गुण' इति भ्रान्त्या पठित्वा ग्रन्थैकदेशदोषमुत्पादयामास। विभावनां चात्र अतद्गुणालङ्कारस्थाने निरूपयामास। पुनश्चात्र ग्रन्थकृता विषमालङ्कारस्य निषेधः कृतो विशेषोक्तेर्वेत्यपि शङ्कोदेति। कारणविरूपकार्योत्पत्तिदृशा प्रसक्तस्य विषमालंकारस्य निषेध इति श्रीविद्याचक्रवर्तिसमुद्रबन्धटीकाभ्यामवसीयते। जयरथस्तु विषमालंकारनिषेधो नात्राभिमतो विशेषोक्तिनिषेधस्यैवाभिमतत्वादिति "विषमालंकार इति पाठस्तु पुस्तकान्तरेषु स्थितोऽप्यत्रायुक्तः। न हि कार्यकारणभावविवक्षामात्रेणात्र तत्त्वं स्याद्येन तन्निषेधेन तस्यानवकाशः[३]"। कार्यकारणभावस्य सम्भवतामादायास्मिन्नुदाहरणेऽलंकारसारकारो विशेषोक्त्यलंकारं व्यवस्थापयामास[४]। तन्मतनिषेधपरत्वेन विशेषोक्त्यलंकारनिषेध एवात्र प्रासङ्गिक इति जयरथ ऊहते। अत्रोभयोरप्यलङ्कारयोर्निषेधः कर्तुं शक्यते कार्यकारणभावविवक्षा विभावनायामिव विशेषोक्तावेव भवति न पुनस्तथा विषमे। तदेवं विशेषोक्तिनिषेधः स्वारस्यमादधाति विरूपकार्योत्पत्तिदृशा च विषमनिषेधः। उभयोरपि पाठयोरतोऽत्र तुल्यप्रमाणता।

(१३) 'देवि क्षपा गलती'त्युदाहरणवृत्तौ (पृ० ३५८) द्विधा पाठ उपलभ्यते। एकस्तु "अत्र हि विजातीययोरुपमोत्प्रेक्षयोः संसृष्टिः"। अपरश्च

१ मुद्रणदोषादत्र 'धवलोऽसीति। तत्तद्गुण···' इत्यादिर्दृश्यते।
२ द्रष्टव्या समुद्रबन्धव्याख्या (अनन्तशयनसंस्करणम्), पृ० १९३।
३ विमर्शिनी, पृ० २१५। ४ द्रष्टव्यं तत्रैव।

"अत्र सजातीययोरुपमयोः संसृष्टिः"। जयरथदृशा प्रथम एव पाठो ग्राह्यः। स एव तद्दृष्टेषु प्राचीनपुस्तकेषु सुस्पष्टतया तेनोपलब्धः। किन्त्वन्येन जयरथपूर्वभाविना केनचित् द्वितीयं पठित्वा 'अत्र चोद्यं करिष्यामि' इत्याशयेन पाठालोचनं कृतमासीत्[१]। अयमेव द्वितीयो जयरथेनाशुद्ध इत्युद्घोषितः पाठः शा१ पुस्तके श्रीविद्याचक्रवर्तिटीका-तश्च प्राप्यते। समुद्रबन्धस्तु जयरथस्वीकृतं पाठमेव गृह्णाति[२]। मयापि जयरथसमुद्रबन्धादिषूपलब्धः "अत्र विजातीययोरुपमोत्प्रेक्षयोः संसृष्टिः" इत्येव पाठः स्वीकृतः।

(१४) श्रीविद्याचक्रवर्तिना 'देवि क्षपा गलती'त्यादिपद्ये सजातीयोपमयोः संसृष्टिर्व्याख्यातेति साम्प्रतमेवावोचाम। तदनु 'लिम्पतीवे' त्युदाहरणे उपमोत्प्रेक्षयोर्विजातीययोः संसृष्टिं व्याख्याञ्चक्रे[३]। जयरथस्तु पूर्वत्र 'देवि क्षपा गलती'त्यादौ विजातीयसंसृष्टेरुदाहृतत्वादुत्तरत्र सजातीययोरुत्प्रेक्षयोः संसृष्टिं मनुते। समुद्रबन्धस्तु प्रथमार्धे सजातीययोरुत्प्रेक्षयोर्द्वितीयार्धे चोत्प्रेक्षोपमयोर्विजातीयसंसृष्टिं व्याख्याति[४]। त्रयोऽपि टीकाकारास्त्रिधा पाठमुपाददते।

लिपिकस्य प्रमादानवधानहेतोः प्रकीर्णपुटकलिखितत्वाच्चालङ्कारसर्वस्वपाठः प्रारम्भादेव विपर्यस्तोऽभूदिति जयरथालोचनाद्विभावयितुं शक्यते। विमर्शिनीकारः पाठालोचनव्याजेन बहुत्र स्वमतमेवोपोद्बलयितुं प्रवृत्तो भवतीत्यप्यस्माभिर्दृष्टम्। तत्कृतञ्चालोचनं परस्तात् मूलग्रन्थनिर्धारणे प्राचीनमातृकालेखने च साहाय्यकमभूदित्यपि न पुनर्वचनमपेक्षते। ग्रन्थस्य पाठालोचनञ्च विमर्शिन्यामेव प्राप्यते न पुनरन्यत्र। जयरथस्य ग्रन्थकृद्देशभवत्वात्कालदृशाऽपि ततो नातिदूरं वर्तित्वाच्च बहूनि प्राचीनपुस्तकानि सुलभान्यासन्, न तथा श्रीविद्याचक्रवर्तिनः समुद्रबन्धस्य वा। तत एव परवर्तिनावुभावपि पाठविषये साधिकारं किमपि वक्तुं नार्हतः। जयरथादिसूचितग्रन्थविपर्यासादिविचारेणेदमपि फलितं भवति यत्सर्वेषां टीकाकृतामादर्शपुस्तकानि न नितरामेकरूपाण्यासन्।

---

[१] द्रष्टव्या विमर्शिनी पृ० २४७।

[२] द्रष्टव्या समुद्रबन्धव्याख्या, पृ० २१६।

[३]. द्रष्टव्या, सञ्जीविनी।

[४]. द्रष्टव्या, समुद्रबन्धव्याख्या, पृ० २१६।

अत एव केचिदंशाः एकत्र उभयत्र वा प्राप्ता अपि सर्वत्र तथैव न प्राप्यन्ते। तथा हि "प्रत्यक्ता मधुनेवे'ति विनोक्तेः(पृ० १३८)उदाहरणान्तरमनन्तशयनपाठ एव प्राप्यते, न पुनर्विमर्शिन्यां सञ्जीवनीटीकायां वा; "जये धरित्र्याः" (पृ० २६२) इत्याद्युदाहरणञ्च निर्णयसागरसंस्करणे (पृ०१८०) प्राप्तमपि अनन्तशयनसंस्करणे, श्रीविद्याचक्रवर्तिटीकायाञ्च न प्राप्यते। "परहिअअं मग्गन्तीइ" (पृ० २४५) इत्याद्युदाहरणं विषमालङ्कारस्य शुद्धोदाहरणत्वेनास्मत्पुस्तकेषु निर्णयसागरसंस्करणे च दृष्टमपि श्रीविद्याचक्रवर्तिटीकायां समुद्रबन्धव्याख्याने अनन्तशयनसंस्करणे च न दृश्यते। विमर्शिनीकारस्तूदाहरणानां बहुत्र प्रतीकोपादानं न कुरुत इति तस्य पाठस्त्वविदित एव। "णाराअणोत्ती"त्यादि (पृ० ७३) उल्लेखालङ्कारस्योदाहरणान्तरं। सर्वत्र सञ्जीविन्यादिषूपलभ्यते। अभेदे भेदरूपाया अतिशयोक्तेश्चोदाहरणान्तरं 'मग्गिअलद्धम्मि' इत्यादिकमेव विमर्शिन्यां समुद्रबन्धव्याख्याने च दृश्यते न पुनः सञ्जीविन्याम्। विभावनाप्रकरणे ग्रन्थक्रमः सर्वत्रैव भिन्नः। तत्र च मालाविभावनोदाहरणरूपोंऽशश्च समुद्रबन्धश्रीविद्याचक्रवर्तिटीकयोरुपलब्धोऽपि विमर्शिन्यां नोपलभ्यते। इत्येत्सर्वं मनसि निधायैव मे मतिर्भवति यदलङ्कारसर्वस्वपाठपरम्पराया सर्वथा एकरूपत्वं नास्ति, जयरथकालादेव च तत्र विपर्यासादिकं प्रारेभे। जयरथश्च मूलपाठलोचनं विधाय मूलपाठपरिष्कारे कृतयोगोऽपि न सर्वथा तदनुवर्तिभिरनुसृतः। अत्रोपन्यस्तं संस्करणं मूलपाठान्वेषणे यथासम्भवं सहायकं भविष्यतीति विश्वसन् प्रकृतमुपसंहरामः।

## अलङ्कारसर्वस्वकारो राजानकरुय्यकः

साहित्यदर्शनपरागोत्पत्तिभूमौ काश्मीरदेशे खिस्तीयद्वादशशतकमध्यार्धे (११२५-११७५ खिस्ताब्दमध्ये) लब्धजन्मा रुचकापरनामा रुय्यकः स्वपितुः काव्यालङ्कारसंग्रहविवृतिकाराद्राजानकतिलकात्सर्वालङ्कारोपनिषत्क्रममधिजज्ञ इति तद्वचनादेवावसीयते[१]। स्वपितरं चालङ्कारमीमांसायां प्रायेणानुसरतीति तट्टीकाकारो जयरथः प्रमाणम्[२]। तेन प्रणीतेषु

---

१. ज्ञात्वा श्रीतिलकात्सर्वालङ्कारोपनिषत्क्रमम्।
काव्यप्रकाशसङ्केतो रुचकेनेह लिख्यते ॥
—रुय्यकप्रणीते काव्यप्रकाशसङ्केते मङ्गलाचरणम्।

२. द्रष्टव्या, विमर्शिनी, पृ० १४६,१५८,२५७।

द्वादशग्रन्थेषु पञ्चैव प्रकाशं प्राप्ताः। एते च सहृदयलीला, साहित्यमीमांसा, अलङ्कारसर्वस्वम्, काव्यप्रकाशसङ्केतः, व्यक्तिविवेकव्याख्यानं च विद्यन्ते। अपरे ग्रन्थास्तु तद्वचनाज्जयरथवचनाच्च नामत एव श्रूयन्ते।[१]

सर्वेष्वेतेषु ग्रन्थेष्वलङ्कारसर्वस्वमेव तद्यशसः सर्वस्वम्। एष ग्रन्थः ११३५ तमे खिस्ताब्दे तेन रचित इत्यैतिहासिकाः।

अलङ्कारसर्वस्वं हि सूत्रवृत्त्यात्मकम्। तत्सूत्राणि सर्वस्वसूत्राणि, अलङ्कारसर्वस्वसूत्राणि, अलङ्कारसूत्राणि (केवलं वा सूत्राणि) इति पदैरलङ्कारग्रन्थेषु टीकाग्रन्थेषु मातृकासु च स्मर्यन्ते। एषां संख्या सप्ताशीतिर्वर्तते। कैश्चिद् द्वितीयपर्यायलक्षणपरमेकषष्टिसंख्याकं सूत्रं सूत्रत्वेन नोपादीयत इति तैरलङ्कारसूत्राणां संख्या षडशीतिरेव मन्यते। एभिः सूत्रैः पञ्च शब्दालङ्काराः पञ्चसप्तत्यर्थालङ्काराश्च लक्षिताः। तेषु च विचित्रविकल्पपरिणामादयोऽभिनवा अलङ्कारा अप्युन्मीलिताः। ग्रन्थारम्भे प्रथमश्लोकस्य द्वितीयार्धे "निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते" इति वदन् रुय्यकः वामन "काव्यालङ्कारसूत्राणां स्वेषां वृत्तिर्विधीयते" इति वामनोक्तमेवानुसरन् प्रतीयते। विरोधसूत्रमुभयत्र तदेव—"विरुद्धाभासत्वं विरोधः"[२] इति। अनन्वयसूत्रमपि तथैवोभयत्र समानम्। विद्याधर-विद्यानाथ-विश्वनाथ-जगन्नाथप्रभृतिभिः अलङ्कारसूत्राण्येवानेकत्र स्वलक्षणेष्वनुसृतानि। काव्यप्रकाशे साहित्यचूडामणिकारो भट्टगोपालोऽलङ्कारप्रकरणे रुय्यककृतान्यलङ्कारसूत्राणि प्रायेण सर्वत्रोद्धरति। मल्लिनाथ-कुमारस्वामि-राघवभट्टप्रमुखाश्चापरे टीकाकारा अलङ्कारलक्षणोपन्यासे बहुत्र रुय्यकसूत्राण्येवोपाददते। अलङ्काराणां स्वरूपनिरूपणदृशा सर्वस्वसूत्राणि बहुभिः कारणैः काव्यप्रकाशकारिका अतिशेरते। अत एवाह जयरथः—

न परैरीदृंशि सूत्राणि कृतानि। विमर्शिनी, पृ० ३।

निजालङ्कारसूत्राणां तात्पर्यं विवृण्वता रुय्यकेन स्ववृत्तौ विभिन्नकाव्येभ्यः षट्सप्तत्युत्तरं शतद्वयमुदाहरणानि दत्तानि। तेषु च स्वशिष्य-

१. रुय्यकजयरथसूचिता रुय्यकप्रणीता अप्यद्यावध्यप्राप्ताः ग्रन्थास्तु सन्ति-नाटकमीमांसा, अलङ्कारानुसारिणी, अलङ्कारमञ्जरी, अलङ्कारवार्तिकम् श्रीकण्ठस्तवः (काव्यम्), हर्षचरितवार्तिकम्, बृहती (कश्चन टीकाग्रन्थो यो पूर्ण एव नाभवदिति सम्भावये) च।

२ काव्यालङ्कारसूत्रम् ४।३।१२। अलङ्कारसूत्रसंख्या, ४०।

प्रणीताच्छ्रीकण्ठचरितादप्युदाहरणानि ग्रहीतानि । पुनरुक्तवदाभासप्रकरणे च अहीनभुजगाधीशेत्यादीनि चत्वार्युदाहरणानि स्वप्रणीताच्छ्रीकण्ठस्तवकाव्यादपि संग्रहीतानि । अलङ्कारसर्वस्वस्य महद्वैशिष्टचं वर्ततेऽत एव परवर्तिभिः प्रायेण सर्वैरेवालङ्कारिकैरेतन्मतमामृश्यते । अत्यन्तं प्रथितत्वादेव चास्य केवलं सर्वस्वमिति नाम प्रसिद्धिं प्राप । तत्प्रणेता च सर्वत्रालङ्कारसर्वस्वकार इति सर्वस्वकार इति वा सादरं स्मर्यते । प्रसिद्धत्वादेव च प्रणयनकालादारभ्य राजानकशोभाकरेण तदनन्तरमेव भाविनाऽस्य प्रातिपद्येनालोचनं स्वग्रन्थेलङ्काररत्नाकराख्ये कृतम् । शोभाकरेण विभावितान् दोषांश्च जयरथः (यो हि रुय्यकात् पञ्चसप्ततिवर्षाभ्यन्तर एव तद्देशं स्वजन्मनाऽलञ्चकार) प्रातिपद्येन निरासत । तच्छिष्येण मङ्खकेनास्य किञ्चित्परिष्कारः कृतो येनैव दक्षिणेषु केचन अलंकारसर्वस्वं मङ्खप्रणीतत्वेन स्वीचक्रुः ।

तथा हि तत्रत्यष्टीकाकारः समुद्रबन्धः सूत्राणि तद्वृत्तिश्चोभयमपि 'मंखुकोपज्ञत्वेन' 'मंखुकग्रन्थत्वेन' 'मंखुककृतित्वेन' वा स्मरति[1] । तुंगभद्रनामा कश्चिदन्योऽपि तथैव सर्वस्वस्य मंखुकप्रणीतत्वं स्वीचकार । दाक्षिणात्यपुस्तकेषु च केषुचिन्मंखुककृतित्वसूचकः श्लोकोऽपि ग्रन्थान्ते प्रचचार । स चायम्—

इति मंखुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥

रुय्यकात्पञ्चसप्ततिवर्षानन्तरमेव तद्देशे लब्धजन्मा जयरथस्तु स्पष्टमेवालङ्कारसर्वस्वस्य रुय्यकप्रणीतत्वं 'निजेति' पद टीकायां स्वीकरोति ।

सहृदयलीलायाः पुष्पिका निगदमेव रुय्यकमलङ्कारसर्वस्वकारत्वेन स्मरति ।[2] मया परीक्षितेषु प्राचीनादर्शेष्वपि रुय्यकप्रणीतत्वमेव 'निजेति'-

---

[1] समुद्रबन्धदृशा सूत्राणि वृत्तिश्चैकेनैव प्रणीतानि । स च मङ्खक (मङ्खः शुद्धं नाम) एव । तथा हि समुद्रबन्धः—

(अ) अस्य विषमस्य सामान्यलक्षणं स्वयमेव वक्ष्यति 'अननुरूपसंसर्गो हि विषम'मिति । समुद्रबन्धव्याख्या, पृ० १४७ । अन्यत्र च—

(ब) स्वकण्ठेनानुक्तिशङ्कानिरासाय संक्षेपत इति पदस्यान्वयप्रदर्शनमुखेन व्याचष्टे ।—समुद्रबन्धव्याख्या, पृ० २२७ ।

[2] "तथा हि कविवरजह्लणकृते सोमपालविलासे । × × × × अस्यार्थः श्रीराजानकरुचकविरचितायामलङ्कारानुसारिण्याम्—'भृङ्गारो हेमकशौ ।

पाठोपलम्भात् फलति। काश्मीरदेशोद्भवा अपरेऽपि (तन्नामग्रहणमन्तराऽपि) सूत्रवृत्तिभागयोरेककर्तृकत्वख्यापनेन रुय्यकमेवालङ्कारसर्वस्वकारं ख्यापयन्ति। तथा हि जयरथात्प्राक्तनः श्रीशोभाकरः स्वालङ्काररत्नाकरेऽलङ्कारसर्वस्वं (सूत्रवृत्त्यात्मकमेकमेव ग्रन्थं मत्वा) प्रातिपद्येन विखण्डयति। स्तुतिकुसुमाञ्जलिटीकायां लघुपञ्चिकाख्यायां राजानकरत्नकण्ठः श्रीराजानकरुचकविरचितामलङ्कारानुसारिणीमेकत्र स्मरति[१], तट्टीकायामेव चान्यत्रालङ्कारसूत्रमप्युल्लिखति—

अनञ्जनमिति। × × × अत्र विभावनालङ्कारध्वनिः। 'कारणाभावे कार्योत्पत्तिर्विभावना' इत्यलङ्कारसर्वस्वकारः।—स्तुतिकुसुमाञ्जलिटीका लघुपञ्चिका, पृ० १९६।

इदमप्यवधेयं यन्मङ्खं कोषकारत्वेन ('इति मङ्खः' इति शब्दैः) बहुत्र स्वटीकायां स्मरन्नपि रत्नकण्ठः कुत्रापि मङ्खमालङ्कारिकत्वेन न स्मरति। वस्तुतः शोभाकरादारभ्य पण्डितराजादिपर्यन्तं संस्कृतस्य कोऽप्यन्यः प्रसिद्धो ग्रन्थकारष्टीकाकारो वा मङ्खं तथा न स्मरति। केवलं समुद्रबन्धस्य पाठपरम्परायां, श्लेषस्य सर्वालङ्कारबाधकत्वप्रकरणे च चित्रमीमांसायां[२] तन्नामालङ्कारशास्त्रे श्रूयते।

अन्यैस्तुः प्रायः सर्वैरेवालङ्कारिकैः रुय्यक एव अलंकारसर्वस्वकार इत्यास्थीयते। दक्षिणेषु लब्धजन्माऽपि श्रीविद्याचक्रवर्ती न समुद्रबन्धपाठपरम्परामनुसरतीति प्रागेवावोचाम। सञ्जीविन्यां सम्प्रदायप्रकाशिन्यां च सः रुय्यकमेव (यं हि रुचक इति संस्कृतनाम्ना स सर्वदा स्मरति) अलङ्कारसर्वस्वकारत्वेन प्रख्यापयति। 'रुचकाचार्योपज्ञे सेयमलङ्कारसर्वस्वे' 'निजानां स्वेनैव प्रणीतानामलङ्कारसूत्राणाम्' 'इत्थं भूम्ना रुचकवचसां विस्तरः कर्कशोऽयम्' इत्यादिना सञ्जीविन्यां, "तदुक्तमलङ्कारसर्वस्वकृता—भावोदयभावसन्धिशबलताश्च पृथगलङ्काराः" इत्यादिभिश्च बहुशः सम्प्र-

---

रतिप्रीती कामभार्ये अपि। निधेः सर्वस्वायमानत्वाद्रूपकमेव दृष्टम्"।—लघुपञ्चिका (स्तुतिकुसुमाञ्जलिटीका), पृ० ५५, अच्युतग्रन्थमालाकार्यालयः, काशी, (द्वितीयावृत्तिः), संवत् २०२१।

१ तत्रैव द्रष्टव्याः पृष्ठाङ्काः—३, ५, १२-१५, १८, २२-२४, ३१, ४३, ४५, ४९, ५१, ६३, ६५, ६६, ७१, ७८, ७९, १०६, १३५, १४७, १६०, १९६, २२०, २३६।

२ द्रष्टव्यं निर्णयसागरसंस्करणे चित्रमीमांसा, व्यपृ० ११।

दायप्रकाशिन्यां[१] रुय्यकोपज्ञत्वमेव सर्वत्र प्रथयतितमाम् । काव्यप्रकाशस्य काव्यादर्शसङ्केतटीकाकृत् भट्टसोमेश्वरः (यो हि रुय्यकसमकालिकस्तद्देशीयश्चास्ति यस्य चैका काव्यप्रकाशिका मातृका 'संवत्१२८३ वर्षे आषाढवदि १२ शनौ लिखितमिति' निर्देशानुसारम् १२२६ खिृस्ताब्दे शनिवासरे पञ्चविंशतिदिनाङ्के ईशवीयगणना भवति) चतुर्थोल्लासप्रारम्भे रुय्यकस्यालङ्कारसर्वस्वाद्भूमिकाभागं किञ्चिद्भेदेनाक्षरश उल्लिखितम् ।[२] सोमेश्वरप्रणीतस्यकाव्यादर्शसङ्केतस्य नामोल्लेखं विनैव रुय्यककृतेन काव्यप्रकाशसङ्केतेन सह बहुत्र साम्यमस्ति ।[३] रुय्यकसमय एवेयं कृतिः सर्वैस्तत्रत्यैष्टीकाकारैः सादरमुल्लिख्यते स्मेत्यनेन सुस्पष्टं भवति ।

इत्थं सोमेश्वर-शोभाकर-जयरथ-रत्नकण्ठादीनां काश्मीराणामाचार्याणां, बहुसम्मतपाठपरम्परायाः, आलङ्कारिकाणां, टीकाकृतां च प्रामाण्येन रुय्यक एव सूत्रवृत्त्यात्मकस्यालङ्कारसर्वस्वस्य कर्ता । मङ्खः स्वगुरोर्ग्रन्थपरिष्कारात्तत्कर्तृत्वेन दाक्षिणात्यपरम्परायां कैश्चिदेव स्वीकृतो न पुनः सर्वैरिति सर्वमवदातम् ।

अलङ्कारप्रकरणग्रन्थोऽयं सर्वानपि तद्विषयकान्ग्रन्थानतिशेत इति धिया तस्य वैशिष्टयं विवर्णयिषुर्विमर्शिनीकारः प्राह—

एवं ग्रन्थसंक्षेपेणापि विस्तृत एव यथासम्भवि स्वरूपमुक्तमिति प्राच्यालङ्कारग्रन्थेभ्योऽस्य वैलक्षण्यमपि ध्वनितम् । तत्र ग्रन्थविस्तरेणाप्येतत्स्वरूपस्यानभिधानात् ।—विमर्शिनी, पृ० २५६ ।

अपरञ्च—

न ह्येवंविधमभिधायकं प्रकरणान्तरमस्ति । तस्यान्विष्यमाणस्याप्युपलम्भयोग्यस्यानुपलम्भात् ।—तत्रैव, पृ० ३ ।

---

[१] अत्रार्थे द्रष्टव्याः अनन्तशयनसंस्करणपृष्ठाङ्काः—२८९, ३१७, ३४८, ३७४, ४५० ।

[२] तुलनार्थं द्रष्टव्यम्—(क) अलङ्कारसर्वस्वम् (मदीयम्) पृ० २–४, ६–१६; (ख) काव्यप्रकाशः (प्रथमो भागः) पृ० ३६–३७, राजस्थान-प्राच्यविद्याप्रतिष्ठानं, जोधपुरम्, खिृस्ताब्दः १९५९, सम्पादकः रसिकलालछोटालालपरीखः

[३] द्रष्टव्यम्—तत्रैव काव्यादर्शसंकेतसमवेते काव्यप्रकाशे (द्वितीयभागे) ब परिशिष्टम्, पृ० ८७-११० ।

सम्प्रदायप्रकाशिन्यां च श्रीविद्याचक्रवर्ती—

सेयमलंकारमीमांसासूक्ष्मेक्षिका तेषामेव गोचरा यैरेवालंकारसवस्वं सुपरिशील्य विशेषाय काव्यप्रकाशहृदयं निर्ज्ञातम् ।—सम्प्रदायप्रकाशिनी (द्वितीयभागः), पृ० २८९ ।

काव्यप्रकाशमिवालंकारसर्वस्वमपि सर्वैरनन्यसाधारणेनादरणेनाधीयते स्म । तत एव सञ्जीविनीकार उभयोरपि टीकां व्यधात् ।

काव्यप्रकाशेऽलंकारसर्वस्वे च विपश्चिताम् ।
येनादरो महांस्तेन व्याख्यातमुभयं ततः ॥

## अलङ्कारसर्वस्वटीकाकाराः

**अलकः** अलङ्कारसर्वस्वस्य चतस्रस्टीका विज्ञायन्ते । रत्नकण्ठस्य काव्यप्रकाशटीकायां सारसमुच्चयाऽख्यायां राजानकोऽलकः सर्वस्वटीकाकारत्वेन स्मृतः[१] । तस्य टीकाद्यावधि नान्यत्र कुत्रापि स्मृता प्राप्ता वा । अयमलकः हरविजये बिषमपदोद्योतटीकाकार आसीदिति केचन, अपरे पुनः स एव काव्यप्रकाशस्य दशमपरिच्छेदांश पूरक इति, अन्ये तु कल्याणस्य (संभवतः कल्हणस्य) गुरुः सान्धिविग्रहिकः अलकदत्त एवालक इति व्याचक्षते । रुय्यकेन काव्यप्रकाशटीका संकेतनाम्ना कृता । काव्यप्रकाशपूरकः अलक एव यद्यलङ्कारसर्वस्वटीकाकारोऽपि स्वीक्रियते तर्हि उभावप्यन्योन्यस्य टीकाकारौ सिध्यतः । अलङ्कारसर्वस्वं रुय्यकेण स्वप्रौढे वयसि लिखितं, तदेव च तद्वृद्धेनालकेन काव्यप्रकाशैकदेशकारेण टीकितमित्यसमञ्जसं प्रतिभाति । अयमलकः स एव भवत्वन्यः कश्चिद्वा परं तस्य समयस्तु रुय्यकसमय एव वर्तते । यतो हि रुय्यकानन्तरं शोभाकरमित्रोक्तं बहुत्र खण्डयति, तद्दूषणोद्धारं च विमर्शिनीकारः कुरुते । जयरथश्च रुय्यकात्पञ्चसप्ततिवर्षानन्तरमेव बभूव ततोपि प्राग्भवः शोभाकर इति तत्प्राग्भवोऽयमलको खिस्तीयद्वादशशताब्दया प्रथमार्धे आसीदेवेति वक्तुं सुशकम् ।

**जयरथः** अलङ्कारसर्वस्वस्य सुविश्रुतष्टीकाकृज्जयरथ एव वर्तते । तेन जोनराजस्य पृथ्वीराजविजयात् (पृथ्वीराजस्यावसानतिथिः खिस्तीये ११९३ तमे वर्षे ऐतिहासिकैर्निर्णीता) उदाहरणं दत्तम् । ततश्चास्य स्थितिर्द्वादशशतकस्यान्ते त्रयोदशशतकस्य च प्रथमार्धेऽभवदिति निश्चप्रचम् । जयरथस्य अलङ्कारसर्वस्वटीका 'अलङ्कारविमर्शिनी' केवलं विमर्शिनीनाम्नैव सुविश्रुता । अनेना-

---

[१] अत्रार्थे द्रष्टव्यम्—(क) 'पीटर्सन रिपोर्ट' (२) पृ० १७, (ख) वी० राघवन्महोदयस्य च "भोजस् श्रृङ्गारप्रकाश", पृ० ३८० ।

लङ्कारसर्वस्वमनुसरता अलङ्कारोदाहरणमपि[१] पौत्रस्य सुखावबोधाय वार्द्धक्ये प्रणीतम्। तथा हि तत्रैव —

प्रतिज्ञामात्रमेवैतदित्युपेक्ष्यं विचक्षणैः।
अलङ्कारविमर्शिन्यां युक्तिरुक्तचरात्र यत् ॥
सङ्गकमुद्दिश्य निजं सत्यपि बाल्ये श्रुतार्थिनं पौत्रम्।
अलिखन्निखिलालङ्कृतिसिद्धान्तं जयरथः स्फुटार्थपदम् ॥

—द्रष्टव्या अलंकारमीमांसा, पृ० ४९।

जयद्रथनामा तद्बन्धुरपि हरचरितचिन्तामणिकारत्वेन प्रसिद्धः। जयरथ एवाभिनवविरचिते तन्त्रालोके विवेकनाम्ना टीकामपि प्रणिनाय। स्ववंशादिवर्णनं तत्रैवानेन विस्तरशः कृतमिति तत एव मदीयालङ्कारमीमांसाग्रन्थतो वाऽवधार्यम्।

अलङ्कारविमर्शिनी स्वाभिख्यां विशिष्य चरितार्थयति। अत्र शोभाकरमित्रेणोद्भावितानां दोषाणामुद्धारस्तु कृत एव, बहुत स्वतन्त्रविमर्शैः पाठलोचनचर्चाभिश्च ग्रन्थस्य परिष्कारः समालोचनञ्चापि विहितम्[२]। वस्तुतस्त्वयं टीकाकारो ग्रन्थार्थव्याचक्षणे न तथा तत्परो यथा खण्डनमण्डनादिषु।

## विवृतिकारः समुद्रबन्धः

अलङ्कारसर्वस्वं स्वमहिम्ना काश्मीरेषु सपद्येव यशो लेभे, दक्षिणेष्वपि तन्महदादरं प्राप। त्रयोदशशतकस्य मध्यार्धे कोलम्बनृपतेः रविवर्मणः (तस्य जन्मकालः १२६५ तमे ख्रिस्ताब्दे स्वीक्रियते) सभायामयं टीकाकारो बभूव। अनेन यमकोपमारूपकोल्लेखदीपकसहोक्तिश्लेषाप्रस्तुतप्रशंसाविरोधव्याजस्तुतिविचित्रयथासंख्यसमुच्चयतत्करभाविकसंसृष्टचाद्यलङ्कारेषु[३] स्वरचितानि बहून्युदाहरणानि ग्रन्थार्थं व्याचिख्यासता दत्तानि। सर्वाण्येवैतान्युदाहरणानि यदुनाथस्य कोलम्बाधिपतेः रविवर्मण एव स्तुतौ सन्ति। अनेन कृताऽलङ्कारसर्वस्वव्याख्या 'मङ्खुकनिबन्धविवृतौ विहितायामिह समुद्रबन्धेन' इत्यादौ विवृतिनाम्ना स्वयमेवाभिहिता। विवृति-

---

१ अलङ्कारोदाहरणविषये विशेषतो जिज्ञासुभिः मदीया 'अलङ्कारमीमांसा' द्रष्टव्या।

२. द्रष्टव्या मदीया अलंकारमीमांसा, पृ० ५५-६८।

३. द्रष्टव्या समुद्रबन्धव्याख्या, पृ० १०-१९, २२-२४, ३४-३५, ४५, ७०, ८०-८१, १०४, ११७, १३६, १४९, १५१, १६७, १८१, १८४: १९६, २०५, २१७, २२६।

श्चेयं सर्वत्र ग्रन्थार्थव्याचक्षणे एव प्रवणा, विमर्शिन्यामिवास्यां विमर्शस्तु दुर्लभ एव। आमुखे 'विशिष्टौ शब्दार्थौ काव्य'मिति काव्यलक्षणं स्वीकृत्य तेनालंकारशास्त्रस्य प्रस्थानानां वैशिष्टचमुखेन समन्वयो विहितः[१]। तेनालङ्काराणां विभागोपविभागविस्तारे प्रायः सर्वत्र मम्मटस्य काव्यप्रकाशरीतिरेवानुसृता, स्वनिर्मितान्युदाहरणानि च दत्तानि। इतः परमन्यदपि वैशिष्टचमस्य विवृतेः। स्वव्याख्याप्रसङ्गतः समुद्रबन्धेन बहुत्र व्याख्यान्तराण्यपि लिखितानि तैश्चापराऽपि काचिद्दाक्षिणात्यटीका (जयरथश्रीविद्याचक्रवर्तिनोर्भिन्ना) तस्मै सुलभाऽऽसीदिति विज्ञायते[२]।

## सञ्जीविनीकारः श्रीविद्याचक्रवर्ती

विमर्शिनीव प्रौढाऽपि समुद्रबन्धविवृतिरिव सरला, सविमर्शा, ग्रन्थार्थव्याचक्षणविचक्षणा च सञ्जीविनी वर्तते। बहवोऽर्थास्तेन काव्यप्रकाशटीकायामपि व्याख्याता इति तद्व्याख्यान भ्रमोऽपि पदं न दधाति। तस्य शैववैष्णवौपनिषदसांख्ययोगपुराणकामनाटचादिशास्त्रेष्वप्रतिहता दुर्धर्षा च गतिरासीदिति तद्वचनादेव ज्ञायते[३]। महाराजवीरवल्लालप्रसादाच्चानेकोपाधिभिः स विभूषितो बभूवेति तद्वचनम्। शैवागमदर्शनेष्वयं विशिष्य श्राद्धः। श्रीविद्याचक्रे चाधिकृतप्रवेशत्वाद्दीक्षया तस्य नाम श्रीविद्याचक्रवर्तीत्यासीत्। क्वचिच्च तेनैव स्वनाम्नः श्रीचक्रवर्तीति चक्रवर्तीति[४] चोल्लेखः कृतस्तथापि बहुत्र श्रीविद्याचक्रवर्तीत्येव नाम श्रूयते[५]। कुत्रचिच्चायं 'सकलविद्याधरः' 'सकलविद्याधरचक्रवर्ती', सकलविद्याचक्रवर्तीत्यपि स्मर्यते। श्रीविद्याचक्रवर्तिनाम्नस्तेनैव सञ्जीविन्यां सम्प्रदायप्रकाशिन्यां विरूपाक्षपञ्चाशिकायां च ग्रहणमिति तदेव वास्तवं नाम प्रतिभाति। श्रीविद्याचक्रवर्तिना बल्लालनृपतेरास्थानगतत्वं स्वयमेव सूचितम्। तेन च होसलराजस्य स्तुतौ बह्न्युदाहरणान्यपि सञ्जीविन्यादावुपात्तानि। शिलाशासनप्रतिष्ठापनं च कृतमासीदिति सूचनाभिः। स चायं वल्लालनृपति-

---

१. द्रष्टव्या समुद्रबन्धविवृतिः पृ० ३-४।

२. द्रष्टव्या 'अलंकारमीमांसा' पृ० ७७-८४।

३. द्रष्टव्या—सञ्जीविनी, पृ० ६२।

४. तत्रैव, पृ० ६२।

५. (क) सञ्जीविनीति टीका श्रीविद्याचक्रवर्तिना क्रियते-सञ्जीविनी पृ० १
(ख) सम्यक् समापिता सेयं श्रीविद्याचक्रवर्तिना।
(ग) कृतेयं विवृतिर्लघ्वी श्रीविद्याचक्रवर्तिना—विरूपाक्षपञ्चाशिका —सम्प्रदायप्रकाशिनी (द्वि० भा०) त्रिवेन्दम्, १९३० पृ० ४५०।

स्तृतीय आसीत् । तस्य च कालः १२९१-१३४२ खिस्ताब्दमध्य आसीत्ततश्च श्रीविद्याचक्रवर्तीसमयश्चतुर्दशशतकस्य उत्तरार्धे बभूवेति निश्चीयते ।

तत्प्रणीतेषु ग्रन्थेषु चत्वार एवात्र प्रकाशितया सञ्जीविन्या सह प्रकाशिताः । तत्र काव्यप्रकाशस्य द्वे टीके तेन विरचिते । एका बृहट्टीका[१]-ऽन्याच लघुटीका[२] । अलंकारसर्वस्वस्य टीका सञ्जीविनीत्यत्र प्रकाशमेति । निष्कृष्टार्थद्वारिका अत्रत्या प्रागेव सानुवादं मदीयेऽलङ्कारमीमांसाऽभिधे ग्रन्थे प्रकाशिताः । विरूपाक्षपञ्चाशिकाविवृतिरनन्तशयनसंस्कृतग्रन्थावलौ (ग्रन्थाङ्कः ९) प्रकाशिता । रत्नापणवचनादिदं[3] विज्ञायते यत् सर्वंकषा-ऽभिधा एकाऽन्या टीकाऽसीत् ।

तेन प्रयोगदीपिकानामा व्याकरणग्रन्थो, भरतसंग्रहनामा च नाटचशास्त्रीयो ग्रन्थश्च[४] प्रणीताविति सञ्जीविनीतो ज्ञायते । तथाहि—"यदुक्तमस्माभिः प्रयोगदीपिकायाम्—

तेऽस्त्यर्था धातवो ज्ञेया य उदासीनकर्तृकाः ।
विकुर्वाणप्रयुञ्जानकर्तृका भूकृञर्थकाः ॥

सञ्जीविनी, पृ० ५० ।

रुक्मिणीकल्याणनामकं च तस्य काव्यं मातृकासूपलभ्यत एवेति । एतदतिरिक्तं च तेन लघूनि काव्यानि, शैवादिदर्शनविषयका ग्रन्थाः, बहूनि च शिलाशासनानि (उत्कीर्णलेखाञ्जलयः) च प्रणीतान्यासन्निति ।

### व्याख्यानान्तरसम्भावना

समुद्रबन्धोऽनेकत्रालङ्कारसर्वस्वस्य सूत्रवृत्त्युदाहरणानां व्याख्यानान्तरमुल्लिखति । तच्च व्याख्यानान्तरं 'केचित्तु' 'अन्येतु' इत्यादिभिः पदैः सूच्यते । तच्च जयरथस्य नास्ति, श्रीविद्याचक्रवर्ती तु समुद्रबंधादप्यर्वाचीन इति तस्य कुतः सम्भवेत्, अलकस्य टीका नोपलभ्यते, जयरथेनापि सा न दृष्टाऽभूदिति तस्याः प्राप्तिः समुद्रबन्धस्य कृते त्वसम्भवैव । तेन सूचितानि कानिचिद्व्याख्यानान्तराणि[१] काचिदन्या दाक्षिणात्यटीकाऽलङ्कारसर्वस्वस्यासीदिति प्रत्याययन्तीव[५] ।

---

१. बृहट्टीका अनन्तशयनसंस्कृतग्रन्थावलौ प्रकाशिता ।

२. द्रष्टव्या सम्प्रदायकाशिनी (प्रथमो भागः) पृ० ६२; सञ्जीविनी, पृ० ४१ इत्यादयः ।

३. "एतच्च सञ्जीविनीसर्वङ्कषादावसकृदुक्तं तातपादैः" । रत्नापण, पृ० ३२।

४. द्रष्टव्या सञ्जीविनी, पृ० ३१७-३१८ ।

५. विस्तरेणावबोधायद्रष्टव्या 'अलंकारमीमांसा' पृ० ७७-८४ ।

राजानकरुय्यकप्रणीतम्—

# अलंकारसर्वस्वम्

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम् ।
[1]निजालंकारसूत्राणां वृत्त्या तात्पर्यमुच्यते ॥१॥

रम्यालङ्कारसर्वस्वानुवादोऽयं सटिप्पणः ।
भाषया विदुषां तुष्टचै रामचन्द्रेण तन्यते ॥

तीन प्रकार के विग्रहों वाली परा वाग्देवी को नमस्कार कर अपने (स्वरचित) अलंकारसूत्रों का वृत्ति द्वारा तात्पर्य बताया जा रहा है ।१॥

## श्रीविद्याचक्रवर्तिप्रणीता सञ्जीविनी

विश्वं प्रकाशयति या जातिगुणाद्यात्मकैर्निजैः प्रसरैः ।
संस्कारगुणसमृद्धा वाणी मामवतु सरलसदर्भा ॥
रुचकाचार्योपज्ञे सेयमलंकारसर्वस्वे ।
सञ्जीविनीति टीका श्रीविद्याचक्रवर्तिना क्रियते ॥
उदाहरणशेषोऽत्र ध्वनौ ग्रन्थकृता कृतः ।
तदीयन्यायसम्पन्नैः स्वपद्यैः पूरयामि तत् ॥
ध्वनिदर्शनानुरक्ताः सूक्ष्मेक्षिकया निरीक्ष्य टीकां मे ।
कवयः सचेतना अपि वितनुत साहित्यसाम्राज्यम् ॥
किं विस्तरेण बहुना टीकां संजीविनीमिमां कश्चित् ।
यद्यभ्यसूयति जडः (लः) पाण्डित्यमभ्यसूयति सः ॥

तत्र तावदधिकृतेष्टदेवतानमस्कारपुरस्कारेण प्रकरणप्रतिपाद्यमर्थं प्रतिजानीते—नमस्कृत्येति । सर्वैव खल्वियं वाक् परा पश्यन्ती मध्यमा वैखरी चेति चतुर्भिः पदैः परिमीयते । यच्छ्रुतिः—चत्वारि वाक् परिमिता पदानीत्यादिका ।

शाङ्करीमनुसन्धाय सद्विमर्शप्रपत्तये ।
पाठभेदविवेकेन तन्यते पादटिप्पणी ॥

[1]. गुर्व० अ० ।

इह हि तावद्भामहोद्भटप्रभृतयश्चिरंतनालंकारकाराः प्रतीयमानमर्थं

इस साहित्यशास्त्र में (इह) भामह, उद्भट आदि प्राचीन आलंकारिकों ने

तत्र परा नाम निरुपाधिकं स्वरूपम्। पश्यन्त्यादीनि त्रीणि पुनरौपाधिकानि स्थूलत्वाद् विग्रहस्थानीयानि। तथा चागमः—

स्वरूपं ज्योतिरेवान्तः परा वागनपायिनी।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते॥
अविभागेन वर्णानां सर्वतः संवृतक्रमा।
प्राणाश्रया तु पश्यन्ती मयूराण्डरसोपमा॥
मध्यमा बुद्ध्युपादाना कृतवर्णपरिग्रहा।
अन्तःसञ्जल्परूपा तु न श्रोत्रमुपसर्पति॥
ताल्वोष्ठव्यापृतिव्यङ्ग्या परबोधप्रकाशिनी।
मनुष्यमात्रसुलभा बाह्या वाग् वैखरी मता॥

इति। तत्र पश्यन्त्याद्यपरवाक्त्रयापेक्षया ज्येष्ठत्वादाद्या परा। द्वितीया विश्वाभिमुखीभावात् पश्यन्ती। तृतीया नाभ्यन्तरी न च बाह्येति कृत्वा मध्यमा। चतुर्थी विशेषेण परावबोधार्थं प्रचण्डेति वैखरी। यद्वा खं सुखं दुःखं च तद्विशिष्य राति ददातीति विखरो देहेन्द्रियसङ्घातः, तत्र भवा वैखरीति ज्ञेयम्। तदेतदभिसंधायोक्तम्—परां वाचं त्रिविधविग्रहामिति। चतुर्विधामपि कीदृशीं देवीं—परादिभिश्चतुर्भिः पदैः क्रीडन्तीं नामपूर्वकत्वात्। सर्वस्यैव रूपस्य जगदेतद्विजिगीषमाणां समस्तव्यवहारात्मिकां स्वरूपावबोधक्षमतया द्युतिमयीम्। अन्यस्तुतौ स्तोतव्यतायां च प्रभवन्तीम् अविमर्शान्धतमसध्वंसनात कान्तिमयीम् अप्रतिहतप्रसरत्वाद् गत्यात्मिकां चेत्यर्थः। तामिमां नमस्कृत्य। नमस्कारो हि नाम पृथगहङ्कारपरित्यागेन नमस्कर्तव्यमहिमोद्घाटनम्, सामरस्यमिति यावत्। तथाहि येयं परा सास्य शक्तत्वम्। या पश्यन्ती सोद्युक्तता। या तु मध्यमा सा प्रवृत्तता। या पुनर्वैखरी सा निर्वाहकतेति शक्तिमतो वक्तुरेव स्वरूपं परादिशक्तयः। इत्थमिमां वाचं नमस्कृत्य निजानां स्वेनैव प्रणीतानामलङ्कारसूत्राणां हृदयमुत्पाद्यते। केन प्रकारेण—वृत्त्या, वृत्तिरूपेण सन्दर्भेण।

अथ ध्वनिदर्शनानुसारेण प्रकरणं प्रणिनीषुर्भामहोद्भटादिदर्शनस्थितिं पूर्वपक्षत्वेन यथोपयोगमुपन्यस्यति तावत् इह भामहोद्भटेत्यादिना। अत्रेयं दर्शनस्थितिदिक्—

वाच्योपस्कार[1]कतयालंकारपक्षनिक्षिप्तं मन्यन्ते। तथाहि—पर्यायोक्ता-प्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं

वाच्यार्थ के उपस्कारक (शोभाधायक) होने से प्रतीयमान अर्थ को अलंकारों की कोटि में अन्तर्निहित माना है। जैसे कि पर्यायोक्त, अप्रस्तुतप्रशंसा, समासोक्ति, आक्षेप, व्याजस्तुति, उपमेयोपमा, अनन्वय आदि में वस्तुरूप व्यंग्य का

काव्यं हि नाम विशिष्टशब्दार्थात्मकम्। तत्रार्थो वाच्यः प्रतीयमानश्च। यथा—

भम धंमिअ वीसथो सो सुणउं अंज मारिओ देण।
गोलाणइकंछकुडुगवासिणा दरिअसिहेण॥

अत्र स्वैरिण्युक्तौ श्वभयनिवृत्त्या धार्मिकभ्रमणविधिर्वाच्यत्वेन स्थितः। साक्षात् सङ्केतितत्वेनाव्यधानेन प्रतीतिकरत्वात्। गोदावरीतीरे सिंहोपलब्ध्या भ्रमणनिषेधस्तु प्रतीयमानः, वाक्यार्थसमन्वयसमनन्तरमसङ्केतितत्वेन प्रतीतेः। इत्थं वाच्यविलक्षणो यः प्रतीयमानोऽर्थः स यथायोगं वस्त्वलङ्काररसरूपेण त्रिस्कन्धकः सन् सचमत्कारत्वात् कविसंरम्भगोचरत्वात् सहृदयप्रतीतिविश्रान्ति-विषयत्वाच्च काव्यात्मा। तस्य माधुर्यादयो गुणाः शौर्यादिवत् समवायवृत्त्यो-पकुर्वते। उपमादयः पुनः कटकमुकुटादिवत् संयोगवृत्त्येति ध्वन्याचार्याः। त्रिविधोऽपि प्रतीयमानो वाच्योपस्कारकत्वादलङ्कारकक्ष्यैवेत्यन्ये।

अथ ग्रन्थमवयवशो व्याकुर्मः। इह काव्यमार्गे अलङ्कारपक्षनिक्षिप्तं मन्यन्ते; तत्त्वं पुनरन्यथेति यावत्। यन्मन्यन्ते तत् सविशेषं दर्शयितुमाह—तथाही-त्यादि। पर्यायोक्तम्, अप्रस्तुतप्रशंसा, समासोक्तिः, आक्षेपः, व्याजस्तुतिः, उपमेयोपमा, अनन्वय इत्यादौ वस्तुमात्रमेव प्रतीयते न तु रसालङ्कारौ। व्यञ्जनव्यापारस्येह लक्षणामूलत्वात्। लक्षणामूलत्वेन रसालङ्कारयोर्व्यङ्ग्य-त्वासम्भवात्। तत्र प्रतीयमानस्याप्यर्थस्य प्रकारान्तरेणाभिधानं पर्यायोक्तम्। यद् वक्ष्यति—"गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तमिति।" यथा—

स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः॥

अत हयग्रीवस्य स्वर्गविजयः सैनिकसावज्ञपारिजातमञ्जरीस्पर्शलक्षणेन कार्येण प्रत्याय्यते। सामान्यविशेषभावादिना सम्बन्धेन यदप्रस्तुतात् प्रस्तुतप्रतीतिः

१. °स्कारितया—अ०।

गम्यमानं वाच्योपस्कारकत्वेन 'स्वसिद्धये पराक्षेपः, परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः।

प्रतिपादन उन्होंने संगति के अनुसार 'स्वसिद्धये पराक्षेपः' (अपने अर्थ को सिद्ध करने के लिए दूसरे अर्थ का आक्षेप) तथा 'परार्थं स्वसमर्पणम्' (दूसरे अर्थ के लिए अपने अर्थ का समर्पण) इन दो शैलियों से किया है।

सेयमप्रस्तुतप्रशंसा। यद् वक्ष्यति—"अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसेति।" यथा—

तं णंथि कीपिपइणों वकंपिअंजं णणिअ अघरणीए।
अणवरतगमणसीलं सकालपहिअं सपांहिजं॥

अत्रानवरतगमनशीलस्य पत्युर्निजगृहिण्या पाथेयत्वेन यन्न कल्पितं तद् यथा नास्ति तथा कालपथिकस्य पाथेयत्वेन यदकल्पितं तन्नास्तीत्यत्र कालः सर्वं ग्रसतीति सामान्यरूपादप्रस्तुतात् प्रस्तुतो विशेषात्मा प्रहस्तवधः प्रत्याय्यते। विशेषणसाम्यादप्रस्तुतोऽर्थो यदवगम्यते सा समासोक्तिः। यद् वक्ष्यति—"विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति।" यथा—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्॥

अत्र उपोढरागत्वादिना विशेषणसाम्येनाप्रस्तुतो नायकवृत्तान्तः प्रतीयते। उक्तस्य वक्ष्यमाणस्य वा प्राकरणिकस्य यद् विशेषप्रतिपत्त्यर्थमाभासतो निषेधनं स आक्षेपः। यद् वक्ष्यति—"उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः" इति। यथा—

बालय णाहं दूई तिए पिओ सिंतिणं ह्य वावारो।
सामर उ तुं त्स अजसो ए अधमं रवरं भणिमो॥

अत्र नाहं दूतीति दूतीत्वनिषेधो विशिष्टास्मि दूतीत्यवगमयति। स्तुतिनिन्दयोर्निन्दास्तुतिगमकत्वे व्याजस्तुतिः। यद् वक्ष्यति—"स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिरिति"। यथा—

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो—
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥

अत्र सरोरुपकरोषीति स्तुतिर्निन्दां गमयति। उपमानोपमेययोः पर्यायेणोपमेयोपमानभावे सत्युपमेयोपमा। यद् वक्ष्यति—"द्वयोः पर्यायेण तस्मिन्नुपमेयोपमेति"। यथा—

खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः।

अत्रोपमानोपमेयभावविनिमयस्तृतीयं सब्रह्मचारिणं निवर्तयति। एकस्यैवोपमानोपमेयत्वे त्वनन्वयः। यथा—युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रभावः इति। अत्र द्वितीयसब्रह्मचारिनिवृत्तिः। आदिशब्दाल्लाटानुप्रासादिपरिग्रहः। एषु पर्यायोक्तादिषु यदेतत् वस्तुमात्रं प्रतीयते स्वर्गविजयादिकं रसालङ्कारपरिहारेण तदिदं सर्वैरपि प्रमाणैः प्राधान्यदशायामात्मत्वेनावभासमानमेव सत् गजनिमीलिकया वाच्योपस्कारकत्वेन तैरुद्भटादिभिः प्रतिपादितम्। न्यग्भावितवाच्यस्य वाच्यकक्ष्यातिलंघिनः कथमस्तु वाच्योपस्कारकत्वमिति भावः। तेन प्रकारेण प्रतिपादितं स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणमिति द्विविधया भङ्ग्या। भङ्गिः प्रकारः। अत्रायमाशयः लक्षणामूलो यत् पर्यायोक्तादिषु प्रतीयमानोऽर्थः लक्षणा च द्विरूपा, अजहत्स्वार्थैका कुन्ताः प्रविशन्तीत्यादौ, परा तु जहत्स्वार्था गङ्गायां घोष इत्यादौ, तत्राजहत्स्वार्थायां कुन्तानां स्वतः प्रवेशासम्भवे कौन्तिकानाक्षिप्य प्रवेशसम्भवः। अतः स्वसिद्धये पराक्षेपः इति तत्र लक्षणम्। स्वकीयस्य प्रवेशादेः सिद्धये परस्य कौन्तिकादेराक्षेपः। जहत्स्वार्थायान्तु गङ्गादेर्मुख्यार्थस्यात्यन्तमनुपपत्तिरेव। अतः परार्थं स्वसमर्पणमिति लक्षणम्। परार्थं तटादेर्घोषताधिकरणताद्यर्थं स्वसमर्पणम्, स्वस्वरूपपरित्याग इति। इत्थं च सति स्पृष्टास्ता नन्दन इति पर्यायोक्तोदाहरणे सैनिकानां सावज्ञपारिजातमञ्जरीस्पर्शः स्वर्गविजयमनाक्षिप्य न सम्भवतीति कुन्तादिनयने स्वसिद्धये पराक्षेपः। एवमुपोढरागेणेति समासोक्त्युदाहरणेऽपि ज्ञेयम्। नायकत्वाक्षेपे सति निशादेस्तिमिरांशुकत्वादियोगसम्भवादजहत्स्वार्थत्वम्, यतः तं णंत्थीत्यप्रस्तुतप्रशंसोदाहरणे मुख्यार्थस्याप्रस्तुतत्वात्। वालअ णाहमित्याक्षेपोदाहरणे दूतीत्वनिषेधस्याभासरूपत्वात्। हे हेलाजितेति व्याजस्तुत्युदाहरणे स्तुतेर्व्याजरूपत्वात्। खमिव जलमित्युपमेयोपमोदाहरणे खजलयोर्द्वयोरपि प्राकरणिकत्वेनोपमानोपमेयभावाभावात् युद्धेऽर्जुनोऽर्जुन इवेत्यनन्वयोदाहरणे चैकस्यानेकत्वाभावान्मुख्यार्थस्यात्यन्तमनुपपत्तिरेव। अतः परार्थं स्वसमर्पणमिति लक्षणम्। तमिमं विषयविभागम-भिसन्धायोक्तं—यथायोगं द्विविधयेति। योगो योग्यता तामनतिक्रम्येत्यर्थः। इत्थं वस्तुध्वनौ विमतिर्भामहादिषु दर्शिता।

रुद्रटेन[1] तु भावालंकारो द्विधैवोक्तः[2]। रूपकदीपकापह्नुतितुल्ययोगि[3]-तादावुपमाद्यलंकारो[4] वाच्योपस्कारकत्वेनोक्तः[5]। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता[6]। रसवत्प्रेयः[7]प्रभृतौ[8] रसभावादिर्वाच्यशोभाहेतुत्वे-

और रुद्रट ने भावालंकार को दो प्रकार का ही बताया है।[9] रूपक, दीपक, अपह्नुति, तुल्ययोगिता आदि में (प्रतीयमान) उपमा आदि अलंकार को वाच्यार्थ का उपस्कारक कहा है। उत्प्रेक्षा को तो स्वयं ही प्रतीयमान (व्यंग्य) माना है। रसवत्, प्रेयः आदि में रस, भाव आदि को वाच्यार्थ की शोभा का कारण

अथ रुद्रटे रसालंकारध्वन्योर्विमतिमुपन्यस्यति— रुद्रटेनापीत्यादिना। भावालङ्कारः प्रेयोऽलङ्कारः। स आकारव्यङ्ग्यतया वाक्यव्यङ्ग्यतया च द्विधैवोक्तः। तथाहि—"यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन। गमयति तदभिप्रायं तत्प्रतिबन्धं च भावोऽसाविति। अभिधेयमभिदधानं तदेव तद-सदृशगुणदोषम्। अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः॥" इति च। तदिदमप्रेक्षावत्कृत्यमिति भावः॥ यतो भावालंकारव्यंजकभेदादसंख्याः व्यङ्ग्यभेदाः सन्धिशवलतालक्षणा अपि भेदाः सम्भवन्ति। वक्ष्यति हि "भावो-दयसन्धिशवलतालक्षणाश्च पृथगलंकारा" इति। रूपकादिष्वप्युक्तान (?) दर्शिता-मुद्घाटयति—रूपकदीपकेत्यादि। रूपकं, दीपकम्, अपन्हुतिः, तुल्ययोगिता। आदिशब्दान्निदर्शनादिकं च लक्षयिष्यते। तत्रोपमालङ्कारः प्रतीयमानो वाच्यशोभाहेतुत्वात् सर्वत्रोपसर्जनत्वेनोक्तः। तदप्यसारमिति भावः। उपमा-लङ्कारस्यान्यत्र वाच्यरूपकादिस्वरूपन्यग्भावेनोपस्थापितस्य प्राधान्येन तेष्ववस्था-नात्। अथ रसभावयोरयथादृशमुद्घाटयति—रसवत्प्रेयस्विदित्यादि। रसो गुणीभूतो रसवानलङ्कारः। भावस्तु प्रेयान्। रसाभास ऊर्जस्वी। भावाभासः समाहितम्। एवं रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। तदपि मन्दमिति

१. रुद्रटेनापि तु—अ०। २. द्विविधोक्तः—ना०।
३. रूपकपकापदीह्नुति—इति सीसकाक्षरभ्रष्टः पाठो नि० पुस्तके।
४. °वुपमालङ्कारो—अ०। °दौ चोपमालं°—ना०।
५. वाच्योपस्कारित्वे°—अ०।
६. उत्प्रेक्षा···कथिता—पाठः अ० पुस्तके 'हेतुत्वेनोक्तः'—इत्यनन्तरमुपलभ्यते।
७. रसवत्प्रेयः ऊर्जस्विप्रभृतौ तु—अ०। ८. तु—नि० पुस्तकेऽधिकः।
९. एक प्रकार का भावालंकार वह है जिसमें वस्तु गुणीभूत हो और दूसरा वह जिसमें वस्तु अगुणीभूत हो। देखिए रुद्रट का काव्यालंकार ७।२८-४१।

नोक्तः। तदित्थं त्रिविधमपि[1] प्रतीयमानमलंकारतया [2]ख्यापितमेव।
वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता कश्चिद् ध्वनिभेदोऽलंकारतयैवोक्तः। केवलं गुणविशिष्टपदरचनात्मिका रीतिः [3]काव्यात्मत्वेनोक्ता।

बताया है। इस प्रकार तीनों ही प्रकार के व्यंग्य का अलंकाररूप में प्रतिपादन किया है।[4]

वामन ने तो सादृश्यमूलक (गौणी) लक्षणा को वक्रोक्ति अलंकार के रूप में बताते हुए किसी ध्वनि-भेद को अलंकाररूप से ही रखा है। केवल गुणों से विशिष्ट पदरचनात्मिका रीति को काव्य की आत्मा माना है।

भावः। यतो रसादेरलङ्कारत्वं सदातनं न भवति प्राधान्यदशायामलङ्कार्यत्वात्। उत्प्रेक्षा त्विति। प्रतीयमाना स्वयमेव कथिता। प्रतीयमानाप्यलङ्कारत्वेन कथितेत्यर्थः, तदप्यगम्भीरमिति यावत्। प्रतीयमानदशायां सर्वस्यैवालङ्कारस्यालङ्कार्यत्वं सिद्धान्तितम्। यतस्त्रिविधं वस्त्वलङ्काररसरूपम् अलङ्कारतया ख्यापितमेव। काव्यजीवितत्वेनालङ्कार्यमपि सत् तथा न चेतितमिति यावत्।

इत्थं काव्ये जीवितांशविचारविमुखानामलङ्कारमात्ररसिकत्वादुत्तानदृशां मतमुपन्यस्य जीवितांशविचारपराणां मतानि यथावदुपन्यस्यति। वामनेन त्वित्यादिना। सादृश्यनिबन्धनाया लक्षणाया इति वदता सादृश्यसंबन्धनिबन्धना शब्दवृत्तिर्गौणीति वदन्तो दूष्यत्वेन कटाक्षिताः। ध्वन्याचार्याणां गौण्या वृत्तेर्लक्षणान्तर्भावेनेष्टेः सादृश्यनिबन्धना लक्षणा वक्रोक्त्यलङ्कार इति प्रथयता कश्चिद् ध्वनिभेदो लक्षणामूलोऽत्यन्ततिरस्कृतवाच्यनामालङ्कारत्वेनोक्तः काव्या-

१. द्विविधमपि—नि०। २. प्रख्यापितमेव—अ०।
३. काव्यात्मकत्वे°—नि०।
४. प्रतीयमान अर्थ वस्तु, अलंकार तथा रसरूप से तीन प्रकार का होता है। प्रतीयमान वस्तु-रूप अर्थ कहीं गुणीभूत होता है और कहीं प्रधान। इन दोनों प्रकार के अर्थों का भावालंकार में, उपमा आदि प्रतीयमान अलंकार का रूपक, दीपक आदि अलंकारों में, तथा रस, भाव आदि का रसवत् प्रेयः आदि में अन्तर्भाव रुद्रट ने किया है। इस प्रकार इनके अनुसार त्रिविध प्रतीयमान वाच्यालंकार की कोटि में ही आता है।

उद्भटादिभिस्तु गुणालंकाराणां प्रायशः साम्यमेव सूचितम्। विषयमात्रेण भेदप्रतिपादनात्। संघटनाधर्मत्वेन शब्दार्थधर्मत्वेन[1] चेष्टेः। तदेवमलंकारा एव[2] काव्ये प्रधानमिति प्राच्यानां मतम्।

और उद्भट आदि ने तो गुण तथा अलंकारों की प्रायशः समानता ही सूचित की है। अलंकार तथा गुण में भेद का प्रतिपादन केवल विषय को लेकर किया है, (गुण) संघटना के धर्म के रूप में, (और अलंकार) शब्द तथा अर्थ के धर्म के रूप में, उन्हें अभीष्ट हैं। इस प्रकार काव्य में अलंकार ही प्रधान हैं—यह प्राचीन आलंकारिकों का मत है।

त्मभूतः सन्नलङ्कार्यत्वेनापि नावधारित इति यावत्। यस्त्वंशोऽलङ्कार्यो न भवति सो ऽप्यलङ्कार्यत्वेन कथित इत्याह केवलगुणविशिष्टेति। केवलग्रहणाद् रसालङ्कारनैरपेक्ष्यं कटाक्षितम्। रसालङ्कारनिरपेक्षैर्माधुर्यादिभिर्गुणैर्विशिष्टा येयं संघटनाधर्मभूता वैदर्भ्यादिरूपिणी रीतिः सैव काव्यात्मेत्युक्ता। तथा च सूत्रितं तेन—रीतिरात्मा काव्यस्येति। प्रख्यापितं च—

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अधिगतपरिमलापि विहरति दृशं मालतीमाला॥

इति। इदमप्ययुक्तमिति भावः। तथाहि—काव्ये शरीरस्थानीयौ शब्दार्थौ कटकमुकुटादिकल्पा अनुप्रासोपमादयः व्यङ्ग्योऽर्थस्त्वात्मभूत इति स्थिते शब्दालंकारेभ्योऽपि यो बाह्यो वर्णालङ्कारोऽनुप्रासः तत्समकक्षका एता रीतयः यतो द्वयोरपि वर्णधर्मता। एतदभिसन्धाय वृत्त्यनुप्रासरूपवर्णालङ्कारप्रस्तावे वैदर्भ्यादिरीतयो विवेचिताः काव्यप्रकाशकृदादिभिः। ग्रन्थकारोऽपि तत्र विवेचयिष्यति। व्यञ्जिकास्वेतासु व्यङ्ग्यरससन्निकर्षादात्मभ्रम उत्तानधियां तदनुप्रासादावपि समानमिति मन्दमेतद् रीतिमात्रपक्षपातित्वम्। वस्तुतस्तु व्यङ्ग्योऽर्थ एवात्मा काव्ये। अथोद्भटादिभिर्गुणालङ्कारयोर्भेदोऽपि नावधारित इत्याह—उद्भटादिभिस्त्विति। साम्यं सजातीयत्वमित्यर्थः। तत्र हेतुर्विषयमात्रेण भेदप्रतिपादनादिति। मात्रग्रहणात् स्वरूपभेदाभावः कटाक्ष्यते। काव्यशोभाहेतुत्वलक्षणं तु स्वरूपमेकविधमेवेति तेषामाशयः। विषयविभेदं दर्शयति—संघटनेत्यादि। संघटनाधर्मा गुणाः, अलङ्कारास्तु शब्दार्थधर्मा इति। तददिदमप्यगम्भीरमिति भावः। गुणालङ्कारयोः स्वरूपत एवातिभिन्नत्वात्। तथाहि—

1. शब्दार्थधर्मत्वेन—नि० पुस्तके नास्ति। 2. एव—ना० पुस्तके नास्ति।

वक्रोक्तिजीवितकारः[1] पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव [2]प्राधान्यात्काव्य[3]स्य जीवितमुक्तवान्। व्यापारस्य प्राधान्यं च काव्यस्य प्रतिपेदे। [4]अभिधानप्रकारविशेषा [5]एवालंकाराः।

किन्तु वक्रोक्तिजीवित के रचयिता ने अनेक प्रकार की वक्रोक्ति को ही—जिसका स्वरूप वैदग्ध्यभंगीभणिति (चतुरता के ढंग से उक्ति) का है—प्रधानता के कारण, काव्य की आत्मा माना है। उसने काव्य में व्यापार (कविकर्म) की प्रधानता का भी प्रतिपादन किया है। और अलंकारों को अभिधा का ही विशिष्टरूप माना है। यद्यपि व्यंग्य (अर्थ) तीन प्रकार का होता है, पर व्यापाररूप (वक्रस्वभाव) उक्ति ही कवि के कर्म का विषय होती

अङ्गिनो रसस्य धर्मा गुणाः, अङ्गयोः शब्दार्थयोस्त्वलङ्काराः। गुणास्तु नियमेनोत्कर्षहेतवः। अलङ्कारास्त्वनियमेन। गुणाः समवायेन वर्तन्ते, अलङ्कारास्तु संयोगेन। यदाह—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥
उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हाराद्विवदलङ्कारास्तेऽनुप्रासोपमादयः॥

इति। इत्थं च सत्यलङ्कारापेक्षया गुणेष्वेव प्रकृष्टः काव्योपकारः, यद्वदस्फुटालङ्कारत्वेऽपि काव्यत्वाभ्युपगमः न हि तद्वदस्फुटगुणत्वे। यदाह—"अनलङ्कृती पुनः क्वापि" काव्यमिति। यदेतदेवंविधं गुणानां प्राधान्यं तत्रापि पुरातनानां दृष्टिरसमीचीनेत्याह—तदेवमलङ्कारा एवेति। अथ वक्रोक्तिजीवितकारभट्टनायकयोः सन्दृष्टिसन्निकृष्टे ध्वनिदर्शनस्येत्यभिप्रायेणाह—वक्रोक्तिजीवितकारः पुनरित्यादिना। वैदग्ध्यभङ्गिभणितिस्वभावां वैदग्ध्यप्रकारोपेतभणितिस्वभावरूपामित्यर्थः। जीवितमुक्तवानिति—अलंकारमात्रदुराग्रहाभावो द्योतितः। अन्योऽपि सारभूतः सूक्ष्मोंऽशस्तेनावधारित इत्यभिप्रायेणाह—व्यापारप्राधान्यं चेति। व्यापारो रसप्रत्यायनात्मा तस्य प्राधान्यं प्रतिपेदे। न पुनरप्रधानस्यालङ्कारमात्रस्येति यावत्।

अलंकारः पुनर्वाच्यकक्ष्यैवास्य सम्मता इत्याह—अभिधाप्रकारेत्यादि। यश्च वस्त्वलंकाररसरूपस्त्रिविधः प्रतीयमानोऽर्थः तत्र विद्यमानेऽपि तत्प्रत्यायन-

१. कारस्तु—अ०। २. प्राधान्येन—ना०। ३. काव्यजीवित—अ० नि०।
४. अभिधाप्रकार—अ०, सं०। ५. एव चालङ्कारा:—नि०।

सत्यपि [१]त्रिविधे प्रतीयमाने व्यापाररूपा भणितिरेव कविसंरम्भगोचरा। उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतः[२]। केवलमुक्तिवैचित्र्य[३]-जीवितं काव्यं, न व्यंग्यार्थजीवितमिति तदीयं दर्शनं व्यवस्थितम्।

भट्टनायकेन तु व्यंग्यव्यापारस्य [४]प्रौढोक्त्याभ्युपगतस्य [५]काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्राप्यभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा[६] भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृतः।

है। (वक्रोक्तिजीवितकार ने) उपचारवक्रता आदि (वक्रोक्ति के भेदों) में ध्वनि के भेदों का अन्तर्भाव माना है। किन्तु काव्य की आत्मा केवल उक्ति की वक्रता है, व्यंग्यार्थ (काव्य की) आत्मा नहीं है; यह उनका सिद्धान्त है।

भट्टनायक ने तो व्यंग्यव्यापार (व्यंजना) को प्रौढोक्ति से स्वीकार करते हुए उसे काव्य का अंश बताकर शब्द और अर्थ के स्वरूप को गौण बनाने वाले व्यापार (कविकर्म) की ही प्रधानता मानी है। उसमें भी (अर्थात् कवि-कर्म की प्रधानता मानकर भी) अभिधा और भावना नामक दो व्यापारों का अतिक्रमण करने वाले रसचर्वणा-स्वरूप व्यापार को—जिसका दूसरा नाम भोग है—प्रधान रूप से विश्रान्ति का धाम (मुख्य) माना है।

लक्षणस्य व्यापारस्यैव प्राधान्यमस्य मतमित्याह—सत्यपि चेत्यादि। यश्च यावान् ध्वनिभेदः स सर्वोऽपि पर्यायान्तरेण परिगृहीत इत्याह—उपचारवक्रतेत्यादि। उपचारो लक्षणाश्रयणम्। तद्वक्रतेत्यविवक्षितवाच्यादिसमस्तध्वनिकटाक्षः। इत्थं च सति ध्वनिदर्शनादेतद्दर्शनस्याल्पको भेद इत्याह—केवलमुक्तिवैचित्र्येति।

अथ भट्टनायकमतं भट्टनायकेन त्वित्यादि। प्रौढोक्त्याभ्युपगतस्येति। भोग इति। स्वकपोलपरिकल्पितो व्यवहारः प्रौढोक्तिः। तयाङ्गीकृतस्येत्यर्थः। ईदृशस्य व्यञ्जनाव्यापारस्य काव्यात्मत्वं कथयता न्यग्भावितवाच्यार्थस्वरूपो योऽयं व्यापारस्तस्यैव प्राधान्यमुक्तम्। स च व्यापारो लौकिको न भवतीत्याह—तत्राप्यभिधाभावकत्वेत्यादि। तत्र तेषु व्यापारेषु मध्यात्। अभिधा-

१. त्रिभेदे—नि०। च त्रिभेदे—अ०। २. एव—अ० पुस्तकेऽधिकः।
३. °वैचित्र्यं काव्यम्—अ०। ४. प्रौढयाभ्यु०—अ०
५. काव्ये सत्त्वं—अ०। ६. °चर्वणात्मैव—शा० ना०।

ध्वनिकारः पुनरभिधा[1]-तात्पर्यलक्षणाख्यव्यापारत्रयोत्तीर्णस्य ध्वननद्योतनादिशब्दाभिधेयस्य व्यञ्जनव्यापारस्यावश्याभ्युपगम्य[2]त्वाद्व्यापारस्य च वाक्यार्थत्वाभावाद्वाक्यार्थस्यैव च[3] व्यंग्यरूपस्य गुणालंकारोपस्कर्तव्यत्वेन प्राधान्याद्विश्रान्तिधामत्वादात्मत्वं सिद्धान्तितवान् ।

ध्वनिकार (आनन्दवर्धन) ने तो अभिधा, तात्पर्य, लक्षणा नामक तीनों व्यापारों का अतिक्रमण करने वाले, ध्वनन, द्योतन आदि शब्दों से बताए जाने वाले व्यंजनव्यापार को अवश्य स्वीकर्तव्य माना है। चूंकि व्यापार वाक्य का अर्थ नहीं होता है और वाक्यार्थ ही व्यंग्य होता है, गुण और अलंकार उसी का उपस्कार करते हैं, अतः वही प्रधान रूप से विश्रान्ति का स्थान है; अत एव (व्यंग्यार्थ ही) काव्य की आत्मा है, यह (ध्वनिकार ने) सिद्धान्त प्रतिष्ठित किया है।

भावकत्वेति। साक्षात् सङ्केतितत्वविषया शक्तिरभिधा। असाधारण्येन प्रतीतेष्वर्थेषु साधारणीकरणरूपा शक्तिर्भावकत्वम्। एतद्व्यापारद्वयोत्तीर्णः साधारणीकृतेषु विभावादिषु रसचर्वणात्मा भोगापरनामधेयो व्यापारो विश्रान्तिस्थानतया प्राधान्येनाङ्गीकृतः। अत्र दर्शने भोगादिव्यवहारस्य स्वकपोलपरिक्लृप्तिः व्यापारे प्राधान्यमित्यंशद्वयमेव ध्वनिदर्शनविलक्षणम्।

अथ सिद्धान्तः—ध्वनिकारः पुनरित्यादि। ध्वनिकारस्तु व्यङ्ग्यात्मनो वाक्यार्थस्यैव काव्यात्मत्वं सिद्धान्तितवान्। तत्र हेतुः—व्यञ्जनव्यापारस्यावश्याभ्युपगम्यत्वादिति। कीदृशस्य अभिधालक्षणातात्पर्याख्यव्यापारत्रयोत्तीर्णस्य। तात्पर्यं हि नाम पदार्थाधिगमसमनन्तरभाविनी समन्वयशक्तिः। एतत्-त्रयोत्तीर्णस्येति चतुर्थकक्ष्यावस्थायितोक्ता। ध्वननद्योतनेति। ध्वननं द्योतनं प्रत्यायनं व्यञ्जनमित्यादिप्रसिद्धपर्यायसहस्रस्य। अवश्याभ्युपगम्यत्वात् तदनभ्युपगमे व्यङ्ग्यार्थप्रतीतौ न गत्यन्तरं यतः अतो व्यंग्योऽर्थ एवात्मेत्यर्थः। ननु व्यञ्जनव्यापारः प्रधानं किं न भवतीत्यत आह—व्यापारस्य च वाक्यार्थत्वाभावादिति। अप्रत्यक्षत्वेन निरुक्त्यनर्हत्वाद् वाक्यार्थत्वाभावः। सर्वा एव खलु पदार्थशक्तयः कार्यादिप्रतीत्यन्यथानुपपत्त्याभ्यूह्यन्त एव। अतो व्यापारो न प्रधानम्। यश्च हेतुः प्राधान्ये सोऽपि व्यंग्य एवोपपद्यते ननु व्यञ्जनव्यापार इत्याह—वाक्यार्थ-

१. लक्षणातात्पर्याख्य—अ०। २. भ्युपगन्तव्यत्वाद्—अ०।
३. च—अ० पुस्तके नास्ति।

व्यापारस्य [1]विषयमुखेन [2]स्वरूपप्रतिलम्भात्तत्प्राधान्येन प्राधान्यात्स्वरूपेण [3]विचार्यत्वाभावाद्विषयस्यैव समग्रभरसहिष्णुत्वम्[4]। तस्माद्विषय एव व्यंग्यनामा जीवितत्वेन वक्तव्यः। यस्य गुणालंकारकृत[5]-चारुत्वपरिग्रहसाम्राज्यम्। रसादयस्तु जीवितभूता नालंकारत्वेन वाच्याः। अलंकाराणामु[6]पस्कारकत्वाद्रसादीनां च प्राधान्येनोपस्कार्यत्वात्। तस्माद्

व्यापार (क्रिया) का स्वरूप विषय के द्वारा ही बनता (सिद्ध होता) है[7], विषय की प्रधानता से ही व्यापार की प्रधानता होती है। व्यापार स्वतः नहीं जाना जा सकता है अतः विषय ही (आत्मा आदि कहलाने के) सारे भार को वहन करने में समर्थ है। इसलिए व्यंग्य नाम रखने वाले विषय को ही (काव्य की) आत्मा कहना चाहिए। गुण और अलंकार से उत्पन्न शोभा को स्वीकार करने में उसी की प्रभुता है। रस आदि काव्य के प्राण हैं, इन्हें अलंकार रूप में नहीं बताना चाहिए क्योंकि अलंकार उपस्कारक होते हैं, और रस आदि ही प्रधान होने से उपस्कार्य (आत्मा) है। अतः वाक्यार्थ बनने वाला

स्यैवेति। गुणालङ्कारोपस्कर्तव्यत्वं विश्रान्तिस्थानत्वं च प्राधान्ये हेतुः। अतो व्यङ्ग्यार्थ एव काव्यात्मेति सिद्धान्तितवान्। अत्र भूयस्तरा युक्तीरभ्युच्छिनोति--व्यापारस्य विषयमुखेनेत्यादि। व्यञ्जनादेर्हि व्यापारस्य व्यङ्ग्यादर्थमुखेनैव स्वरूपसिद्धिः। अतो न वाक्यार्थत्वसंभवः। यथा स्वरूपोपलम्भो विषयमुखेन तथा प्राधान्यं विचारक्षमत्वमपि तन्मुखेनैवेत्याह—तत्प्राधान्येनप्राधान्यात् स्वरूपेण विचार्यत्वाभावादिति च। विषय एव तु पुष्कलं वाक्यार्थीभावमर्हतीत्याह—विषयस्यैवेति। साक्षात् स्वरूपप्रतिलम्भः स्वतः प्राधान्यम्। स्वरूपेण विचार्यत्वं चेत्यादिः समग्रो भरस्तत्सहिष्णुत्वं हि व्यङ्ग्यार्थलक्षणस्य विषयस्यैव। अतो विषयस्यैवात्मत्वं युक्तमित्याह—तस्माद् विषय एवेति। समग्रभरसहिष्णुत्वात् स निरवशेषं वैभवमर्हतीत्याह—यस्य गुणालङ्कारेत्यादि। ननु रसादयो रसवदाद्यलंकारा एव प्राचां मताः कथमेषामलंकार्यत्वमित्यत आह—रसादयस्त्विति। तत्र हेतुः अलंकाराणामुपस्कारकत्वाद्रसादीनां च प्राधा-

१. स्वरूपमुखेन—अ०। २. विषयप्रतिलम्भात्—अ०।
३. विदित°—नि०। ४. °सहिष्णुत्वात्—ना०।
५. °कृतं—ना०। ६. °मुपकारक°—अ० शा० ना०।
७ पकाने की क्रिया को पके हुए चावल (विषय) से ही अपने स्वरूप की प्राप्ति होती है।

व्यंग्य एव वाक्यार्थीभूतः [1]काव्यजीवितमित्येष एव[2] पक्षो वाक्यार्थविदां सहृदयानामावर्जकः। व्यञ्जनव्यापारस्य सर्वैरनपह्नुतत्वात्तदाश्रयेण च[3] पक्षान्तरस्याप्रतिष्ठानात्।

यत्तु व्यक्तिविवेककारो वाच्यस्य प्रतीयमानं प्रति [4]लिङ्गतया व्यञ्जनस्यानुमानान्तर्भावमाख्यत् तद्वाच्यस्य प्रतीयमानेन सह तादात्म्य-

व्यंग्य ही काव्य का जीवातु (आत्मा) है, यही पक्ष (सिद्धान्त) वाक्यार्थ के ज्ञाता सहृदयों को आकर्षक लगता है। व्यंजना व्यापार किसी से छिपा नहीं है अतः इस को स्वीकार करने पर कोई भी पक्ष मान्य नहीं रह जाता है।

और यह जो व्यक्तिविवेककार (आचार्य महिमभट्ट) ने वाच्यार्थ को व्यंग्यार्थ का लिंग मानकर व्यंजना का अनुमान में अन्तर्भाव बताया है वह अविचारित कथन है क्योंकि वाच्यार्थ का व्यंग्यार्थ के साथ तादात्म्य या तदुत्पत्ति

न्येनोपस्कार्यत्वाच्चेति। रसादीनां हि यदा गुणीभावस्तदालंकारत्वं यदा तु प्राधान्यं तदालंकार्यत्वमेव। यत इत्थं व्यवस्था अतो व्यंग्यार्थ एव काव्यात्मेति निगमयति—तस्माद् व्यंग्य एवेत्यादि। वाक्यार्थीभूत इति प्राधान्यदशां कटाक्षयति। अप्राधान्यदशायामनात्मत्वात्। तदिदं ध्वनिकृतो दर्शनम्। एतदनुसारित्वमात्मनो दर्शयितुमाह—एष एव पक्ष इत्यादि। एवकारेण पक्षान्तरेष्वनुपपत्तिराविष्क्रियते। आवर्जकः बलादात्माभिमुखीकारकः। तत्र हेतुः—व्यंजनव्यापारस्येत्यादि। य इच्छन्ति व्यंग्यार्थस्य काव्यात्मतां ये च नेच्छन्ति सर्वैरेव खल्वेभिर्न शक्यते हि व्यञ्जनव्यापारोऽपह्नोतुम्। यदि नापह्नुतः किं तत इत्यत आह—तदाश्रयणे चेति। पक्षान्तरस्याप्रतिष्ठानं दर्शितचरीभिर्युक्तिभिः सिद्धम्।

यत्त्वत्र व्यक्तिविवेककारः प्रत्यवास्थितस्तदुपन्यस्यति—यत्तु व्यक्तिविवेककार इत्यादिना। लिङ्गतया गमकतया तादात्म्यतदुत्पत्त्यभावादिति। धर्मधर्मिणोर्लिङ्गलिङ्गिभावे तादात्म्यं नाम नियतः संबन्धः कार्यकारणयोस्तु तदभावे तदुत्पत्तिर्नामा। अनयोर्नित्यसंबन्धयोर्यद्यन्यतरो न स्यात् तदा व्यभिचारान्न सम्भवति लिङ्गलिङ्गिभाव इति यावत्। यत इत्थमतस्तदविचारित्वाभिधानं तदेतद् व्यक्तिविवेककृतो दर्शनं वायसवाशितादिकल्पमिति यावत्।

1. जीवितं काव्यस्य—ना०। 2. च—अ० पुस्तकेऽधिकः।
3. च—शा० ना० पुस्तकयोर्नास्ति। 4. लिङ्गितया—नि०।

तदुत्पत्त्यभावादविचारिताभिधानम्। तदेतत्कुशाग्र[1]-धिषणैः क्षोदनीयमतिगहन[2]-गहनमिति नेह प्रतन्यते।

अस्ति तावद् व्यङ्ग्यनिष्ठो व्यञ्जनव्यापारः। तत्र व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ द्वौ काव्यभेदौ। व्यङ्ग्यस्यास्फुटत्वे[3]ऽलंकारवत्त्वे[4] तु चित्राख्यस्तृतीयः काव्यभेदः[5]। तत्रोत्तमो ध्वनिः।

(दोनों ही सम्बन्ध) नहीं होते हैं।[6]

यह (विषय) कुशाग्रबुद्धि (विद्वानों) के ही समझने का है, गहन से भी अधिक गहन है अतः यहां पर (इस विषय का) विस्तार नहीं किया जा रहा है।

व्यंग्यार्थ में रहने वाले व्यंजना व्यापार की स्थिति असंदिग्ध है। व्यंग्य की प्रधानता या अप्रधानता से (क्रमशः) ध्वनि तथा गुणीभूतव्यंग्य नामक काव्य के दो भेद होते हैं। जहां व्यंग्यार्थ अस्फुट होता है, अलंकार होने पर (वहां) चित्र नामक काव्य का तीसरा भेद होता है। इन सबमें ध्वनि उत्तम (काव्य) है।

एवं ध्वनिदर्शनसमर्थने यद्यावदस्ति युक्ति- जातं तदतिगहनम्। ध्वनिगुणीभूतव्यङ्ग्ययोरेव काव्ययोर्मीमांसायामुपयुज्यते। चित्रकाव्यमीमांसायान्तु नात्युपयुज्यत इत्याशयेन निगमयति—तदेतत् कुशाग्रीयेत्यादि। इह चित्रकाव्ये न प्रतन्यते यथोपयोगं स्तूयते एवेति यावत्।

अथ यावानुपयोगश्चित्रप्रस्तावे ध्वनेस्तावन्मात्रम् —अस्ति तावदित्यादिना। यद्यस्ति किं तत इत्यत आह—तत्र व्यङ्ग्यस्येत्यादि। प्राधान्ये ध्वनिर्नामोत्तमः काव्यभेदः, अप्राधान्ये तु गुणीभूतव्यङ्ग्यनामा मध्यमः। चित्रस्य विषयमाह—व्यङ्ग्यास्फुटत्व इति। चित्रमवरमित्यर्थः। तत्र भेदान् संक्षिप्य संख्यातुमाह—

१. कुशाग्रीय—अ० ना०। २. गहन—अ० पुस्तके नास्ति।
३. स्फुटत्वेन—अ०। ४. °वत्त्वेन—नि०। ५. काव्यभेदस्तृतीयः—नि०।
६ वाच्यार्थ और व्यंग्यार्थ में दो प्रकार का सम्बन्ध हो सकता है—तादात्म्य और तदुत्पत्ति। इन संबंधों के नियत होने पर ही साध्य की सिद्धि संभव है, अन्यथा व्यभिचार होने के कारण साध्य की सिद्धि नहीं होगी। कृतकत्व और अनित्यत्व तादात्म्य के और धूम और वह्नि तदुत्पत्ति सम्बन्ध के उदाहरण हैं। वाच्यार्थ और व्यंग्यार्थ एक रूप नहीं होते हैं और न वाच्यार्थ व्यंग्यार्थ का जनक होता है अतः दोनों ही संबंध यहाँ नहीं माने जा सकते हैं।

**तस्य लक्षणाभिधामूलत्वेनाविवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ द्वौ [1]काव्यभेदौ। आद्योऽप्यर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यत्वेन**

इसके लक्षणामूलक तथा अभिधामूलक होने से अविवक्षितवाच्य तथा विवक्षितान्यपर-वाच्य नामक दो काव्यभेद हैं। प्रथम (भेद) अर्थान्तर-संक्रमित-वाच्य तथा अत्यन्ततिरस्कृतवाच्य के रूप में दो प्रकार का है।

तत्रोत्तमो ध्वनिरित्यादिना। स चाभिधामूलतया लक्षणामूलतया च प्रथत इत्याह--तस्य लक्षणाभिधामूलत्वेनेति। लक्षणामूलत्वे सत्यविवक्षितवाच्याख्यः, मुख्यार्थबोधशालिन्यां लक्षणायां वाच्यांशस्याविवक्षितत्वात्। अभिधामूलत्वेन तु विवक्षितान्यपरवाच्याख्यः, अभिधायां वाच्ये बाधाभावात् विवक्षितत्वं व्यङ्ग्याङ्गत्वेन विवक्षणादन्यपरता चेति विवक्षितान्यपरवाच्यत्वमभिधामूलस्य। इत्थं लक्षणामूलोऽभिधामूलश्चेति सामान्यतो ध्वनिर्द्विराशिकः। तत्र लक्षणा-मूलस्यावान्तरभेदमाह—आद्योऽर्थान्तरेति। आद्यो लक्षणामूलः सोऽर्थान्तर-संक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विधा। अजहत्स्वार्थतया स्वसिद्धये पराक्षेपे सत्यर्थान्तरसंक्रमितवाच्यः। यथा—

प्रारम्भे श्रुतिसुन्दरं परिणतौ पथ्यं जनैः सुग्रहं
नानाशास्त्ररसैः प्रसन्नशिशिरैः प्रत्यक्षरं क्षालितम्।
आह्लादाय न कस्य नाम विदुषां वक्त्राम्बुजादुद्गतं
चित्तान्तर्विकसद्विवेकमुकुलामोदानुविद्धं वचः॥

अत्रैवंविधं वच उपदेशलक्षणेऽर्थान्तरे संक्रामति। वचोमात्रस्यैवं वैशिष्ट्या-सम्भवात्। अथ यदा जहत्स्वार्थतया परार्थं स्वसमर्पणं तदात्यन्ततिरस्कृत-वाच्याख्यः। यथा—

एके भूतवदासते जलधियो जिह्नेति तत्सन्निधा—
वन्ये दुर्विचिकित्सितं विदधते तेभ्योऽपि बीभत्सते।
अस्थाने बहुधा स्तुवन्ति कतिचित् तैरुत्कया दह्यते,
विद्या विक्लवते कया न विधया प्राप्यान्तिकं दुष्प्रभोः।

अत्र विद्यायां ह्रीबीभत्सादिर्गङ्गादौ घोषाधिकरणतादीव सर्वथा स्वसंयोगिने स्वार्थमपरित्यज्य न सम्भवतीत्यत्यन्ततिरस्कृतवाच्यता। इत्थमविवक्षितवाच्य-स्यार्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदौ।

१. काव्य°—अ० नि० पुस्तकयोर्नास्ति।

द्विविधः ।[१] द्वितीयोऽप्यसंलक्ष्यक्रम[२]-संलक्ष्यक्रमव्यङ्ग्यतया द्विविधः। लक्षणामूलः[३]शब्दशक्तिमूलो वस्तुध्वनिः। असंलक्ष्यक्रमव्यङ्ग्योऽर्थशक्तिमूलो[४] रसादि[५]-ध्वनिः। संलक्ष्यक्रमव्यङ्ग्यः शब्दार्थोभयशक्तिमूलो[६] वस्तुध्वनिरलंकारध्वनिश्चेति। तत्र रसादिध्वनिरलंकार[७]-मञ्जर्यां दर्शितः काव्यस्य शृङ्गारप्रधानत्वात्। शिष्टस्तु यथावसरं तत्रैव विभक्तः[८]।

दूसरा भी (अर्थात् विवक्षतान्यपरवाच्य) असंलक्ष्यक्रमव्यंग्य तथा संलक्ष्यक्रमव्यंग्य के रूप में दो प्रकार का है। शब्दशक्तिमूलक वस्तुध्वनि लक्षणामूलक है। अर्थशक्तिमूलक रसादि-ध्वनि असंलक्ष्यक्रमव्यंग्य है। शब्दार्थोभय शक्तिमूलक वस्तुध्वनि तथा अलंकारध्वनि संलक्ष्यक्रम व्यंग्य हैं। इनमें से रसादिध्वनि का दिग्दर्शन, काव्य के शृंगार-प्रधान होने से, 'अलंकारमंजरी' में किया जा चुका है। शेष (भेदों) का भी विभाग, प्रकरण के अनुसार, वहीं बताया गया है।

अथाभिधामूलप्रभेददिक्—द्वितीयोऽपीति। द्वितीयोऽभिधामूलो विवक्षितान्यपरवाच्याख्यः तत्र क्वचिद् व्यङ्ग्यक्रमो न संलक्ष्यते क्वचित् संलक्ष्यते। तस्माद्विवक्षितान्यपरवाच्योऽप्यसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः। अथानयोर्लक्षणाभिधामूलयोर्ध्वन्योर्वस्त्वलङ्काररसरूपतां विषयविशेषे व्यवस्थापयितुमाह—लक्षणामूल इत्यादिना। यो हि लक्षणामूलः स नियमेन शब्दशक्तिमूलो वस्तुरूपश्च भवति। यद्धि यावदस्ति जातिगुणक्रियाद्यात्मकं पदार्थजातं

१. द्विभेदः—अ० शा०। २. °क्रम°—ना० पुस्तके नास्ति।
३. लक्षणामूलशब्द°—नि०।
४. लक्षणमूलशब्दशक्तिमूलो वस्तुध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः। अर्थशक्तिमूलो वस्तु (रसादि)—इत्येषा दुरवबोधत्वाद्भ्रष्टा वाक्ययोजना नि० पुस्तके। ५. वस्तु° (रसादि)—नि०।
६. वस्तुध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः। अर्थशक्तिमूलो वस्तु (रसादि) ध्वनिः संलक्ष्यक्रमव्यङ्ग्यः शब्दार्थोभयशक्तिमूलो—इत्यादि दुरवबोधा नि० पुस्तकस्य वाक्ययोजना। इतः पूर्वमतिजीर्णं पठितुमशक्यं च शा[१] पुस्तकम्।
७. ०ध्वनिः कालिदासादिप्रबन्धेषु—अयं पाठः अ० पुस्तके ०ध्वनिरलङ्कारमञ्जर्यां दर्शितः—इतिस्थाने वर्तते।
८. शिष्टस्तु···विभक्तः—अ० पुस्तके नास्ति।

सर्वमेवैतद् वस्तु कथ्यते। तदेव कविकल्पितविच्छित्तिसध्रीचीनमलङ्कारः। रसास्तु विभावानुभावव्यभिचारिभिरभिव्यज्यमाना रत्यादयः सहृदयप्रतीतिविशेषाः। अथ विवक्षितान्यपरवाच्ये योऽयमसंलक्ष्यक्रमव्यङ्ग्यः स नियमेनार्थशक्तिमूलो रसादिरूपश्च भवति। संलक्ष्यक्रमव्यङ्ग्यस्तु शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च भवति। नियमेन वस्तुरूपोऽलङ्काररूपश्च भवति। तत्र यदा रसभावरसाभासभावाभासभावोदयभावशान्तिभावसन्धिभावशवलता व्यज्यन्ते तदा क्रमो न संलक्ष्यते इत्यसंलक्ष्यक्रमत्वम्। तत्र रसेषु संभोगात्मा यथा—

पुष्पोद्भेदमवाप्य केलिशयनाद् दूरस्थया चुम्बने
कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते।
आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं
मन्दान्दोलितकुण्डलस्तवकया तन्व्या विधूतं शिरः॥

अत्र नायिकानायकवृत्तान्तलक्षणो यो वाच्योऽर्थः या च सहृदयप्रतीतेर्वेद्यान्तरविगलनेन वर्ण्यवस्तुतन्मयी भाव(?ना)लक्षणा रससंवित् न खलु तयोः क्रमः संलक्ष्यते। विद्यमानोऽपि पद्मपत्रशतव्यतिभेदनयेनाविद्यमानवदुपलक्ष्यते। विप्रलम्भश्रृङ्गारो यथा—

नान्तः प्रवेशमरुणद् विमुखी न चासी—
दाचष्ट रोषपरुषाणि न चाक्षराणि।
सा केवलं सरलपक्ष्मभिरक्षिपातैः
कान्तं विलोकितवती जननिर्विशेषम्॥

एवमादिष्वक्रमत्वं प्राग्वदनुसन्धेयम्। हास्यो यथा—

पइमरणमंडणुं जलवेसा पासंगएसु तरुणेसु।
णिधसरं परु अंती सविंभमं हण इथणपम्॥
[पतिमरणमण्डनोज्ज्वलवेषा पार्श्वमुपगतेषु तरुणेषु।
स्निग्धस्वरं प्ररुदन्त्या सविभ्रमं स्तनवृत्तहननम्॥]

अत्र पतिमरणमण्डनोज्ज्वलवेषायास्तरुणेषु पार्श्वमुपगतेषु सत्सु सद्यः स्निग्धस्वरं प्ररुदन्त्याः सविभ्रमं यदेतत् स्तनवृत्तहननं तत् प्रच्छन्नानुरागस्यानौचित्येन प्रवृत्तेर्हास्यमभिव्यनक्ति। करुणस्य यथा—

साहित्यलक्षणकले समुपैषि नव्यं वैधव्यमद्य विरते गुरुविष्णुदेवे।
कर्णान्तिकप्रणयनप्रणयोत्सवाय तालीदलार्पणमितः परमक्षमन्ते॥

रौद्रस्य यथा—

दृप्यत्सूकरकालखण्डशकल व्याकीर्णधारान्तराः
क्रोधोत्तालललुलायकण्ठनलकच्छेदार्थवक्राननाः ।
श्रीवल्लाल विधाय केलिमृगयामावर्तमानस्य ते
शार्दूलेन्द्रवसाभिषेकसरसा जीयासुरुग्राः शराः ॥

वीरस्य यथा—

आधातुर्भुवनं तदेतदखिलं चक्षुष्मदाकीटकाद्
दीप्यं चक्षुरनन्यलभ्यमुभयत्रास्ते परं दुःसहम् ।
फाले भूतपतेर्मनोभवमुखक्षुद्रक्षयोज्जागरं
बाणे च प्रतिराजदर्पदलनं वल्लालपृथ्वीपतेः ॥

भयानकस्य यथा—

गिरिकुञ्जरेषु गूढानां तवारिवरयोषिताम् ।
असूर्यंपश्यतामात्रं भूतिचिह्नेषु शिष्यते ॥

बीभत्सस्य यथा—

स्वात्मानन्दं किमपि परमस्वादु संभुञ्जते ये
तेषामस्यां विषयविततौ जायते हेयबुद्धिः ।
अन्येषां तु प्रसरतितरां प्रत्युतास्वादनेच्छा
छर्दिक्लिग्ने कफकलुषिते मक्षिकाणामिवान्ने ॥

अद्भुतस्य यथा—

आकर्णितोत्तमगुणानुगुणेति कृत्वा
यामुल्लिलेख सुचिरेण मनो मदीयम् ।
कामाकृतिं विसदृशीमतिमात्रमस्या
दास्येऽपि नास्मि विनिवेशयितुं विदग्धः ॥

अत्र सुचिरमदृष्टनायिकारूपस्य गुणश्रवणानुरागिणो नायकस्य नायिकाप्रथमसंदर्शने आकर्णितोत्तमगुणानुगुणतया मनसा समुल्लिखितचरी या नायिकामूर्तिः सा सम्प्रति साक्षात्कृतनायिकामूर्तेरतिमात्रं विसदृशी सती दासीत्वेनापि निवेशयितुं न शक्यते इत्युक्तिराभिरूप्यनिबन्धनस्य विस्मयस्य परां काष्ठामाविष्करोति । शान्तस्य यथा—

मा भैषीः कुलमाप्यथ स्वविनयक्लेशोऽस्तु मा ते श्रुत—
प्रध्वंसाय यतस्व मा खलु मते माहात्म्य मा मा त्यज ।

युष्मद्गौरवसारदारणपरान् मत्वा तृणाय प्रभून्
भिक्षापर्यटनार्जितेन कलये पिण्डेन पिण्डस्थितिम् ॥

इत्थं रसध्वनिर्दिङ्मात्रेणोदाहृतः। अथ भावध्वनिः। भावो नाम नायिकाव्यतिरिक्ते देवतागुरुनृपपुत्रादौ व्यज्यमाना रतिर्वाक्यार्थत्वेन व्यज्यमाना निर्वेदादयो व्यभिचारिणश्च। आद्यो यथा—

अद्य स्वप्नमुपागतेन यमुनातीरे मयावस्थितं
दृष्टं तत्र च वेणुवादनिपुणो बालो गवां पालकः।
तं दृष्ट्वा करणैरनन्यविषयैरन्तर्विलीनोऽभवं
यावत् तावदहं चिरादुपचितैः पापैः प्रबोधं गतः॥

यथा च—

संसारार्त्या विधुरविधुरो ब्रह्म यत्नाद्विचिन्वन्
नानारूपं जगदिदमहं दृष्टवानेव पूर्वम्।
हस्ते न्यस्ते सति तव गुरो साम्प्रतं मस्तके ऽस्मिन्
ब्रह्मैवैतत् सकलमभवं नो जगन्नापि चाहम् ॥

यथा च—

काष्ठाप्राप्तिरियं परा खलु परीपाकस्य भाग्योन्नतः
श्रीवल्लालनृपाल यद् वयमिमौ पादौ तवोपास्महे।
यस्तिष्ठेत् प्रतिहारसीम्नि भवतो रुद्धप्रवेशश्चिरं
किं नासावपि चोलपाण्ड्यपृथिवीपालैः समं गण्यते ॥

इत्थं पुत्रादिविषये व्यभिचारिरूपश्च भावः स्वयमभ्यूह्यः। रसाभासो यथा—

स्फुरन्मुखामोदविवृद्धगन्धं जिघ्रन् मुहुः कीलितरक्तनेत्रः।
पूर्वं प्रिया-चञ्चुपुटोपयुक्तं चूताङ्कुरं चुम्बति चञ्चरीकः ॥ इत्यादि।

अत्र तिर्यक्विषयत्वाद्रसस्याभासता, धीरोदात्तत्वाद्यभावाद्। यदाह— "उत्तमप्रकृतिरुज्ज्वलवेषश्च श्रृङ्गार" इति। नायकत्वाद्यारोपादयमपि रस इत्याचार्याः। भावाभासो यथा—

क्वणद्-द्विरेफावलिनीलकङ्कणं प्रसार्य शाखाभुजमाम्रवल्लरी।
कृतोपगूहा कलकण्ठकूजितैरनामयं पृच्छति दक्षिणानिलम् ॥

अत्र सौहार्दस्यारोपितत्वाद्भाव आभासीभवति। भावोदयो यथा—

केलितल्पगतमङ्घ्रियावकं सूचयत्युषसि चक्षुषा प्रिये।
भ्रूत्रिभागमुपकल्प्य भङ्गुरं गूढहासमधुरं चुकोप सा ॥

अत्र लज्जाहर्षयोरुदयः। भावसन्धिर्यथा—

नेत्रे जिह्मखरारुणेक्षणमथ व्यामील्यमानेक्षणं
हस्तं व्यग्रगमागमं क्षणमथो दन्ते शयानं क्षणम्।
सञ्चारं विषमाकुलं क्षणमथ प्रक्रान्तलीलं क्षणं
धत्ते तोत्रिषु षट्पदेषु च समं दत्तावधानोऽङ्गजः॥

अत्र गजस्य मदाकुलस्य यदेतत् क्षणमात्रं नेत्रयोर्जिह्मखरारुणयोर्धारणं समनन्तरमेव यच्चैतद् व्यामीलनं तथा हस्ते च योऽयं क्षणमात्रं व्यग्रो गमागमः यच्च समनन्तरमेव दन्ते शयनं सञ्चारे च येयं क्षणमात्रं विषमाकुलता समनन्तरमेव यश्चायं लीलाप्रक्रमः तदेतद् विलक्षणं विविधं प्रविचेष्टितद्वयमुद्भवाभिभवधर्मितया क्षणात् क्षणमाविर्भवत् तोत्रिविषयं रोषं षट्पदशब्दलक्षितषट्पदगीति विषयं हर्षं च परस्परस्यादत्तावसरतया समुत्क्षुभितमभिव्यनक्ति। द्वन्द्ववृत्तिषु च त्रिष्वपि वाक्येषु प्रतिस्वं क्षणं क्षणमित्युपादानाद् यथा यथा समुत्क्षुभिताब्धिकल्लोलकल्पतया तोत्रिणामुपर्युपरि विनिपातजन्मानो रोषावेशमहावेगाः तथा तथा तदभिभवक्षमाणां षट्पदगीताकर्णनसुखाभिनिवेशविकासानां मध्ये मध्ये प्रादुर्भाव इति प्रत्याय्यते। धत्त इति वर्तमाननिर्देशेन प्रारब्धापरिसमाप्तभावादेकतरस्याङ्को भावनिष्ठेति द्योत्यते। तथा जिह्मखरारुणत्वव्यग्रगमागमत्वविषमाकुलत्वलक्षणधर्मयोगाद् व्यामील्यमानत्वदन्तशयानत्वप्रक्रान्तलीलत्वलक्षणधर्मयोगाच्चानुलक्षणमाकुलीभावमापद्यमानैर्नेत्रहस्तसंचारैर्लिङ्गैर्यदेतद् बोध्यते तोत्रिषु षट्पदेषु च तुलितमवधानदानं तदप्येकतरस्यां कोटावनिष्ठामेव व्यनक्ति। अतो रोषहर्षलक्षणयोर्भावयोरयं सन्धिः। भावशवलता यथा—

मध्येसखीजनमुपह्वरवृत्तजातं वाचा प्रकाशयति मय्यपदेशवत्या।
सासूयसप्रणयसत्रपसप्रसादैः सा मां विलोकितवती चटुलैः कटाक्षैः॥

अत्रासूयादीनां कटाक्षेषु समारोपाद् वाच्यता न मन्तव्या। अतो ह्येवंविधभावशवलता व्यज्यते। भावशान्तिर्यथा—

तौ सम्मुखं प्रचलितौ सविधे गुरूणां
मार्गप्रदानरभसस्खलितावधानौ।
पार्श्वापसर्पणमुभावपि भिन्नदिक्कं
कृत्वा मुहुर्मुहुरपासरतां सलज्जौ॥

अत्र मतिविबोधयोरुपशमः। एषु रसादिध्वनिषु प्रपञ्चोऽन्यतो ज्ञेयः। चित्रकाव्यप्रपञ्चनपरेण ग्रन्थकारेणैवातिसङ्कोचितत्वात् अस्माभिर्दिङ्मात्रमुदाहरणैः प्रदर्शितम्।

अथ संलक्ष्यक्रमे शब्दशक्तिमूलोऽलङ्कारूपो वस्तुरूपश्च नियमेन भवति। अलङ्काररूपो यथा—

प्राप्याधरद्वयधुरां परिचुम्बतीव लीलोत्तरं विलिखतीव नखत्वमेत्य।
तस्याः कटाक्षवलनं गुरुसन्निधौ मामाश्लिष्यतीव समवाप्य च बाहुभावम्॥

अत्रोत्प्रेक्षालङ्कारेण चुम्बनादिकारणाभावेऽपि सम्भोगसुखावाप्तिलक्षण-कार्योत्पत्तिरूपा विभावना व्यज्यते। वस्तुध्वनिर्यथा—

दृष्टिः कातरतामुपैति सहसा तस्मिन् पुरोऽवस्थिते
नर्मालापिनि तत्र न प्रतिवचो जिह्वाग्रमारोहति।
संस्पर्शं च न तस्य वेत्त्युपचितस्तम्भं ममैतद् वपुः
संवृत्तः सखि सङ्गमोऽपि विरहप्रायो विधातास्मि किम्॥

अत्र वस्तुन्यवस्तुभ्रमान्मौग्ध्यलक्षणं वस्तु प्रत्याय्यते। अथार्थशक्तिमूले व्यञ्जकोऽर्थः स्वतःसम्भवी कविप्रौढोक्तिनिष्पादितश्चेति त्रिरूपः। स चा-लङ्काररूपो वस्तुरूपश्चेति प्रत्येकं द्वैविध्ये षोढा। षड्विधस्य च व्यंजकस्य व्यङ्ग्योऽर्थो वस्तुरूपोऽलङ्काररूपश्चेति द्वादशभेदोऽयम्। तथाहि स्वतः सम्भविना वस्तुना वस्तु, स्वतः सम्भविना वस्तुनालङ्कारः, स्वतः सम्भविना-लङ्कारेण वस्तु, तेनालङ्कारः, कविप्रौढोक्तिनिष्पादितेनालङ्कारेण वस्तु, तेनालङ्कारः इति चतुर्धा। तथा कविप्रौढोक्तिनिष्पादितेन वस्तुना वस्तु, तेनालङ्कारः, कविप्रौढोक्तिनिष्पादितेनालङ्कारेण वस्तु, तेनालङ्कारः इत्यपि चतुर्धा। इत्थं कविनिबद्धवक्तृप्रौढोक्तिनिष्पादितेऽपि विषये चातुर्विध्यमनुसन्धेयम्। अत्र प्रपञ्चः सम्प्रदायप्रकाशिन्यां काव्यप्रकाशटीकायामस्माभिर्वितत्योपदर्शित इति तत एवावधार्यः। इह तु ग्रन्थगौरवभयात् प्रस्तावानुपयोगाच्च न प्रतन्यते। दिङ्मात्रं तूदाह्रियते। तत्र स्वतः सम्भविना वस्तुना वस्तु यथा—

अद्यापि लोके न कविर्न सोऽस्ति प्राचां तुलां यः प्रबलोऽधिरोढुम्।
पुरातनो नायमितीयदेव तथापि निन्दा यदि किं करोतु॥

अत्र स्वतः सम्भविना वस्तुनाहमेवंविध इति वक्तुः स्वमाहात्म्यप्रख्यापन-लक्षणं वस्तु प्रत्याय्यते। कविनिबद्धेनालङ्कारेण वस्तु यथा—

दृष्टिर्निष्ठुरबद्धसारखदिराङ्गारस्फुलिङ्गोपमा
जिह्वे सज्जनतर्जनोद्व्रणवलत्कालाङ्गुलीचञ्चले।
दन्ताश्चान्तककेलिकाननविषाङ्कूटानुकाराः सरवे
जङ्घे द्वे यदि ते भुजङ्गभुवनं वल्मीकशेषं भवेत्॥

गुणीभूतव्यङ्ग्यो[1] वाच्याङ्गत्वादिभेदैर्यथासंभवं समासोक्त्यादौ [2]दर्शितः । चित्रं तु [3]शब्दार्थालंकारस्वभावतया बहुतरप्रभेदम् । तथा हि—

गुणीभूतव्यंग्य के वाच्यांग आदि भेदों का भी यथासम्भव विवेचन समासोक्ति आदि (अलंकारों के प्रकरण) में किया गया है । चित्र (काव्य) के तो शब्दालंकार एवं अर्थालंकार के स्वभाव का होने से अनेक भेद होते हैं । जैसे कि—

अत्र कविप्रौढोक्तिनिष्पादितेनाप्रस्तुतप्रशंसालङ्कारेण विधिविहितमनार्याणां क्वचिदंशे दौर्बल्यं विश्वमभिरक्षतीति वस्तु । कविनिबद्धवक्तृप्रौढोक्तिनिष्पादितेनालङ्कारेणालङ्कारो यथा—

अणिवारिओपगूहणसंलुं (तुं) दालावसो अविवसजण ।
बंधवमरणमहूसवदिअहे दिअहे समोवअरसु ।।

अत्रानिवारितोपगूहनस्वच्छन्दालापशोकविवशजनो बान्धवमरणमहोत्सवदिवसे दिवसे समवतरेति कविनिबद्धायाः स्वैरिण्याः प्रौढोक्तिनिष्पादितेन रूपकालङ्कारेण उपगूहनादिनिवारणशालिभ्यो महोत्सवान्तरेभ्योऽस्य बान्धवमरणमहोत्सवस्यातिशयप्रत्यायनात्मा व्यतिरेकालङ्कारः प्रत्याय्यते । इत्थमन्यदभ्यूह्यम् ।

अथ गुणीभूतव्यङ्ग्यस्वरूपदिक्—गुणीभूतव्यङ्ग्यं वाच्याङ्गत्यादि । वाच्याङ्गत्वमगूढत्वम् । अपराङ्गत्वमस्फुटत्वम् संदिग्धप्राधान्यं तुल्यप्राधान्यम् । काक्वाक्षिप्तमसुन्दरत्वमिति वाच्याङ्गत्वादयो भेदाः । समासोक्त्यादौ प्रदर्शितमितीति ध्वनिकारादिभिरिति शेषः । तत्र वाच्याङ्गत्वं यथा—

शून्ये त्वद्रिपुराजधानिसुदृशां चित्रार्पितानां करं
सल्लापस्पृहया पतन्नपि मुहुः वीरः समारोहति ।
श्रीवल्लालनृपाल शिञ्जितरसान्मञ्जीररेखामुखं
चञ्च्वग्रेण च हन्त हंसपृथुकः सञ्चालयन् क्रन्दति ।।

अत्र शून्यीकृतरिपुराजवेश्मा नायकप्रभावातिशयः प्रतीयमानोऽपि शुकहंसवृत्तान्तोपपादकत्वेन स्थित इति वाच्याङ्गम् । इत्थमगूढत्वादयो भेदा ज्ञेयाः । इत्थं ध्वनिगुणीभूतव्यङ्ग्ययोः काव्ययोः स्वरूपमुपोद्घातत्वेन यथोपयोगमुपन्यस्य प्रकरणे प्रतिपिपादयिषितं चित्राख्यं काव्यमधिचिकीर्षुराह—चित्रं त्विति । ध्वनिगुणीभूतव्यङ्ग्यापेक्षया भेदबाहुल्यं तरबर्थः । अथादिसूत्रमवतारयितुमाह-तथाहीति । अथ सूत्रम्—

१. °व्यङ्ग्यम्—अ०, सं० । २. प्रदर्शितम्—अ०, सं० ।
३. शब्दार्थोभयालंका°—अ० ।

**इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः ॥सू० १॥**

आदौ पौनरुक्त्यप्रकारवचनं [1]वक्ष्यमाणालंकाराणां [2]कक्षाविभागघटनार्थम्। अर्थापेक्षया [3]शब्दस्य प्रतीतावन्तरङ्गत्वेऽपि प्रथममर्थगतधर्म[4]-निर्देशश्चिरंतनप्रसिद्ध्या पुनरुक्तवदाभासस्य पूर्वं लक्षणार्थः[5]। इहेति[6]

'यहाँ' अर्थपौनरुक्त्य, शब्दपौनरुक्त्य और शब्द तथा अर्थ का पौनरुक्त्य, इस प्रकार पौनरुक्त्य के तीन भेद हैं। सू० ।१॥

प्रारम्भ में पौनरुक्त्य के भेदों का उल्लेख आगे बताए जाने वाले अलंकारों का श्रेणी-विभाग करने के लिए हुआ है। अर्थ की अपेक्षा शब्द की प्रतीति पहले होती है, तथापि पहले अर्थ में रहने वाले धर्म (अर्थपौनरुक्त्य) का निर्देश, प्राचीन परम्परा का अनुसरण करते हुए, पुनरुक्तवदाभास (अलंकार) का लक्षण सर्वप्रथम करने के लिए, किया गया है। 'यहाँ' (इह) का अर्थ

"इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः।"

ननु चित्रमित्युपक्रम्य पौनरुक्त्यप्रकारकथने का सङ्गतिरित्यत आह—आदौ पौनरुक्त्येत्यादि। पौनरुक्त्यप्रकाराणामेषां यदेतदादौ वचनं तन्निरूपयिष्यमाणानां शब्दार्थोभयाश्रयतया कक्ष्याविभागं घटयितुम्। कक्ष्याविभागस्यैव च स्फुटीकाराय प्रत्येकं पौनरुक्त्यग्रहणम्। अतोऽनुप्रासयमकादयः शब्दालङ्काराः, उपमारूपकादयोऽर्थालङ्काराः, लाटानुप्रासादयस्तूभयालङ्कारा इति कक्ष्याविभागोऽनुसन्धेयः। ननु शब्दप्रतीतिपूर्वकत्वादर्थप्रतीतेः प्रथममर्थपौनरुक्त्यानिर्देशो न युज्यत इत्यत आह—अर्थापेक्षयेत्यादि। अन्तरङ्गत्वं प्राथमिकत्वम्। अर्थगतनिर्देशः अर्थविषयपौनरुक्त्यनिर्देश इत्यर्थः। चिरन्तनप्रसिद्ध्या भामहोद्भटादिपूर्वाचार्यप्रसिद्धचनुसारेण। ते हि पुनरुक्तवदाभासाख्यमर्थालङ्कारमेव पूर्वं लक्षितवन्तः। निर्दिष्टस्य च पौनरुक्त्यमयस्य सम्प्रति-

[1] लक्ष्यमाण°—ना०। [2] कक्ष्या°—अ०, सं०।
[3] शब्दस्याप्र°—नि०। [4] °धर्म°—अ० पुस्तके नास्ति।
[5] लक्षणार्थम्—ना०।
[6] इति—अ० ना० पुस्तकयोर्नास्ति। इहेति···°सिद्धेः—इयानंशः शा[1] पुस्तके भग्नः।

शाब्दे प्रस्तावे[1]। इतिशब्दः प्रकारे। त्रिशब्दादेव [2]संख्यापरिसमाप्तिसिद्धेः।

**तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥सू० २॥**

प्ररूढाप्ररूढत्वेन द्वैविध्यम्। प्रथमं हेयवचनमुपादेये विश्रान्त्यर्थम्। तत्रेति त्रयनिर्धारणे। यथावभासन[3]-विश्रान्तिः प्ररोहः।

है शब्दप्रस्थान में। 'इस प्रकार' (इति) शब्द भेद के अर्थ में आया है,[4] क्योंकि संख्या की समाप्ति का ज्ञान तो 'तीन' शब्द से ही हो जाता है।[5]

'इनमें से' अर्थ का पौनरुक्त्य प्ररूढ़ होने पर दोष है। सू० २॥

प्ररूढ़ और अप्ररूढ़ के रूप में दो प्रकार के दोष (हेय) का पहले निर्देश उपादेय (अलंकार) का ग्रहण कराने के लिए किया गया है। 'इनमें से'—(तत्र) का अर्थ है तीन (प्रकार के पौनरुक्त्य) का निर्धारण कर लेने पर। जैसा (प्रारम्भ में) प्रतीत हो उसी प्रकार विश्रान्ति (अन्त) होना प्ररोह कहलाता है।

पन्नतामभिसंधायाह—शाब्दे प्रस्थान इति। इति शब्दं योग्येऽर्थे व्यवस्थापयति इतिशब्दः प्रकार इति। ननु त्रय एवेति समाप्त्यर्थता किं नेष्यत इत्यत आह—त्रिशब्दादेवेत्यादि। अत्रायमाशयः—विभागेनैव त्रित्वमवगतं त्रिशब्दात्तु परिसमाप्तिः सिद्धा, सिद्धे सत्यारम्भो नियमार्थेति न्यायात्। अतः इतिशब्दः प्रकारे विवक्ष्यते। न च मन्तव्यं सति प्रकारशब्दे पौनरुक्त्यं प्रसजेदिति। प्रकारशब्दो हि पौनरुक्त्यप्रकारमाह। स च पौनरुक्त्यप्रकारः केन प्रकारेण त्रिप्रकार इति जिज्ञासायामितिशब्दस्तत्प्रकारवचन इति सर्वमवदातम्।

विभागाधिगतं त्रित्वं त्रिशब्देन समाप्यते।
त्रिप्रकारत्ववचन इतिशब्दस्ततो मतः॥

अथैषु पौनरुक्त्येषु हेयांशं विभक्तुं सूत्रम्—

"तत्रार्थपौनरुक्त्यं प्ररुढं दोषः।"

१. शाब्दे प्रस्थाने—अ० सं०। शब्दः प्रस्तावे— ना०

२. संख्यासमाप्ति°—अ०। ३. °नम् वि°—अ०।

४ 'इति' शब्द के अनेक अर्थ हैं, जैसे कि हेतु, प्रकरण, प्रकार आदि तथा समाप्ति—इति हेतुप्रकरणप्रकारादिसमाप्तिषु।

५ सूत्र में आए तीन शब्द से संख्या का ज्ञान हो जाता है अतः इति शब्द का यहाँ अर्थ समाप्ति न होकर प्रकार या भेद है।

**आमुखावभासनं पुनरुक्तवदाभासम्[1] ।।सू० ३।।**

आमुखग्रहणं पर्यवसाने[2]ऽन्यथात्वप्रतिपत्त्यर्थम् । लक्ष्यनिर्देशे नापुंसकः संस्कारो लौकिकालंकारवैधर्म्येण काव्यालंकाराणामलंकार्यपार[3]-तन्त्र्यध्वननार्थः । अर्थपौनरुक्त्यादेवार्थाश्रितत्वादर्थालंकारत्वं [4]ज्ञेयम् ।

प्रारम्भ में पुनरुक्त-सा भासित होना पुनरुक्तवदाभास है ।सू० ३।।

'प्रारम्भ में'--(आमुख पद) का तात्पर्य है अन्त में भिन्न प्रतीत होना । परिभाषित (प्रस्तुत अलंकार) का निर्देश करते हुए नपुंसकलिंग का रूप (पुनरुक्तवदाभासम्), लौकिक अलंकारों से बिपरीतरूप में काव्यालंकारों की अलंकार्य (शब्दार्थमय काव्य) के प्रति परतन्त्रता (अपृथग्भाव) को व्यंजित करने के लिए हुआ है ।[5]

अर्थ की ही पुनरुक्ति होने से, अर्थ पर आश्रित होने के कारण इसे

प्ररूढग्रहणस्य व्यावर्त्यमुद्घाटयति—प्ररूढाप्ररूढत्वेनेति । उपादेयविश्रान्त्यर्थमिति । उपादेये प्रतियोग्यन्तरे प्रसृतायाः प्रतिपत्तृप्रतीतेरप्याक्षेपायेत्यर्थः । हेयांशे हि विविच्य त्यक्ते स्वरसा भवत्युपादेयमीमांसा । त्रयनिर्धारण इति । भावानयने द्रव्यानयनमिहानुसर्तव्यम् । निर्धारिते पौनरुक्त्यत्रय इत्यर्थः । ननु प्ररूढो दोष इत्युच्यते कोऽयं प्ररोह इत्यत आह—यथाभासनमित्यादि । यच्छ्रवणसमनन्तरं यदवभातं तत् तथैव चेत् प्रतीतिविश्रान्त्यन्तं निर्बाधमवतिष्ठेत् स प्ररोह इत्यर्थः ।

यथोद्देशं पौनरुक्त्यमधिकृत्य सूत्रम्—

"आमुखावभासनं तु पुनरुक्तवदाभासम् ।।"

आमुखमारम्भः । पर्यवसानान्यथात्वेत्यनेन हेयाद्वैधर्म्यं दर्शितम् । ननु लक्ष्यपदे पुनरुक्तवदाभास इति स्वरूपप्राधान्येन निर्देशो न्याय्यः, न तु पुनरुक्तवदाभासमिति काव्यपरतन्त्रतयेत्यत आह—लक्ष्यनिर्देश इत्यादि । नापुंसकः

१. भासः—शा[1] ।
२. °सानान्य°—अ० ।
३. °लंकार—अ० ।
४ °लङ्कारोऽयम्—अ० पुस्तकपाठः, °लङ्कारत्वं ज्ञेयम्—इति स्थाने ।
५ लौकिक अलंकार अपने अलंकार्य कान्ता के अंग आदि से स्वतन्त्र हैं, पृथक् हैं, किन्तु काव्यालंकार सर्वदा अपने अलंकार्य (शब्दार्थमय काव्य) के अधीन हैं, उनसे पृथक् नहीं रह सकते हैं ।

प्रभेदास्तु विस्तरभयान्नोच्यन्ते । उदाहरणं मदीये[1] श्रीकण्ठस्तवे यथा[2]—

अहीनभुजगाधीशवपुर्वलयकङ्कणम् ।
शैलादिनन्दिचरितं क्षतकंदर्पदर्पकम् ।।२।।
वृषपुंगवलक्ष्माणं शिखिपावकलोचनम् ।
ससर्वमङ्गलं नौमि पार्वतीसखमीश्वरम्[3] ।।३।।

(पुनरुक्तवदाभास को) अर्थालंकार मानना चाहिये । (इसके) अनेक भेदोपभेद को तो विस्तार के भय से नहीं बताएगें । उदाहरण जैसे कि मेरे श्रीकण्ठ-स्तव में—

विशाल सर्पराजों का शरीर-वलय जिनका कंकण है, नन्दी प्रमुख (गणों) को आनन्दित करने वाला जिनका चरित्र है, जिन्होंने कन्दर्प के दर्प को चूर किया है, वृषपुंगव जिनका चिह्न है, ज्वालामयी अग्नि जिनका लोचन है, सारे मंगलों से सम्पन्न पार्वती के सहचर उन शिव को प्रणाम करता हूँ[4] । २-३।।

**संस्कारः ।** पुनरुक्तवदाभासो यत्रेति बहुव्रीहिसमाश्रयणात्मा । अलङ्कार्यपारतन्त्र्यध्वननार्थ इति । लौकिकालङ्कारवन्न काव्यालङ्काराणामलङ्कार्यपृथग्भावेनाप्यवस्थानसम्भवः, अपितु नियमेन काव्यपारतन्त्र्यमेवेति ज्ञापनायेत्यर्थः । अर्थालङ्कारत्वमस्य स्फुटमेवेत्याह—अर्थपौनरुक्त्यादेवेत्यादि । अनतिगम्भीरेंऽशे वृथाप्रथनभीरुतामाविश्चिकीर्षुराह—प्रभेदास्त्विति । अवान्तरभेदाः प्रभेदाः । मङ्खीये मङ्खाख्यकविकर्तृके । अहीनेति । इनः स्वामी अहीनामिनो भुजङ्गानामधीशश्चेति । वलयं कङ्कणं वेत्यामुखे पौनरुक्त्यावभासनम् । पर्यवसाने त्वहीनस्य महतो भुजगाधीशस्य वपुर्वलयं कङ्कणमस्येत्यन्यथात्वमित्यर्थः । शिलादस्यापत्यं शैलादिः । शैलादेरिव नन्दिन इव चरितमस्येति, शैलादिं नन्दयति चरितमस्येति च । तथा क्षतः कन्दर्पो दर्पकश्चेति

1. मङ्खीये—अ० । 2. यथा—अ०ना० पुस्तकयोर्नास्ति ।
3. इत्यादि—अ० श्लोकानन्तरम् ।
4. संस्कृत पद्य में अहीन तथा भुजगाधीश, वलय तथा कंकण, शैलादि तथा नन्दी, दर्प तथा दर्प, वृष तथा पुंगव, शिखी तथा पावक, ससर्वमंगल (सर्वमंगला-पार्वती-के सहित) तथा पार्वती-सखा शब्द प्रारम्भ में पुनरुक्त-से प्रतीत होते हैं किन्तु अर्थ का अनुसन्धान करने पर पता चलता है कि अहीन आदि शब्दों के अर्थ भिन्न हैं ।

[१]दारुणः काष्ठतो जातो [२]भस्मभूतिकरः परः ।
रक्तशोणार्चिरुच्चण्डः पातु वः पावकः शिखी ॥४॥

एतच्च[3] सुबन्तापेक्षया । तिङन्तापेक्षया [४]च यथा [५]तत्रैव--

भुजंगकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः[६] ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः[७] ॥५॥

इधन से दारुण बना हुआ, राख का ढेर लगा देने वाला, रक्त की भांति लाल ज्वालाओं वाला, प्रचण्ड, ज्वालामय पावक तुम लोगों की रक्षा करें[८] । ४॥

यह (पुनरुक्तवदाभास) सुबन्त की दृष्टि से था । तिङन्त (क्रिया शब्द) की दृष्टि से वहीं उदाहरण है—

सर्पों के कुण्डल पहिने, साफ दिखाई पड़ने वाले खरगोश ओर शुभ्र किरणों से युक्त चंद्र को धारण किए हुए, मनोहर शिव संसार को विनाश से सदा बचाएँ ।[९] ५॥

**कन्दर्पदर्पो येनेति च । तथा वृषः पुंरूपो गौश्चेति वृषश्रेष्ठ इति च । तथा शिखी पावकश्च लोचने यस्येति शिखिना पावनलोचन इति च । तथा सर्वमङ्गलसहितः पार्वतीसखश्चेति सर्वैर्मङ्गलैः सहितश्चेति च पौनरुक्त्यस्यावभासनं पर्यवसानान्यथात्वं चानुसन्धेयम् ।**

**अथ व्यस्ततया समासान्तराश्रयतया च दर्शयितुमुदाहरणान्तरम्—दारुण- इति । पौनरुक्त्यापेक्षया दारुण इति पञ्चम्यन्तं, पर्यवसाने तु प्रथमान्तम् । इत्थं भस्म च भूतिश्चेति, भस्मनो हि बृद्धिरिति च । तथा रक्तं च शोणं चेति, रुधिरवत् शोणमिति चावगन्तव्यम् । इत्थं सुबन्तापेक्षया द्विधोदाहृतम् ।**

१. पद्यमिदम् अ० पुस्तके नास्ति । २. भस्म—शा० पुस्तके नास्ति ।
३. च—ना० पुस्तके नास्ति । ४. च—अ० पुस्तके नास्ति ।
५. तथा—नि० । ६. °शेखरः—अ० । °शीतांशुशुभ्रगः—ना० शा[१] ।
७. शिवः ॥ इत्यादि—अ० ।
८ इस श्लोक में भी दारुणः तथा काष्ठतः, भस्म तथा भूति, रक्त तथा शोण और पावक तथा शिखी शब्दों के प्रारम्भ में एक ही अर्थ प्रतीत होते हैं ।
९ इस श्लोक में सुबन्त तथा तिङन्त दोनों का पुनरुक्तवदाभास है । भुजंग तथा कुण्डली, शशि, शुभ्रांशु तथा शीतगु सुबन्त के उदाहरण हैं, (अ-) पायात् तथा अव्यात् तिङन्त का उदाहरण है ।

**शब्दपौनरुक्त्यं [1]व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च। अलंकारप्रस्तावे केवल[2]-स्वरपौनरुक्त्य[3]-मचारुत्वान्न गण्यत [4]इति द्वैविध्यमेव।**

**संख्यानियमे पूर्वं छेकानुप्रासः ।।सू० ४।।**

**द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं संख्यानियमः। पूर्वं व्यञ्जन[5]-समुदायाश्रितम् यथा—**

व्यंजनमात्र का पौनरुक्त्य तथा स्वर-व्यंजन-समुदाय का पौनरुक्त्य इस प्रकार शब्द का पौनरुक्त्य दो ही रूप में (मान्य) है। क्योंकि स्वर-पौनरुक्त्यमात्र को, असुन्दर होने से, अलंकारप्रकरण में स्वीकार नहीं किया जाता है।

संख्या का नियम होने पर पहले छेकानुप्रास होता है। सू० ४।।

दो व्यंजनसमुदायों का परस्पर अनेक बार सादृश्य संख्या का नियम कहलाता है।[6] 'पहले' (पूर्वं) का अर्थ है व्यंजनसमुदाय पर आश्रित। जैसे—

**अथ तिङन्तापेक्षया—भुजङ्गेति। कुण्डली सर्पः। भुजङ्गश्च कुण्डली चेति भुजङ्गकुण्डलवानिति च। शशी शुभ्रांशुः शीतगुश्चेति शशिनः शुभ्रैरंशुभिः शीतं चक्षुरिन्द्रियमिति च। हरः शिव इति चेतोहर इति च योजनीयम्। शशी शुभ्रांशुः शीतगुरिति त्रिषु पौनरुक्त्यं दर्शितम्। पायादव्याच्चेति तु तिङन्तापेक्षया। इत इत्यपायविशेषणत्वेन, पर्यवसाने पञ्चम्यन्ततया पायादव्यादित्यन्यथात्वम्।**

**पुनरुक्तवदाभासो यत्रेत्येवं हि संस्क्रिया।**
**अलङ्कार्यैकनिघ्नत्वव्यक्तये समुपाश्रिता ।।**

१. °क्त्यं तु व्य°—अ०। २. केवलम्—नि०।
३. °क्त्यं चारुत्वाभावान्न—ना०।
४. गण्यते इति। इति द्वैविध्यमेव स्वरव्यञ्जनसमुदायपौनरुत्यं च—नि०।
५. व्यञ्जनमात्राश्रितम्—अ०। भग्नोऽत्र शा[1] पुस्तकलेखः।
६ संस्कृत में तीन वचन होते हैं—एक वचन, द्विवचन और बहुवचन। एक वचन का प्रयोग जाति या समूह के लिए हो सकता है तथा बहु वचन का प्रयोग स्वतः बहुत के लिए होता है अतः एकवचन या बहुवचन में संख्या का निर्धारण संभव नहीं है। संख्या का निर्धारण या नियमन द्विवचन में ही संभव है। द्विवचन के प्रयोग में संख्या के संबन्ध में सन्देह नहीं होता है।

किं नाम दर्दुर दुरध्यवसाय सायं
काय निपीड्य निनदं कुरुषे रुषेव ।
एतानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लज्जितोऽसि ॥६॥

अत्र सायंशब्देनास्यालंकारस्य यकारमात्रसादृश्यापेक्षया वृत्त्यनुप्रासेन सहैकाभिधान[1]-लक्षणः संकरः । छेका विदग्धाः ।

दुरध्यवसायी दर्दुर (मेढ़क) ! सायंकाल को अपनी काया को तकलीफ देकर क्यों गुस्से में टरटराते चले जा रहे हो । क्या तुम्हें शुभ्रवसन हंसों की कानों को मीठी लगने वाली इस प्यार-भरी बोली को सुनकर भी लज्जा नहीं आ रही है[2] । ६॥

यहाँ 'सायं' शब्द के (अनुस्वार को छोड़कर) यकार मात्र के सादृश्य को

अथ शब्दपौनरुक्त्यप्रस्तावाय सूत्रम्—

"शब्दपौनरुक्त्यं व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च ।" अत्राद्यं पदमुद्देश्यं चरमं तु द्वयं विधेयम् । शब्दपौनरुक्त्यं व्यञ्जनमात्रनिष्ठतया स्वरव्यञ्जनसमुदायनिष्ठतया च द्विप्रकारमित्यर्थः । ननु केवलस्वरपौनरुक्त्यस्य किं वृत्तमित्यत आह—अलङ्कारप्रस्ताव इत्यादि । अलङ्कारो हि विच्छित्तिः । तत्प्रस्तावे केवलस्वरपौनरुक्त्यमचारुत्वान्न गणनामर्हतीति भावः ।

तत्र व्यञ्जनमात्रमधिकृत्य सूत्रम्—

"संख्यानियमे पूर्वं छेकानुप्रासः ।"

कोऽयं संख्यानियम इत्यत आह—द्वयोर्व्यञ्जनेत्यादि । युग्मशोऽवस्थितानां व्यञ्जनसमुदायानां परस्परमनेकधा सादृश्यमिह संख्यानियमः ।

किं नामेति । दर्दुरो भेकः । कायं निपीड्य वपुरायास्य । सितच्छदा हंसाः । अत्र दुर दुर सायसायेत्यादौ संख्यानियमः । ननु सायं कायमित्यत्र कोऽलङ्कार इत्यत आह—अत्र सायंशब्द इत्यादि । यकारमात्रसादृश्यापेक्षया हि सायसायेति छेकानुप्रासः, सायं कायमिति तु सानुस्वारयकारापेक्षया

१. °भिधानानुप्रवेशलक्षणः—अ० ।

२ श्लोक में दुर-दुर, साय-साय, रुषे-रुषे सित-सित, कर्ण-कर्ण, ये व्यंजन-समुदाय के रूप में अनेक हैं अतः छेकानुप्रास है । पर साय तथा काय में दो अलंकारों के संकर का उदाहरण है ।

**अन्यथा तु वृत्त्यनुप्रासः ॥सू० ५॥**

**केवल[1]-व्यञ्जन[2]-सादृश्यमेकधा समुदायसादृश्यं, त्र्यादीनां च परस्परसादृश्यमन्यथाभावः। वृत्तिस्तु रसविषयो व्यापारः। तद्वती पुन[3]-**

दृष्टि में रखने से इस (छेकानुप्रास) अलंकार का वृत्त्यनुप्रास के साथ एकवाचकानुप्रवेश संकर है।[4] छेक का अर्थ है विदग्ध।

'इससे भिन्न स्थिति' में तो वृत्त्यनुप्रास होता है। सू० ५॥

केवल (अकेले एक) व्यंजन का सादृश्य, (व्यंजन–) समुदाय का एक बार सादृश्य, (दो से अधिक) तीन आदि (व्यंजनों) का परस्पर सादृश्य अन्यथाभाव है। (इन तीन रूपों में छेकानुप्रास से वृत्त्यनुप्रास का स्वरूप भिन्न है)।

रसविषयक व्यापार ही वृत्ति (कहलाता) है। और यहाँ (अलंकार-प्रकरण में) उस (व्यापार) से युक्त वर्ण-रचना वृत्ति (कहलाती) है। यह

**वृत्त्यनुप्रासः। इत्थं च सति सायंशब्दे द्वयोरेकाभिधानलक्षणः सङ्करः। अभिधत्त इत्यभिधानं वाचकशब्दः एकवाचकानुप्रवेशलक्षण इत्यर्थः। लक्ष्यपदं निर्विवक्षुराह—छेका विदग्धा इति। छेकोपलालितत्वाच्छेकानुप्रास इत्यर्थः।**

**अथानुप्रासान्तराय सूत्रम्—**

**"अन्यथा तु वृत्त्यनुप्रासः।"**

**अन्यथात्वं त्रिधा सम्भवतीत्याह—केवलव्यञ्जनेत्यादि। केवलव्यञ्जनसादृश्यं समुदायत्वाभावादन्यथात्वम्। एकधा समुदायसादृश्यं त्वनेकधात्वविरहात्। त्र्यादीनां पुनः समुदायानां द्वयातिरिक्तत्वादन्यथात्वमनुसन्धेयम्। लक्ष्यपदं निर्वक्ति—वृत्तिस्त्विति। शृङ्गारादिरसविषये योऽयं प्रतिनियमभाजां वर्णानां व्यञ्जनव्यापारः स वृत्तिरुच्यते। सोऽयं वर्णव्यापारोऽस्मिन् वर्णरचनात्मके कविव्यापारेऽस्तीत्युपचारेण वर्णरचना वृत्तिरित्याह—तद्वती पुनरित्यादि।**

१. केवलम्—शा[1]। २ व्यञ्जनमात्र—नि०।
३. पुनर्—शा० ना० शा[1] पुस्तकेषु नास्ति।
४ साय-साय इस युग्म में वृत्त्यनुप्रास है। सायं-कायं शब्दों में दो व्यंजनों का सादृश्य नहीं है, केवल अनुस्वारसहित यकार या केवल यकार का है, अतः यहाँ वृत्त्यनुप्रास होगा। इस प्रकार प्रस्तुत उदाहरण में 'सायं' एक ऐसा वाचक (शब्द या अभिधान) है जो छेकानुप्रास तथा वृत्त्यनुप्रास दोनों का एक आश्रय है, अतः 'सायं' के यकार मात्र को दृष्टि में रखें तो एकवाचकानुप्रवेश संकर होगा।

वर्णरचनेह वृत्तिः। सा च परुषकोमलमध्यमवर्णारब्धत्वात्त्रिधा। तदुपलक्षितोऽयमनुप्रासः। यथा[1]—

आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
खेलन्ती प्रथते तथापि कुरुते नो [2]मन्मनोरञ्जनम्।
न स्याद्यावदमन्दसुन्दरगुणा[3]-लंकारझंकारितः
सप्रस्यन्दिलसद्रसायनरसासारानुसारी रसः॥७॥

यथा वा[4]—

(वृत्ति) परुष, कोमल और मध्यम वर्णों से युक्त होने के कारण तीन प्रकार की है। यह अनुप्रास इसी (त्रिविध वृत्ति) से उपलक्षित होता है। जैसे—

यद्यपि कुशल घटाटोप (अत्यधिक शब्दाडम्बर) से विलास करती हुई कवि की वाणी प्रारम्भ में (सुनने में) जमती है। पर उससे मेरा मन तब तक नहीं भरता है जबतक कि उसमें अमन्द एवं सुन्दर गुण तथा अलंकार से झंकृत, प्रवाहपूर्ण सुन्दर रसायन की निरन्तर रस-वर्षा के समान रस न हो।७॥

अथवा जैसे—

तस्यास्त्रैविध्यं दर्शयति—सा च परुषेत्यादि। श्रुतिप्रतिकूलता वर्णानां परुषत्वम्। या परुषवर्णारब्धा सा गौडीया रीतिः। या तु कोमलवर्णारब्धा सा वैदर्भी। मध्यमवर्णारब्धा तु पाञ्चाली। एता रीतयो वामनादिभिः काव्यात्मत्वेन सिद्धान्तिताः। उपपत्तिपर्यालोचनायां तु काव्यात्मत्वकथा तावदास्ताम्, यावता शब्दालङ्कारेष्वपि यो बहिरङ्गो वृत्त्यनुप्रासात्मा वर्णालङ्कारस्तद्धर्मत्वात्तच्छेषभूता एता इत्यलं प्रासङ्गिकेन वैदग्ध्यप्रथनेन।

आटोपेनेति। यद्यपि कवेर्वाणी प्रबलेन शब्दाडम्बरेण खेलन्ती प्रारम्भे प्रथते अथापि सतां मनोरञ्जनं न कुरुते। अमन्दैः सुन्दरैश्च गुणालङ्कारैर्मुखरीकृतः सनिष्यन्दविलसद्रसायनरसधारासम्पातानुसारी शृङ्गारादिको रसो यावन्न स्यादिति। अत्र केवलवर्णसाम्यं चतुर्ष्वपि पादेषु। अलङ्कारझङ्कारितेत्यादावेकधा समुदायसादृश्यम्। रसायनरसेत्यत्र तु रसेति समुदायत्रयस्य

1. यथा मदीये श्रीकण्ठस्तवे —अ०।' आटोपेन' इत्यादि श्लोकः सञ्जीविन्यां 'सह्याः' इत्यनन्तरं मातृकायां व्याख्यातमुपलभ्यते।

2. सन्मनो—अ०।  3. सुन्दररसालंकार—अ०।

4. यथा वा—अ० शा० ना० पुस्तकेषु नास्ति।

[1]सह्याः पन्नगफूत्कृतानलशिखा नाराचपाल्योऽपि वा
राकेन्दोः किरणा विषद्रवमुचो वर्षासु वा वायवः।
न त्वेताः सरलाः सितासितरुचः साचीकृताः सालसाः
साकूताः समदाः कुरङ्गकदृशां मानानुविद्धा दृशः ॥८॥

सर्पों के फूत्कार से निकलने वाली आग की ज्वालाएँ अथवा वाणों की झड़ी, चन्द्रमा की विषरस बरसाने वाली किरणें अथवा वर्षा की हवाएं तो सहन की जा सकती हैं किन्तु मृगनयनाओं की इन सरल, शुक्ल और कृष्ण कान्ति वाली, टेड़ी, अलस, भावभरीं, मदभरीं, मान में लिपटी हुईं चितवनों को नहीं सहन किया जा सकता है।८॥

परस्परसादृश्यमित्यनुसन्धेयम्। तथा चाटोपेत्यादौ गौडीया, अमन्दसुन्दरेत्यादौ वैदर्भी, गुणालङ्कारेत्यादौ तु पाञ्चालीया तत्तदर्थानुसारेण द्रष्टव्या।

सह्या इति। विषद्रवमुच इति किरणापेक्षया दुःसहत्वं, वाय्वपेक्षया तु गरलकल्पजलकणयोगः। सरला अनरालपातिन्यः। सितासितरुचः उत्तरलतारकत्वादनवस्थितवर्णसन्निवेशाः। साचीकृताः अपाङ्गान्निर्गन्तुमिवेहमानाः। सालसाः सानुशयं निवर्तमानाः। यदुक्तं भावप्रकाशे—"आलस्यं तदभीष्टार्थात् व्रीडादेर्यन्निवर्तनम्" इति। साकूताः भवतु पश्याम इतीव व्याहरन्त्यः। सरसाः "रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे।" रोषारुणिमा विषयं विलिम्पन्त्यः। मानानुविद्धाः दृष्टश्रुतापराधजन्मा रोषो मानस्तेन समुच्छ्रिताः ज्वलत्कल्पा इत्यर्थः। अत्र केवलव्यञ्जनपौनरुक्त्यलक्षणमन्यथात्वम्। वृत्तिस्तु रोषवर्णनात् परुषा।

प्रकृष्टो वर्णविन्यासो रसाद्यनुगतस्तु यः।
सोऽनुप्रासः स च च्छेकवृत्त्युपाधिवशाद् द्विधा॥
समुदायद्वयं यत्र विविधं साम्यमृच्छति।
स छेकलालनात् प्राज्ञैः छेकानुप्रास ईरितः॥
व्यञ्जनव्यापृतिर्वृत्तिर्वर्णानां रसगोचरा।
तत्संयोगादियं वर्णरचना वृत्तिरिष्यते॥
सा वैदर्भ्यादिभेदेन त्रिधा पूर्वैर्निरूपिता।
तयोपलक्षितत्वात्तु वृत्त्यनुप्रास इष्यते॥

इत्थं वर्णालङ्कारो द्विधा दर्शितः। अथ शब्दालङ्कारप्रस्तावः। तत्र यमकलक्षणाय सूत्रम्—

1. पद्यमिदम् अ० पुस्तके नोपलभ्यते,।

स्वरव्यञ्जनसमुदाय[1]-पौनरुक्त्यं यमकम् ॥सू. ६॥

अत्र क्वचिद्भिन्नार्थत्वं [2]क्वचिदनर्थकत्वं [3]क्वचिदेकस्यानर्थकत्वमपरस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयम्। यथा—

यो यः पश्यति तन्नेत्रे रुचिरे वनजायते।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ॥९॥

इदं[4] सार्थकत्वे। एवमन्यत्[5] ज्ञेयम्।

स्वर तथा व्यंजनों के समुदाय का पौनरुक्त्य यमक है। सू० ६॥

इस (यमक) में कहीं अर्थ भिन्न होता है, कहीं अर्थ भिन्न नहीं होता है, और कहीं एक कोई (स्वर-व्यंजन-समुदाय) अर्थ-हीन होता है और दूसरा सार्थक। इस प्रकार संक्षेप में तीन भेद हैं। जैसे—

जो कोई भी उसके रुचिर और कमल की भाँति विशाल (वनजायत) नेत्र देखता है उसकी दूसरे नेत्रों को देखने की रुचि ही नहीं पैदा होती है।९॥ यह (उदाहरण स्वर-व्यंजन-समुदाय के) सार्थक होने का था।[6] इसी प्रकार दूसरे (भेद भी) समझ लेना चाहिए।

"स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्।"

स्वर-व्यञ्जनात्मकस्य शब्दसमुदायस्य यत् तेनैव रूपेण पुनर्वचनं तद् यमनाद् यमकम्। तस्य (भेदाः) नेह प्रतन्यन्ते। किन्तु सर्वेषामेवैषां भेदानामेतद् वैचित्र्यत्रयं त्रैगुण्यमावहतीत्यभिप्रायेणाह—अत्र क्वचिद् भिन्नार्थेत्यादि। यम्यमानयोः समुदाययोर्द्वयोरपि क्वचिद् भिन्नार्थता क्वचिदनर्थकता क्वचिदेकस्यार्थवत्त्वमपरस्यानर्थकत्वमिति प्रायः क्रोडीकृतसकलविशेषमेतद्भेदाश्रयम्। यो य इति। रुचिरे रम्ये वनजायते पद्मदलवद् दीर्घे तस्या नेत्रे यो यः पश्यति

---

1. °समुदायात्—शा० ना०।
2. क्वचिदभिन्नार्थत्वम्—नि०। क्वचिदभिन्नार्थकत्वम्—ना० शा०।
3. ०क्वचिदेकस्य…रुचिरेव न जायते—इयान् भग्नः शा१ पुस्तकलेखः केवलं 'तस्य तस्यान्यनेत्रेषु'—इति तत्राभग्नः।
4. इदञ्च—अ०। 5. मन्यत्तु—अ०।
6. 'रुचिरे वनजायते' पद की दो बार आवृत्ति होने से यहां यमक है। इसके पहले पद का अर्थ है—सुन्दर और कमल की भांति विशाल तथा दूसरे पद का अर्थ है कि रुचि ही नहीं पैदा होती है।

**शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥सू० ७॥**

प्ररूढग्रहणं [1]वक्ष्यमाणप्रभेदवैलक्षण्यार्थम्। यदाहुः—'शब्दार्थयोः पुनर्वचनं [2]पुनरुक्तमन्यत्रानुवादात्'। इति।

**तात्पर्यभेदवत्तु[3] लाटानुप्रासः ॥सू० ८॥**

तात्पर्यमन्यपरत्वम्। तदेव भिद्यते, न तु शब्दार्थयोः[4] स्वरूपम्।

शब्द और अर्थ का पौनरुक्त्य प्ररूढ़ होने पर (जैसा प्रारम्भ हो उसी प्रकार अंत तक रहने पर) दोष है। सू० ७॥

'प्ररूढ़' पद का प्रयोग आगे बताए जाने वाले (अनुप्रास के) प्रभेद से (दोष की) भिन्नता बताने के लिए हुआ है। जैसा कि कहा गया है—'शब्द और अर्थ का पुनर्वचन, अनुवाद को छोड़कर, पुनरुक्त होता है।'

तात्पर्य-भेद से युक्त लाटानुप्रास है। सू० ८॥

तात्पर्य का अर्थ है दूसरे (अर्थ) में पर्यवसित होना। (इस अलंकार में) तात्पर्य ही बदल जाता है; शब्द या (उसके) अर्थ का स्वरूप नहीं

तस्य तस्यान्यनेत्रेष्वभिरतिरेव न जायते। इदं द्वयोः सार्थकत्वे। अनर्थकत्वे द्वैरूप्ये च यथा—

त्वं रावण जगत्पुण्यैर्लङ्कालङ्कारभूरभूः।
वाल्मीकेर्येन ववृते सारः सारस्वतः स्वतः॥

अत्र रभूरभूरित्यनर्थकता, लङ्कालङ्कारेत्यादौ तु द्वैरूप्यम्। इत्थमर्थपौनरुक्त्ये पुनरुक्तवदाभासं शब्दपौनरुक्त्ये तु अनुप्रासयमकालङ्कारौ च विवेचितौ।

अथोभयपौनरुक्त्ये हेयांशं विभङ्क्तुं सूत्रम्—

"शब्दार्थपौनरुक्त्यं प्ररूढं दोषः" ॥

प्ररूढग्रहणस्य प्रयोजनमाह—प्ररुढग्रहणमित्यादि। अप्ररूढं पौनरुक्त्यं वक्ष्यमाणो भेदः। तस्य प्ररूढाद्वैलक्षण्यमदोषात्मकत्वम्। तदेवादोषात्मकत्वमभियुक्तसंवादेन दृढयति—यदाहुरित्यादि। शब्दस्यार्थस्य च पुनर्वचनमनुवादादतिरिक्तविषये दोष इत्यर्थः।

अथोपादेयांशमधिकृत्य सूत्रम्—

"तात्पर्यभेदवत्तु लाटानुप्रासः॥"

---

१. वक्ष्यमाणालङ्कारपौनरुक्त्यवैलक्षण्यार्थम्—अ०। भग्नोऽत्रत्यः शा१ लेखः।
२. पौनरुक्त्यम°—अ०। भग्नोऽत्रत्यः शा१ लेखः।
३. °वल्लाटा°—ना० शा०। ४. शब्दार्थस्वरूपम्—अ०।

यथा—

ताला जाअंतिगुणा जाला दे सहि[1]-अएहिं घेप्पंति ।
रइकिरणा-[2]णुगाहिआइँ होंति कमलाइँ कमलाइँ ॥१०॥
[तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥]

[3]'अत्राब्जपत्रनयने नयने निमील्ये'त्यादौ विभक्त्यादेरपौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वमेव ।

(बदलता है) । जैसे—

(गुण) गुण तभी बनते हैं जब उन्हें सहृदय धारण करते हैं, सूर्य की किरणों से अनुग्रह पाकर ही कमल कमल बन जाते हैं । १०॥

'कमलदल की भांति नयनवाली ! तुम यहां नेत्रों को बन्दकर' इत्यादि[4] (उदाहरण) में विभक्ति आदि की पुनरुक्ति न होने पर भी अनेक शब्दार्थ की पुनरुक्ति के कारण लाटानुप्रास ही होगा ।

---

1. सहितएहिं—ना० । 2. णुणाहि—नि० ।

3. ब्रूमः कियन्नय कथञ्चन कालमल्प-
मत्राब्जपत्रनयने नयने निमील्य ।
हेमाम्बुजं तरुणि तत्तरसापहृत्य
देवद्विषोऽयमहमागत इत्यवेहि ॥

'ब्रूम' इत्यादि पद्यं नि० पुस्तक एव संपूर्णतया प्राप्यते । इदं च पद्यं मया परीक्षितासु वि० मातृकास्वेवोपलभ्यते न पुनर्मूलग्रन्थे । सञ्जीविनी-कृतापि पद्यमिदं सम्पूर्णतयात्रास्तीति न सूच्यते । सर्वस्वमातृकास्वपि मूलग्रन्थे सम्पूर्णपद्यस्यानुपलम्भान्नात्र ग्रन्थेऽस्य सन्निवेशः कृतः ।

4. सम्पूर्ण श्लोक टिप्पणी ३ के प्रारम्भ में ऊपर देखिए ।
इस श्लोक में 'अत्राब्जपत्रनयने' सम्बोधन का शब्द है जिसका अर्थ है कमलदल की भांति नयनवाली ! दूसरा 'नयने' शब्द द्वितीया विभक्ति के द्विवचन का है । इस प्रकार 'नयने' इस अर्थ की आवृत्ति होने पर भी इन दो शब्दों में विभक्ति, वचन तथा लिंग का साम्य नहीं है । रुय्यक के अनुसार दोनों का तात्पर्य भिन्न है अतः विभक्ति आदि की एकता न रहने पर भी इसे लाटानुप्रास का ही उदाहरण मानना चाहिए ।

'काशाः काशा इव'[1] इत्यादावनन्वयेन सहास्यैकाभिधानलक्षणो[2] न संकरः। अन्योन्यापेक्ष[3]-शब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थिते-र्भिन्नविषयत्वात्।

'कांस कांस की भांति' इत्यादि (उदाहरण) में अनन्वय के साथ इस (लाटानुप्रास) का एकवाचकानुप्रवेश संकर नहीं (माना जा सकता) है क्योंकि परस्पर-सापेक्ष शब्द तथा अर्थ में रहने और केवल अर्थ में रहने की व्यवस्था से इन (दोनों अलंकारों) का विषय भिन्न है।

यत्र पौनरुक्त्ये शब्दार्थौ तावेव तात्पर्यमात्रं त्वन्यत् सोऽयं लाटोपलालना-ल्लाटानुप्रासः। तस्मादसार्वजनीनत्वाद् ग्राम्यानुप्रास इत्यपि केचित्। तालाजा-अंति इति।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुग्रहीतानि भवन्ति कमलानि कमलानि॥

गुणास्तदा गुणा जायन्त इत्यध्याहारो दार्ष्टान्तिकत्वात्। अत्र द्वितीययोर्गुण-कमलशब्दयोः श्लाघाद्यास्पदत्वं तात्पर्यभेदः। ननु यत्र प्रकृतिमात्रं तदर्थश्च पुनरुच्येते न प्रत्ययतदर्थौ तत्र कोऽलङ्कार इत्यत आह—अत्राब्जपत्रेत्यादि। विभक्त्यादेरिति। आद्यो हि नयनशब्दो बहुव्रीहिवर्तित्वादन्यपदार्थलिङ्गवचन-विभक्तिकः। द्वितीयस्तु स्वलिङ्गवचनविभक्तिकः। अतो नेह विभक्त्यादेः पुनरुक्तिः। नापि लाटानुप्रासत्वहानिः। कुत इत्यत आह—बहुतरशब्दार्थ-पौनरुक्त्यादिति। इत्थं च सति पदनिबन्धनतया प्रातिपदिकमात्रनिबन्धनतया च लाटानुप्रासो द्विधा मन्तव्यः। अनन्वयाद् विशेषमस्य दर्शयति—काशाः काशा इवेत्यादि। अनन्वयो ह्येकस्यैवोपमानोपमेयत्वम्। तत्र यद्यप्यर्थपौनरुक्त्यं लक्षणमथापि शब्दपौनरुक्त्यं दोषभयादङ्गीक्रियत एव। यथोद्देशस्तथैव प्रतिनिर्देश इति न्यायोल्लङ्घने पर्यायप्रक्रमभेददोषप्रसङ्गात्। लाटानुप्रासे तु शब्दपौनरुक्त्यमपि लक्षणमिति विशेषः। तदेतदाह—अन्योन्यापेक्षेत्यादि। परस्परव्यपेक्षिणोः शब्दार्थयोः पौनरुक्त्यं लाटानुप्रासः, अनन्वयस्त्वर्थमात्रपौन-रुक्त्यमित्यर्थः।

---

१. काशाः काशा इवाभान्ति(न्त) सरांसीव सरांसि च।
चेतांस्याचिक्षिपुर्यूनां निम्नगा निम्नगा इव॥ इत्यादौ—नि०।

२. एकाभिधानलक्षणो न—अ० पुस्तके नास्ति।

३. °पेक्षया—नि०।

अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥११॥

**तदेवं पौनरुक्त्ये पञ्चालंकाराः ॥ सू० ९ ॥**

निगदव्याख्यातमेतत्[1] ।

**वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ॥ सू० १० ॥.**

[2]पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकं[3] चित्रवचनं।

अनन्वय में शब्द की एकता औचित्य के नाते आनुषंगिक है पर इस लाटानुप्रास में (शब्द की एकता) साक्षात् हेतु (लक्षण) है। ११॥

इस प्रकार पौनरुक्त्य में पाँच अलंकार होते हैं। सू० ९॥

इसका उल्लेख-पूर्वक व्याख्यान हो चुका है।

वर्णों से खड्ग आदि आकार बनने पर चित्र (अलंकार) कहलाता है। सू० १०॥

पौनरुक्त्य के प्रकरण में चित्रालंकार को बताया गया है, (क्योंकि) इसका स्वरूप स्थानविशेष में श्लिष्ट वर्णों की पुनरुक्ति का है।

अत्रार्थे संग्रहश्लोकः—अनन्वये त्वित्यादि। औचित्यादुद्देशप्रतिनिर्देशयोरैकरूप्यसमाश्रयणलक्षणात्—

यत्र तावेव शब्दार्थौ तात्पर्यं तु विभिद्यते।
तत् पौनरुक्त्यमाचार्यैर्लाटानुप्रास इष्यते॥
दोषापत्तिभयादेव शब्दैक्यं स्यादनन्वये।
अस्मिंस्तु लाटानुप्रासे साक्षादेव हि लक्षणम्॥

अथ पौनरुक्त्यनिबन्धनानामलङ्काराणां निगमनाय सूत्रम्—

"तदेवं पौनरुक्त्ये पञ्चालङ्काराः॥"

यथैवं पौनरुक्त्यं व्यपाश्रित्य वर्गशोऽवतिष्ठते तथोपमादयोऽपि साधर्म्यादिव्यपाश्रयेण वर्गशोऽवस्थापिता इत्यवबोधितं मन्तव्यम्। तदिदं न्यायविदामवधातव्यमेवेत्यभिप्रायेणाह—निगदव्याख्यातमिति। निगदः शब्दोच्चारणं, तन्मात्रेण प्रतीतार्थत्वात् व्याख्यातकल्पमित्यर्थः। अथ चित्रार्थं सूत्रम्—

"वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम्॥"

सङ्गतिमाह—पौनरुक्त्यप्रस्ताव इत्यादि। स्थानविशेषेषु गञ्जनकपालिकाकुण्डिकादिषु खड्गाद्यवयवविशेषेषु विन्यासक्रमेण श्लिष्टानां वर्णानां यत् पाठे

---

१. °व्याख्यानमेतत्—अ०। २. पौनरुक्त्यप्रस्तावे···चित्रवचनम्—इयान् शा१लेखो भग्नः। ३. °त्मकचित्र°—अ०।

**यद्यपि लिप्यक्षराणां खड्गादिसंनिवेशविशिष्टत्वं तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचक-[1] शब्दालंकारोऽयम्। आदिग्रहणाद्यथाव्युत्पत्तिसंभवं पद्मबन्धादिपरिग्रहः। यथा—**

**भासते प्रतिभासार रसाभासाहताविभा।**
**भावितात्मा शुभा वादे देवाभा बत ते सभा ॥१२॥**

यद्यपि खड्ग आदि का सन्निवेश लिपि के अक्षरों में होता है, किन्तु उन (अक्षरों) का लोक में श्रोत्राकाश में समवाय सम्बन्ध से रहने वाले शब्दों के साथ अभिन्नरूप में ज्ञान होता है अतः इसे शब्दालंकार कहा गया है। (खड्ग आदि पद में) 'आदि' के प्रयोग से व्युत्पत्ति के अनुसार सम्भव, पद्मबन्ध आदि (चित्रालंकारों) का ग्रहण करना चाहिए।
जैसे—

अयि प्रतिभासार! देवसदृश तुम्हारी सभा रसोज्ज्वल है, (अज्ञानरूपी) अन्धकार को नष्ट करने वाली है, भावना से अपने स्वरूप को पहिचानती है, तथा तत्त्वनिर्णय करने के लिए मंगलमयी है। १२॥

पौनरुक्त्यं तदात्मकस्य खड्गबन्धादि-चित्रस्य कथनं पौनरुक्त्यप्रस्तावे सङ्गच्छत इत्यर्थः। ननु कथमयं शब्दालंकारः? लिपिसन्निविष्टानां वर्णानां वाचकत्वाभावादित्यत आह—यद्यपीत्यादि। खड्गादिसन्निवेशो हि लिप्यक्षराणामेव न श्रोत्राकाशसमवायिनाम्। वाचकत्वं तु श्रोत्राकाशसमवायिनामेव न पुनर्लिपिसन्निवेशिनाम्। इत्थं च सति खड्गादिबन्धगतानां यद्यपि वाचकत्वप्रतीतेर्वाचकशब्दालङ्कारता नोपपद्यते तथापि लौकिकानां लिप्यक्षरेष्वपि वाचकत्वप्रतीतेर्वाचकशब्दालङ्कारत्वमुपचर्यत इति भावः। अतः स्थूलबुद्धिलालनीयत्वाद् वाचकशब्दबहिर्भावाच्च नात्र कविभिरादरः कार्य इति मन्तव्यम्। आदिशब्दार्थमाह—आदिग्रहणादित्यादि। यथाव्युत्पत्तिसम्भवं, यथाशब्दः प्रत्येकमभिसंबध्नाति। अतो यथाव्युत्पत्ति यथासम्भवं च पद्ममुरजगोमूत्रिकादिबन्धानां परिग्रहोऽभ्यनुज्ञात यत इति शेषः। भासत इति। प्रतिभया सारभूतसभा ते भासते। बतेत्याश्चर्ये। रसाभाता श्रृङ्गारादिना रसेनासमन्तादुपशोभिता। हताविभा निर्नाशितव्यामोहा। भावितात्मा संस्कारैरात्मानं भावितवती। शुभा वादे तत्त्वबुभुत्सा तु विजिगीषा वा वादमात्रे विदग्धा अतएव देवाभा सुधर्मासदृशीत्यर्थः।

---

[1] वाचकालङ्कारो—अ०।

एषोऽष्टदल[1]-पद्मबन्धः। अत्र दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टाक्षरत्वम्। विदिग्दलेषु [2]त्वन्यथा। कर्णिकाक्षरं तु श्लिष्टमेव।

**उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा ॥सू० ११॥**

यह अष्टदल पद्मबन्ध है। इसके (आठ दिशाओं में से पूर्वादि में स्थित) दिग्दलों से निकलने और प्रवेश करने में अक्षर श्लिष्ट होते हैं। (आग्नेयादि दिशाओं के दल) विदिग्दलों की स्थिति भिन्न है। कर्णिका (कमल के छत्ते) में स्थित अक्षर तो (नियमतः) श्लिष्ट होता है।

उपमान और उपमेय का साधर्म्य होने पर, भेद और अभेद की समानता में उपमा होती है। सू० ११॥

अत्रोद्धारप्रकारमुपदिदृक्षुराह—एषोऽष्टदल इत्यादि। दलानि दिक्षु चत्वारि, चत्वारि च विदिक्षु, प्रथमाक्षरं कर्णिकायाम्। अथ दलेषु द्वयं द्वयमक्षराणाम्। प्राग्दलात् प्रादक्षिण्येन पाठः। दिग्दलेषु प्रवेशनिर्गमौ। अत्रायं निष्कर्षः—

कर्णिकायां लिखेदेकं द्वौ द्वौ दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु पद्मबन्धो भवेदयम्॥
आरोप्य लिपिवर्णानां साम्याद् वाचकवर्णताम्।
खड्गबन्धादिकं चित्रं काव्यालङ्कार इष्यते॥ इति

इति श्रीविद्याचक्रवर्तिनः कृतौ अलङ्कारसर्वस्वसञ्जीविन्यां शब्दालङ्कारप्रकरणम्॥

अथार्थालङ्काराः। तत्र सादृश्यविच्छित्तिविशेषैर्नानालङ्कारबीजभूतामुपमामादौ लक्षयितुं सूत्रम्--

"उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा"

उपमिमीते साधर्म्यं नयतीत्युपमानमप्राकरणिकोऽर्थः। तच्च नियमेनाधिकगुणमेव भवति गुणाधातृत्वात्। उपमीयते साधर्म्यं नीयत इत्युपमेयं प्राकरणिकोऽर्थः। तच्च नियमेनाधेयगुणत्वान्न्यूनगुणमेव भवति। तयोर्यस्तुलितभेदाभेदांशः समानधर्माभिसंबन्धः स उपमालङ्कार इति सूत्रार्थः।

---

1. दलः—अ०।
2. तु—अ० नास्ति। शा१ पुस्तके 'अन्यथा' पदमनन्तरम् 'तु' दृश्यते।

अर्थालंकारप्रकरणमिदम्। उपमानोपमेययोरित्यप्रतीतोपमानोपमेय-निषेधार्थम्। साधर्म्ये त्रयः प्रकाराः। भेदप्राधान्यं[1] व्यतिरेकादिवत्। अभेदप्राधान्यं[2] रूपकादिवत्[3]। द्वयोस्तुल्यत्वं यथास्याम्। यदाहुः—'यत्र किंचित्सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति। [4]उपमैवानेकप्रकारवैचित्र्येणानेकालंकारबीजभूतेति प्रथमं निर्दिष्टा।

यह अर्थालंकारों का प्रकरण है। 'उपमान और उपमेय का' यह (पद) प्रतीत न होने वाले (अर्थात् अप्रसिद्ध) उपमान तथा उपमेय के निषेध के लिए है। साधर्म्य के तीन भेद हैं। भेद की प्रधानता जैसे कि व्यतिरेक आदि में। अभेद की प्रधानता जैसे कि रूपकादि में। दोनों की समानता जैसे कि इस (उपमालंकार) में। जैसा कि कहा है "जहाँ कुछ सामान्य (अभेद) हो और कुछ विशेष (भेद) हो वह सादृश्य का विषय होता है"। चूंकि उपमा ही (अपने) भेदों के वैचित्र्य के नाते अनेक अलंकारों की मूलभूत है अतः (उसी का) पहले निरूपण किया जा रहा है।

तदेतद् व्याचिख्यासुः प्रकरणविभागायाह—अर्थालङ्कारेति। ननु साधर्म्यं नामैतदुपमानोपमेययोरेव भवति न कार्यकारणादिकयोरित्थमपर्यवसानसिद्धयोरनयोः किं शब्दोपादानेनेत्यत आह—उपमानोपमेययोरित्यादि। सिद्धे सत्यारम्भोऽयं प्रसिद्धयोरेवोपमानोपमेययोरलङ्कारविषयत्वमिति नियमाय। अतो मेरुसर्षपादौ विवक्षया परिकल्पयितुं शक्योऽप्युपमानोपमेयभावो नालङ्कारविषयः, अप्रतीतत्वादित्यनुसन्धेयम्। भेदाभेदेत्यस्य व्यावर्त्यं दर्शयितुं साधर्म्यप्रकारान् विविनक्ति—साधर्म्ये त्रय इत्यादि। व्यतिरेकवदिति। तत्रेवेति वतिः। व्यतिरेकालङ्कारे यथेत्यर्थः। एवं रूपकवदित्यत्रापि। द्वयोस्तुल्यत्वमिति भेदाभेदांशयोरनुद्रेकेणावस्थानमित्यर्थः। यथा स्यादिति। उदाहरिष्यत इति शेषः। भेदाभेदत्व एव तुल्यत्व एवोपमा स्यादिति यदुक्तं तत् प्रामाणिक-संवादेन द्रढयितुमाह—यदाहुरित्यादि। यदाहुर्भाष्यकृदादय इति शेषः। सामान्यं साधर्म्यं, विशेषो वैधर्म्यं, सदृशतायाः उपमायाः। साधर्म्यवैधर्म्ययो-स्तुलया वृत्तावुपमा स्यादिति यावत्। यदेतदस्या उद्देशे प्राथम्यं तत्र प्रयोजनं दर्शयति—उपमैव चेति। प्रकारवैचित्र्येणेति। तथाहि—मुखं चन्द्र इवेत्युपमा, मुखं मुखमिवेत्यनन्वयः। मुखं चन्द्र इव स तदिवेत्युपमेयोपमा। दृष्ट्वा

१. व्यतिरेकवत्—अ० ना०।
२. °न्यं तु—शा१।
३. रुपकवत्—अ० ना०।
४. °मैव च प्रकार°—अ०।

**अस्याश्च [1]पूर्णालुप्तात्वभेदाच्चिरंतनैर्बहुविधत्वमुक्तम्। तत्रापि साधारण-धर्मस्य क्वचिदनुगामितयैकरूप्येण निर्देशः। क्वचिद्वस्तुप्रतिवस्तुभावेन**

इसके पूर्णा, लुप्ता आदि के रूप में भेद से (इसे) प्राचीन आचार्यों ने अनेक प्रकार का बताया है।

इनके अतिरिक्त (तत्रापि) साधारणधर्म का कहीं अनुगामी के रूप में एकरूपता से निर्देश होता है, कहीं वस्तुप्रतिवस्तु-भाव से पृथग् निर्देश

मुखं चन्द्रमनुस्मरामीति स्मरणम्। मुखमेव चन्द्र इति रूपकम्। मुखचन्द्रेण तापः परिशाम्यतीति परिणामः। किं चन्द्र आहोस्वित् पद्ममिति सन्देहः। चन्द्र इति चकोरा नन्दन्तीति भ्रान्तिमान्। चन्द्र एव न मुखमित्यपह्नुतिः। नूनं चन्द्र इत्युत्प्रेक्षा। चन्द्रं पश्येत्यतिशयोक्तिः। अस्यां प्रावृषि मुखं चन्द्र-बिम्बं च विच्छायमित्येका तुल्ययोगिता। शरदि रम्यमिति त्वन्या। इदं च तच्च रम्यमिति दीपकम्। मुखमेव रम्यं चन्द्र एव हृद्य इति प्रतिवस्तूपमा। भुवि मुखं दिवि चन्द्र इति दृष्टान्तः। मुखदूषणं चन्द्रमसो मलिनीकरणमिति निदर्शना। चन्द्रादधिकं मुखं मुखादधिकश्चन्द्र इति च व्यतिरेकः। चन्द्रेण सह मुखमिति सहोक्तिः। न मुखेन विना चन्द्रः समीचीन इति विनोक्तिः। कला-भिरामं पूर्णं मुखमिति समासोक्तिः। कलाभिरामौ मुखचन्द्राविति श्लेषः। नमस्ते चन्द्र प्रसन्नोऽसीत्यप्रस्तुतप्रशंसा। मुखे रोषो न दोषः, न हीन्दोर्नि-न्दायै कलङ्करेखेत्यर्थान्तरन्यासः। इत्थं स्वप्रकारवैचित्र्येण सादृश्यविच्छित्ति-विशेषात्मना यतो नानालङ्कारनिदानभूता अतोऽर्थालङ्कारेषु प्रथमं निर्दिष्टेति यावत्। स्थूलप्रभेदप्रथनभीरुतामाविश्चिकीर्षुराह—**अस्याश्च पूर्णेत्यादि**। पूर्णालुप्तात्वेत्यत्र भावितपुंस्कत्वाभावान्न पुंवद्भावः। संज्ञे हि खलूपमाया एते पूर्णा लुप्ता चेति। तत्रोपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानां चतुर्णामपि शब्दोपादानं पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। अनयोर्भेदप्रभेद-वैचित्र्यसहस्रमस्माभिः सम्प्रदायप्रकाशिन्यां काव्यप्रकाशबृहट्टीकायां वितत्य दर्शितं, लघुटीकायां च यथोपयोगमिति ततोऽवधार्यम्। अयं पुनराचार्यः सर्वस्यै-वोपमाप्रपञ्चस्यान्यैरनुपपादितचरं वैचित्र्यत्रयं उपपिपादयिषुराह—**तत्रापि साधारणधर्मस्येत्यादि**। अनुगामितया उभयाभिसंबन्धार्हतया। मुखं चन्द्र इव हृद्यमित्येकेनैव रूपेण हृद्यत्वादेः साधारणधर्मस्य निर्देशः क्रियत इत्येकं वैचित्र्यम्।

---

1. पूर्णालुप्तादित्वभेदात् बहुविधत्वं चिरन्तनैरुक्तम्—अ०। पूर्णालुप्ता-दिभेदैः—ना०।

पृथङ्निर्देशः। पृथङ्निर्देशे च सम्बन्धिभेदमात्रं [1]प्रतिवस्तूपमावत्। बिम्बप्रतिबिम्बभावो वा दृष्टान्तवत्। क्रमेणोदाहरणम्[2]—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥१३॥

होता है, और पृथग् निर्देश रहने पर प्रतिवस्तूपमा की भांति (या तो) केवल सम्बन्धी का (अर्थात् सम्बन्धी के भेद के आधार पर ही) भेद होता है अथवा दृष्टान्त की भांति बिम्बप्रतिबिम्बभाव होता है। क्रमशः उदाहरण—

(साधारणधर्म का अनुगामी के रूप में निर्देश)

प्रकाशमयी शिखा से दीपक की भांति, आकाशगंगा से स्वर्ग-पथ की भांति, संस्कृत वाणी से विद्वान् की भांति, उस (पार्वती) से वह (हिमालय) पवित्र और अलंकृत हुआ।१३॥

अथ वस्तुप्रतिवस्तुभावेन पृथग्निर्देश इति द्वितीयम्। एकोऽर्थो वस्तुत्वेनोपमेयगतः, अन्योऽर्थस्तूपमानगतः प्रतिवस्तुत्वेन निर्दिश्यत इति यावत्। यदैवं पृथङ्निर्देशस्तदावान्तरभेदोऽस्तीत्याह—पृथङ्निर्देशे चेत्यादिना। सम्बन्धिभेदमात्रमिति। वलितकन्धरमाननमावृत्तावृन्तशतपत्रनिभमित्यादौ हि येन सह सम्बध्नाति साधारणो धर्मः स सम्बन्धी केवलं भिन्नः, एकत्र कन्धरा अपरत्र वृत्तं, तत् भेदोपाधिना स्वयमभिन्नोऽपि धर्मो भेदेन निर्दिष्टः इदमेकं वैचित्र्यम्। प्रतिवस्तूपमावदिति। यथा प्रतिवस्तूपमायामभिन्नस्य धर्मस्य भेदेन निर्देशे न्यायोऽयं स इहापि सम्भवतीति यावत्। यदा पुनरंसार्पितहारोऽयं सनिर्झरो गिरिरिवेत्यादौ साधर्म्यं धर्मिद्वारकं तदा द्वयोरैकात्म्यभावान्न वस्तुप्रतिवस्तुभावः, अपितु बिम्बप्रतिबिम्बनय इत्याह—बिम्बप्रतिबिम्बभावो वेति। प्रतिबिम्बः प्रतिमा। हारनिर्झरादौ हि बिम्बप्रतिबिम्बनयेन साधर्म्यावगतिः। अत्र नये दृष्टान्तालङ्कारं दृष्टान्तयति—दृष्टान्तवदिति। अत्रैतदाकूतम्—या यावती सम्भवत्युपमा पूर्णा लुप्ता च सप्रभेदप्रपञ्चा सा सर्वैवास्मद्दर्शितेन वैचित्र्यत्रयेण त्रिधा प्रथत इति। प्रभामहत्येति। प्रभापेक्षया महतीति कथनात् स्वापेक्षया तन्वीति विवक्ष्यते। तदेतत् प्रभामहत्त्वं दीपशिखापेक्षया देव्याः साधारणो धर्मः। उभे हि खल्वेते स्वापेक्षया तु तनीयस्यौ, प्रभापेक्षया तु महत्यौ। एवं संस्कारवत्त्वं वागपेक्षया। तत्र वाचि संस्कारो व्याकृतिः। देव्यां तु निसर्गसिद्धदिव्यानुभाववासनानुवृत्तिः। त्रिमार्गयेत्यत्र तु साधारणधर्मः प्रतीयमानः। न चात्र प्रक्रमभेदः

---

1. प्रतिवस्तू…भावो—इत्यंशस्त्रुटित शा१ पुस्तके। 2. °णानि—अ०।

यान्त्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥१४॥

अत्र बलितत्वावृत्तत्वे संबन्धिभेदाद्भिन्ने । धर्म्यभिप्रायेण तु[1] बिम्ब-प्रतिबिम्बत्वमेव[2] ।

(साधारणधर्म के पृथग् निर्देश द्वारा वस्तुप्रतिवस्तुभाव का उदाहरण)

मुड़े हुए डंठल वाले शतदल के समान बार-बार टेढ़ी की हुई गर्दन वाले मुख को धारण कर जाती हुई पक्ष्मलनयनवाली (मालती) के अमृत और विष से बुझा हुआ कटाक्ष मेरे (माधव) हृदय में गहरा धंस-सा गया है ।१४।।

यहां (गर्दन का) 'टेड़ापन' (वलितत्व) और (डंठल का) 'मुड़ना' (आवृत्तत्व), सम्बन्धी (अर्थात् मुख तथा शतदल) के भेद से, भिन्न है (—वस्तुतः 'बलितत्व' और 'आवृत्तत्व' में धर्म की दृष्टि से अन्तर नहीं है उसी प्रकार जैसे कि चतुर और निपुण शब्दों में) । धर्मी (अर्थात् कन्धरा तथा वृत्त) की दृष्टि से तो (यहां) बिम्बप्रतिबिम्बभाव ही है ।

शङ्क्यः, जगत्पावनत्वादेः साधारणधर्मस्योभयत्र प्रसिद्धतमस्य शब्दोपादाननिरपेक्षत्वात् । इत्थं च सत्यर्थस्यापि साधारणधर्मस्यानुगामितयैकरूप्येण निर्देश उदाहृतो मन्तव्यः । यद्वा—त्रिमार्गयेवेत्येतदेव तन्त्रेण न्यायेन देवीविशेषणतयापि सङ्गच्छते । तथाहि—त्रिवृतकरणादि वैदिकप्रक्रियानुसारेण वा त्रैपुरादितान्त्रिकप्रक्रियानुसारेण वा देव्यास्त्रिमार्गत्वं प्रसिद्धमेव । हिमगिरेस्तु दीपत्रिदिवमार्गमनीषिभिः सह साधारणो धर्मः पूतत्वं विभूषितत्वं च । आद्यन्तवाक्यापेक्षया पूर्णोपमा, मध्यमवाक्यापेक्षया तु लुप्तसाधारणधर्मा, तत्रापि पूर्णैव वा । सा च मालारूपेणावस्थानान्मालोपमेत्यादि वैचित्र्यमनुसन्धेयम् ।

अथ वस्तुप्रतिवस्तुभावेनोदाहरति—यान्त्येति । मालतीविलाससाक्षात्कारोत्क्षुभितमन्मथस्य माधवस्येयमुक्तिः । यान्त्या उपवनात् पुरं प्रति करेणुकया गच्छन्त्या सहचरीसल्लापादिव्यपदेशेन वारं वारमपवृत्तशिरोधरम् । अतएवावृत्तावृन्तस्य कलहंसकण्ठकण्डूयनादिना विवलितबन्धनस्य कुशेशयस्त्र सदृशमाननं वहन्त्या । कटाक्षो मे हृदये निखातः, अपाङ्गनिक्षिप्ता चक्षुःप्रभा कटाक्षः स कीलित इव । केन प्रकारेण ? गाढं परिचाल्याप्युत्कीलयितुं न शक्यते यथा

---

१. तु—शा० ना० पुस्तकयोर्नास्ति । २. बिम्बप्रतिबिम्बत्वभावो यथा—शा१ ।

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥१५॥
अत्र हाराङ्गरागयोर्निर्झरबालातपौ [1]प्रतिबिम्बत्वेन निर्दिष्टौ ।

**एकस्यैवोपमानोपमेयत्वेऽनन्वयः ॥सू० १२॥**

**वाच्याभिप्रायेणात्र[2] पूर्वरूपानुगमः[3]। एकस्य तु विरुद्धधर्मसंसर्गो[4] द्वितीयसब्रह्मचारिनिवृत्त्यर्थः। अत एवानन्वय इति योगोऽप्यत्र[5] संभवति । यथा—**

(साधारणधर्म के पृथग् निर्देश द्वारा बिम्बप्रतिबिम्बभाव का उदाहरण)

कन्धे पर लम्बा हार पहिने, लाल चन्दन का अंगराग लगाए पाण्डव देश का यह राजा प्रातः के सूर्य की किरणों से लाल शिखर वाले, और झरनों के प्रवाह से युक्त पर्वतराज (हिमालय) के समान लग रहा है ।१५॥

यहां 'झरना' तथा 'प्रातः के सूर्य' का 'हार' तथा 'अंगराग' के प्रतिबिम्बरूप में निर्देश हुआ है ।

एक का ही उपमान और उपमेय होना 'अनन्वय' है । सू० १२॥

अभिधेय (अर्थ) की दृष्टि से यहां पूर्वरूप (अर्थात् साधर्म्य) से सम्बन्ध है । एक का (अपने से) विरोधी धर्म के साथ सम्बन्ध, कोई दूसरा इसके समान नहीं है यह बताने के लिए होता है । इसीलिए 'अन्वय (सम्बन्ध) का न होना' यह व्युत्पत्ति भी इस अलंकार की (अत्र) हो सकती है । जैसे—

तथेति यावत् । कीदृक् कटाक्षः ? अमृतेन दिग्धः लिप्तः, यतस्तदा जीवातुरभूत् । विशेषेण च दिग्धः यतः सम्प्रति दहति । अत्रैक एव धर्मः सम्बन्धिभेदेन वलितावृत्तशब्दाभ्यां वस्तुप्रतिवस्तुभावेन निर्दिष्टः । वस्तुप्रतिवस्तुभावोऽयं धर्मापेक्ष एव । बिम्बप्रतिबिम्बभावस्तु धर्म्यपेक्ष इति व्यवस्थार्थमाह—धर्म्यभिप्रायेणेत्यादि । पाण्ड्योऽयमिति । हारनिर्झरादीनां धर्मित्वाद् बिम्बप्रतिबिम्बभावः ।

भेदाभेदतुलावृत्तौ साधर्म्यमुपमोच्यते
धर्मविच्छित्तिवशतस्त्रैविध्यमुपयाति सा ॥

---

१. बिम्बप्रतिबिम्बत्वेन—शा० ना० ।
२. अत्र—ना० नि० पुस्तकयोर्नास्ति । ३. अवगमः—नि० ।
४. °धर्मद्वय सं—शा१ । ५. अत्र—शा० ना० पुस्तकयोर्नास्ति ।

युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापो[1]
भीमोऽपि भीम इव वैरिषु भीमकर्मा ।
न्यग्रोधवर्तिनमथाधिपतिं कुरूणा-
[2]मुत्प्रासनार्थमिव [3]जग्मतुरादरेण ॥१६॥

**द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा ॥सू० १३॥**

तच्छब्देनोपमानोपमेयत्वप्रत्यवमर्शः[4] । पर्यायो यौगपद्याभावः ।

युद्ध में प्रसिद्ध पराक्रम वाला अर्जुन अर्जुन की भांति है, शत्रुओं के लिए भीषण आचरण करने वाला भीम भीम की भांति है। ये दोनों पीपल के पेड़ के नीचे बैठे हुए कौरवराज के पास उसका शायद मन पहिचानने के लिए आदर के साथ पहुंचे ।१६॥

दो के क्रमशः 'वह' होने पर उपमेयोपमा होती है। सू० १३॥

'वह' शब्द से 'उपमान और उपमेय होने' का ग्रहण होता है। क्रमशः

अनन्वयं सूत्रयति—

"एकस्यैवोपमानोपमेयत्वेऽनन्वयः ॥"

ननूपमेयत्वमुपमानत्वं च कथमेकत्र सङ्गच्छत इत्यत आह—वाच्याभिप्रायेणेत्यादि । पूर्वं रूपमुपमेयत्वम् । तदनुगमो वाच्याभिप्रायेण, यत् पुनरपूर्वं रूपमुपमानत्वं तदनुगमो व्यङ्ग्याभिप्रायेणेति यावत् । नन्वेकत्र विरुद्धधर्मोपनिबन्धलभ्यः कोऽर्थ इत्यत आह—एकस्य तु विरुद्धेत्यादि । सब्रह्मचारी सदृशः । एकस्यैवोपमानोपमेयक्लृप्तिः सदृशान्तरसम्बन्धनिवृत्त्यर्थमित्यर्थः । यत इत्थं सदृशान्तरस्यानन्वयः अतः संज्ञेयमन्वर्थिकेत्याह—अतएवानन्वय इत्यादि । योगः प्रवृत्तिनिमित्तम् । अपिशब्देन सदृशान्तरनिवृत्तिरपि समुच्चीयते । युद्धेऽर्जुन इति । उत्प्रासनमभिप्रायपरिज्ञानम् । अत्र प्रथमार्जुनभीमशब्दौ वाच्यपरौ । चरमौ तु व्यङ्ग्यपरौ ।

विरुद्धधर्मसंसर्गस्तुल्यान्तरनिवृत्तये ।
ततस्तदन्वयाभावाद् भवेदयमनन्वयः ॥

अथ तृतीयसब्रह्मचारिनिवृत्तिफलामुपमेयोपमां सूत्रयति—

"द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा ॥"

---

१. प्रभावो—अ० ।
२. °मुत्प्राशनार्थमभिजग्मतु—अ० । ३. °मधिजगमतु—शा० ना० ।
४. परामर्शः—शा० ना०, प्रत्यवमर्षः—नि० (प्रत्यवमर्शः—इति स्थाने)

**अत एवात्र वाक्यभेदः। इयं च[1] धर्मस्य साधारण्ये वस्तुप्रतिवस्तु-निर्देशे च द्विधा।**

**[2]आद्ये यथा—**

खमिव जलं जलमिव खं हंसश्चन्द्र इव [3]हंस इव चन्द्रः।
[4]कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥१७॥

**[5]द्वितीये यथा—**

**[6]सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजा।**
**वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥१८॥**

(पर्याय) का अर्थ है एक साथ न होना। इसीलिए इस अलंकार में (अत्र) वाक्य भिन्न होते हैं। यह (उपमेयोपमा) धर्म के साधारण्य तथा वस्तु-प्रतिवस्तु के रूप में निर्देश के रहने से दो प्रकार की होती है। प्रथम का उदाहरण—

आकाश की भांति जल, जल की भांति आकाश, चन्द्र की भांति हंस, हंस की भांति चंद्र, कुमुद के आकार के तारे और तारों के आकार के कुमुद (सुशोभित हो रहे हैं) ।१७॥

दूसरे का उदाहरण—

जहां सुशोभन मुख के समान कमल वाली बाउलियां सुशोभन मुख-कमल वाली स्त्रियों की भांति, और स्त्रियां बाउलियों की भांति शोभित होती हैं ।१८॥

द्वयोरुपमानोपमेयभावविनिमये सत्युपमेयोपमालङ्कार इत्यर्थः। तदेतद् व्याचष्टे—तच्छब्देनेत्यादि। तच्छब्देनोपमानोपमेयत्वप्रत्ययमर्श इति वदता सन्निहितानन्वयप्रत्ययमर्शशङ्का निवार्यते। अनन्वयाद् वैधर्म्यान्तरं दर्शयितुमाह—**पर्याय इत्यादि।** यौगपद्यमिहैकवाक्यानुप्रवेशः। तदभावाद् भिन्नवाक्यत्वमेवेत्याह—**अत एव त्विति।** अत्रायमाशयः—उपमेयमुद्देश्यम्, उपमानं तु विधेयम्। इत्थं च सत्युपमानोपमेयभावव्यत्ययो वाक्यैकवाक्यतामन्तरेण न सम्भवति। अनन्वये तु पदैकवाक्यतैवेति। अत्र बिम्बप्रतिबिम्बभावो न सम्भवति। भिन्नवाक्यत्वेन तन्निबन्धनवैचित्र्याप्रतीतेः। साधर्म्यनिबन्धन-

---

१. च—शा० ना० पुस्तकयोर्नास्ति।

२. आद्या—अ०। आद्ये—शा० ना० शा१ नास्ति।

३. चन्द्र इव हंसः—शा१।

४. कुमुदा····कुमुदानि—इत्यंशो भग्नः शा१। ५. द्वितीया—अ०।

६. श्लोकस्यास्य प्रथमचरमौ पादौ शा१ पुस्तके भग्नौ।

## सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम् ॥सू० १४॥

[1]वस्त्वन्तरं सदृशमेव। अविनाभावाभावान्नानुमानं। यथा—
अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम्।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥१९॥

समान (वस्तु) के अनुभव से दूसरी वस्तु की स्मृति स्मरण है। सू० १४॥

दूसरी वस्तु समान ही हो। (एक वस्तु के अनुभव और उसी के समान दूसरी वस्तु की स्मृति में) अविनाभाव (जिसके विना जो न रहे) न होने के कारण अनुमान नहीं हो सकता है। उदाहरण—

(लव को देखकर सूत की चन्द्रकेतु के प्रति उक्ति)

देव तथा दानव से अधिक पराक्रमी, राम के समान ही रूप वाले बालक को देखकर, विश्वामित्र के यज्ञ से द्वेष रखने वाले राक्षसों का विनाश करने के लिए धनुष धारण किए हुए राम का मुझे स्मरण हो आता है ॥१९॥

मन्यद् वैचित्र्यद्वयं तु सम्भवतीत्याह—इयं धर्मस्येत्यादि। साधारण्यमैकरूप्येण निर्देशः। वस्तुप्रतिवस्तुभावस्तु प्रतीतचरः। खमिवेति। अत्र प्रतीयमानस्य नैर्मल्यधर्मस्यानुगामित्वेन साधारण्यम्। सच्छायेति। छाया शोभा। अत्र सच्छायत्वं सम्बन्धिभेदाद् भिन्नम्।

उपमानोपमेयत्वव्यत्ययो न क्रमं विना।
उपमेयोपमा तेन वाक्यभेदैकगोचरा ॥

अथ स्मरणं सूत्रयति—

"सदृशानुभवाद् वस्त्वन्तरस्मृतिः स्मरणम् ॥"

सदृशानुभवाद् सदृशान्तरस्मरणं स्मरणालङ्कारः। व्याचष्टे—वस्त्वन्तरमिति। सदृशसमभिव्याहाराद् वस्त्वन्तरं सदृशमेवेति भावः। द्विष्ठस्य धर्मस्यैकत्रावस्थास्नोः प्रतियोग्याक्षेपमन्तरेणानुपरमात्। अनुमानाद् वैधर्म्यायाह—अविनाभावेत्यादि। अविनाभावो व्याप्तिः। नहि गवादिदर्शने नियमेन गवयादिसदृशान्तरस्मरणमस्ति तादात्म्यतदुत्पत्त्योरन्यतराभावेनालिङ्गितत्वात्। अतिशयितेति। इयं योद्धुकामं लवमालोक्य सकौतुकस्य सूतस्य चन्द्रकेतुं प्रत्युक्तिः। तथैव तुल्यरूपमिति सदृशानुभवोद्घाटनम्। असादृश्यहेतुका

---

1. वस्त्वन्तरम्—शा१ पुस्तके भग्नम्।

**सादृश्यं विना तु स्मृतिर्नायमलंकारः । यथा —**

**अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।**
**रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम्[1] ॥२०॥**

**अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वे[2] स्मर्तृदशाभावित्वमसमीचीनम् । प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः । यथा—'अहो कोपेऽपि कान्तं मुखम्' इति । तत्रापि विभावाद्यागूरितत्वे, न स्वशब्दमात्र[3]-प्रतिपाद्यत्वे यथा—अत्रानुगोदमित्यादि[4] ।**

सादृश्य के विना स्मृति यह अलंकार नहीं हो सकती है । जैसे कि—

यहां (गोदावरी के पास) मैं शिकार से लौटता था, लहरों की हवा से (मेरी) थकावट दूर होती थी, और एकान्त में तुम्हारी गोद में सिर रख कर वेतस के घर में मैं सो जाता था—यह याद कर रहा हूं ॥२०॥

यहां कर्ता (राम) के विशेषणों को स्मर्यमाण दशा का विषय बनाना चाहिए था अतः उन्हें स्मर्ता (राम) की दशा का सूचक बनाना अनुचित है ।

सादृश्य से भिन्न निमित्त से उत्थापित स्मृति प्रेयोऽलंकार का विषय बनती है । जैसे—

अहो ! क्रोध में भी मुख कमनीय है ।

वह (स्मृति) भी विभाव आदि से व्यंजित हो स्वशब्द से ही प्रतिपादित न हो (तभी प्रेयोऽलंकार बनती है) जैसे कि 'अत्रानुगोदम्' आदि (श्लोक २०) ।

**स्मृतिर्न स्मरणालङ्कार इत्याह—सादृश्यं विना त्विति । प्रत्युदाहरति—अत्रानुगोदमिति । अत्र हि पूर्वानुभूतार्थदर्शनादेव स्मृतिर्न तु सदृशानुभवात् । प्रसङ्गाद् गूढमभवन्मतयोगदोषमप्युद्भावयति—अत्र च कर्तृविशेषणानामित्यादि । मृगयादशाभाविकर्तृविशेषणानां स्मरामीति स्मरणक्रियाकर्तुर्दाशरथेर्विशेषणानां मृगयानिवृत्त्यादीनां स्मर्तव्यदशाभावित्वे अनुभूतचरत्वात् स्मर्तव्यमृगयादशाभावित्वे युक्ते स्मर्तृदशाभावित्वं मृगयानिवृत्तः स्मरामीति स्मरणकालभावित्वमसमीचीनं, नहि मृगयानिवृत्त्यपनीतत्वे खेदत्वादिविशिष्टः स्मरति । किन्तु मृगयानिवृत्त्यादिकं स्मर्तव्यसुप्तिविशेषणमेव । अत इष्टार्थो न**

---

[1] सुप्तिम्—अ० । सुप्तः—नि० ।

[2] भावित्वेन—अ० । [3] प्रतिपादितत्वे—अ० ।

[4] शा० ना० पुस्तकयोः 'आदि' शब्दो नास्ति ।

यैर्दृष्टोऽसि तदा ललाटपतितप्रास[1]-प्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान्पातयन्।
तेषां दुःसहकाल[2]-देहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभर[3]-भास्वरे स्मररिपावस्तं गतं कौतुकम् ॥२१॥

इत्यादौ सदृश[4]-वस्त्वनुभवेऽशक्यवस्त्वन्तरकरणात्मा विशेषालंकारः। करणस्य क्रियासामान्यात्मनो दर्शनेऽपि [5]संभवात्। मतान्तरे काव्य-

जिन्होंने (भी) उस समय युद्ध में बरछे के प्रहार को भाल में पाए हुए और खून की स्फीत धारा के प्रवाह से लाल शरीर (पुरोभाग) वाले तुम्हें शत्रु को मारते हुए देखा है उनकी उत्सुकता कामदेव के शरीर को भस्म करने के लिए उत्पन्न नेत्राग्नि के ज्वालावलय से प्रदीप्त कामारि (शिव) का दर्शन करने को नहीं रह गई है ॥२१॥

इस प्रकार के उदाहरणों में (इत्यादौ) दूसरी सदृशवस्तु का अनुभव होने पर भी विशेषालंकार है, जिसका स्वरूप है—अशक्य वस्त्वन्तर का निष्पादन या करण। 'करण' क्रिया का सामान्य स्वरूप है जो 'दर्शन' में भी पाया जा सकता है। दूसरों के मत से यह उदाहरण (एतत्) काव्यलिंग का है।

सम्भवतीत्यभवन्मतयोगाख्योऽयं दोषः। ननु यदा प्रेयोऽलङ्कारो रतिभावात्मको न तदा स्मृतिः। यदा तु व्यभिचारिभावात्मकस्तदा स्मृतिरूपोऽपि कदाचित् सम्भवति। ततोऽस्य स्मरणालङ्कारस्य किं वैधर्म्यमित्यत आह— प्रेयोऽलङ्कारस्य त्वित्यादि। उदाहृत्य दर्शयति—अहो कोपेऽपि कान्तं मुखमिति। अत्रान्याभिनिविष्टस्य नायकस्य प्रियानुरागसंस्काराणां संस्कारान्तराभिभावकतया भूयो भूयः समुद्बुध्यमानानां महिम्नैव स्मृतिः, नहि सदृशानुभवात्। वैधर्म्यान्तरमप्युद्भावयति—अत्रापि विभावेत्यादि। विभावानुभावाभ्यां यदा स्मृतिर्व्यज्यते तदैव हि भावालङ्कारः। यैर्दृष्टोऽसीति। प्रासप्रहारनेत्रयोरसृक्स्रुत्यनलज्वालयोः, परपातनकालदेहदहनयोः नायकस्मररिप्वोश्च सादृश्यं विवक्ष्यते। अत्र योऽयं सदृशवस्त्वन्तरानुभवो यैर्दृष्टोऽसीति निर्दिष्टः नासौ स्मररिपुस्मरणजननात् स्मरणालङ्कारः। किन्तु अशक्यस्मररिपुदर्शनकौतुकास्तमयरूपार्थान्तरकरणात्मा विशेषालङ्कारः। एतद्दर्शनेन तदपि

[1]. प्राप्त—नि०। [2]. काम—अ०। [3]. भरभासुरे—अ०।
[4]. सदृशस्त्वन्तरानुभावे–नि०। सदृशानुभवेऽपि असदृशवस्त्वनुभवो–ना०।
[5]. संभवात्—त्रुटितः शा१।

लिङ्गमेतत्। तदेते सादृश्याश्रयेण[1] भेदाभेदतुल्यत्वेनालंकारा[2] निर्णीताः संप्रत्यभेदप्राधान्येन[3] कथ्यन्ते—

**अभेदप्राधान्ये [4]आरोपे आरोपविषयानपह्नवे रूपकम् ॥सू० १५॥**

इस प्रकार इन सादृश्यमूलक, भेदाभेदप्रधान अलंकारों का विवेचन हो चुका। अब अभेद की प्रधानता को लेकर (अलंकारों का) निरूपण किया जा रहा है—

अभेद की प्रधानता होने पर आरोप हो, आरोपविषय का अपह्नव न हो, (वह) रूपक है। सू० १५॥

सिद्धमिति प्रतीतेः। नन्वशक्यवस्त्वन्तरकरणं विशेषालङ्कारस्य लक्षणम्। इह तु करणं नोपलभामह इत्यत आह—करणस्येत्यादि। कृभ्वस्त्यर्थानां सर्वधात्वनुयायित्वात् क्रियासामान्यात्मा करोत्यर्थो दर्शनेऽपि न न सम्भवति। यदुक्तमस्माभिः प्रयोगदीपिकायाम्—

"तेऽस्त्यर्था धातवो ज्ञेया य उदासीनकर्तृकाः।
विकुर्वाणप्रयुञ्जानकर्तृका भूकृञर्थकाः॥" इति

येषां कर्तार उदासते तेऽस्त्यर्थाः, येषां विकुर्वते ते भवत्यर्थाः, येषां तु प्रयुञ्जते ते करोत्यर्थाः। अतो दृशिः प्रयुञ्जानकर्तृत्वात् करोत्यर्थ एवेति सिद्धम्। ननु स्मररिपुदर्शनकौतुकास्तमये प्रकृतनायकदर्शनं हेतुरिति काव्यलिङ्गं किं न स्यादित्यत आह—मतान्तर इत्यादि। अस्मद्दर्शने विशेषालङ्कारः, मतान्तरे काव्यलिङ्गम्। स्मरणं तु सर्वत्र न भवतीति भावः। काव्यलिङ्गत्वाभावे अशक्यकरणात्मा विच्छित्तिविशेष एव हेतुः।

स्मृतिः सा स्मर्यते यत्र सदृशात् सदृशान्तरम्।
असादृश्यादवाच्यत्वादितः प्रेयान् विभिद्यते॥

इत्थं भेदाभेदतुल्यत्वे अलङ्कारान् विविच्याभेदप्राधान्यमधिचिकीर्षुराह—तदेते सादृश्येत्यादि। तत्राप्यारोपमूलालङ्काराणां बीजभूतं रूपकमादौ सूत्रयति—

"अभेदप्राधान्य आरोप आरोपविषयानपह्नवे रूपकम्॥"

---

[1] श्रयणेन—अ०। भग्नोऽत्रत्यः शा१ पुस्तकलेखः।
[2] तुल्यत्वेऽलङ्कारा—अ०। भग्नोऽत्रत्यः शा१ पुस्तकलेखः।
[3] प्राधान्ये कथ्यन्ते—अ०। भग्नोऽत्र शा१ लेखः।
[4] प्राधान्ये त्वारोपे—ना०।

[1]अभेदस्य प्राधान्याद् भेदस्य वस्तुतः सद्भावः। [2]आरोपोऽन्यत्रान्यावापः[3]। तस्य[4] विषयविषय्यवष्टब्धत्वाद्विषयस्यापह्नवे[5]ऽपह्नुतिः। अन्यथा तु विषयिणा विषयस्य रूपवतः करणाद्रूपकम्। साधर्म्यं त्वनुगतमेव। यदाहुः—'उपमैव तिरोभूतभेदा [6]रूपकमिष्यते' इति। [7]आरोपाद-

अभेद की प्रधानता से भेद का होना वास्तविक है। एक का दूसरे पर निक्षेप आरोप है। वह (आरोप) विषय और विषयी से संश्लिष्ट होता है, अतः (यदि) विषय का अपह्नव होता है तो अपह्नुति होती है। अन्यथा विषयी द्वारा विषय को रूपित करने के कारण रूपक होता है। साधर्म्य तो (दोनों में) रहता ही है। जैसा कि कहा है 'उपमा ही अपने भेद को तिरोहित की हुई रूपक कहलाती है'।

अभेद की स्थिति में आरोप से भी अधिक प्रबल अध्यवसाय होता है अतः उस पर आधारित अलंकारों का विभाग बाद में किया जाएगा। यह (रूपक)

मुखमेव चन्द्र इत्यादौ हि साधर्म्यमभेदप्रधानकं चन्द्रत्वाद्यारोपस्य यो विषयो मुखादिः तस्यानपह्नवश्च रूपकालङ्कार इति सूत्रार्थः। तदेतद् व्याचष्टे—अभेदस्येत्यादि। भेदस्य वस्तुतः सद्भाव इत्यतिशयोक्तितो वैधर्म्यं दर्शितम्। अथारोपशब्दार्थं विवृण्वन् व्युदसनीयविषयविवेचनपुरस्कारेण विषयमस्य विवेचयति—आरोपोऽन्यत्रान्येति। अन्यत्र हि मुखादावन्यस्य चन्द्रत्वादेरध्यसनमारोपः स च द्विष्ठत्वाद् विषयिणा विषयेण चावष्टभ्यते। इत्थं द्वौ शब्दसिद्धौ। यदा चन्द्र एव न मुखमिति विषयस्यापह्नवस्तदापह्नुत्यलङ्कारः। अनपह्नवे तु रूपकमिति विभागः। लक्ष्यपदं निर्वक्ति विषयिणा विषयस्य रूपवतः करणादिति। विषयी विषयं स्वेन रूपेण रूपवन्तं करोतीति रूपकमित्यर्थः। उपमातः प्रभृति साधर्म्याधिकारमनुस्मारयति—साधर्म्यं त्वित्यादि। तत्रार्थे संवादायाह—उपमैवेति। तिरोभूतभेदा न त्वपह्नुतभेदा। आरोपमूलस्याध्यवसायमूलेभ्य उत्प्रेक्षादिभ्यो निर्देशे प्राथम्यं न्यायतोऽवस्थापयति—आरोपादभेदेनेत्यादि। प्रकृष्यते अतिसादृश्यप्रत्यायनाद्रसस्य प्रत्यासन्नोपकारी

---

१. °दप्रा°—ना०। २. अन्यत्रान्यावाप आरोपः—नि०। आरोपोऽन्यत्रान्यारोपः—ना० शा१।

३. तस्य—अ० पुस्तके नास्ति। ४. विषयस्य वि०—अ० शा० शा१।

५. विषयापह्नवे—अ० शा१। ६. रूपकमुच्यते—ना०।

७. अत्रारो—शा०।

[1]भेदेऽध्यवसायः प्रकृष्यते इति [2]पश्चात्तन्मूलालंकारविभागः[3]। इदं तु[4] निरवयवं, सावयवं, परम्परितं च[5] [6]त्रिविधम्। आद्यं केवलं मालारूपकं चेति द्विधा[7]। द्वितीयं समस्तवस्तुविषयमेकदेशविवर्ति चेति[8] द्विधैव। तृतीयं [9]श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत्प्रत्येकं केवलमालारूपकत्वाच्चतुर्विधम्। तदेवमष्टौ रूपकभेदाः।

प्रथमतः निरवयव (निरंग), सावयव (सांग), तथा परम्परित इन रूपों में तीन प्रकार का है। पहला (निरवयव) (१) केवल और (२) मालारूप इस प्रकार दो प्रकार का है। दूसरा (सावयव) (३) समस्तवस्तुविषय तथा (४) एकदेशविवर्ति के रूप में दो ही प्रकार का है। तीसरा (परम्परित) (५) श्लिष्ट-शब्दनिबंधन (६) अश्लिष्ट-शब्दनिबंधन के रूप में दो प्रकार का है फिर प्रत्येक (७) केवल और (८) मालारूप होता है अतः चार प्रकार का है। और इस प्रकार रूपक के भेद आठ हैं।

भवतीत्यर्थः। इति हेतौ। यत इत्थमभेदेनाध्यवसायः प्रकृष्यते अतस्तन्मूलालङ्काराणां विभजनं पश्चात् करिष्यत इति शेषः। अत्रैतदनुसन्धेयम्—इह यो यावानलङ्कारवर्गो विवेचयिष्यते विवेचितचरश्च सर्वत्रैवात्र रसं प्रति उत्तरोत्तरं प्रत्यासन्नोपकारिता पूर्वपूर्वं पुनरारादुपकारिता। तत्र यद्यपि प्रत्यासन्नोपकारिणां प्राधान्यमथापि तेषां सूक्ष्मसूक्ष्मतरत्वात् स्थूलालङ्कारपुरस्कारेण व्युत्पादनमिति। तद्भेदानाह—इदं च निरवयमित्यादि। निरवयवं विशेष्यमात्रनिष्ठं, सावयवं विशेषणविशेष्योभयनिष्ठं, परम्परितं परम्परायातम्। प्रथमग्रहणं भेदान्तरप्रथनोपोद्घातः। निरवयवस्य द्वैविध्यं दर्शयति—आद्यमित्यादि। केवलं सहचररूपकान्तररहितं मालारूपं नानारूपकसाहचर्यावस्थम्। सावयवस्य द्वैविध्यमाह—द्वितीयं समस्तेत्यादि। वस्तुशब्दोऽत्र पदार्थवचनः। समस्तानि निरवशेषाणि विशेषणविशेष्यात्मकानि वस्तूनि विषयो यस्य तत् समस्तवस्तुविषयम्। यत्पुनर्विशेषणांशे क्वचिन्न क्रियते विशेषणांशान्तरे विशेष्ये च क्रियते तदेकदेशे विशिष्य वर्तनादेकदेशविवर्ति। परम्परितं तु चतुर्धेत्याह—तृतीयं तु

---

१. भेदेनाध्य°—अ०। २. °कारः—शा० ना०।
३. विभागः—शा० ना० पुस्तकयोर्नास्ति। ४. इदं च नि°—अ०।
५. परम्परितमिति—नि०। ६. प्रथमं त्रिविधम्—अ०।
७. द्विविधैव—शा०। ८. चेति—शा० नास्ति।
९. तृतीयन्तु—अ०।

अन्ये तु प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः[1] संभवन्ति [2]तेऽन्यतो द्रष्टव्याः। क्रमेण यथा—

दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥२२॥

पीयूषप्रसृतिर्नवा मखभुजां दात्रं तमोल्लूनये
स्वर्गङ्गाविमनस्ककोकवदनस्रस्ता मृणालीलता।

प्रत्येक के वाक्यगत समासगत आदि और भी अनेक भेद हो सकते हैं जिन्हें दूसरे ग्रन्थ (अन्यतः) से जान लेना चाहिए। क्रमशः उदाहरण :—

(निरवयंव केवल रूपक)

अयि सुन्दरि ! दास अपराधी हो तो स्वामियों का लात मारना उचित है अतः मैं दुःखी नहीं हूँ। पर उदीयमान कठोर रोमांच के अंकुररूपी कांटों से तुम्हारे शरीर का यह दुःखना ही सचमुच मेरी पीड़ा है। २२॥

(निरवयव मालारूपक)

देवताओं के लिये नवीन अमृत-प्रवाह, अंधेरे को काटने के लिये हंसिया, आकाशगंगा के खिन्न चकवे के मुँह से गिरी हुई मृणाल की लता, काम के धनुष का दूसरा रूप, और प्रियतमा के प्रति कुछ अपराध किए हुए पथिकों

श्लिष्टाश्लिष्टेत्यादि। श्लिष्टशब्दमश्लिष्टशब्दं चेति द्वैरूप्यमनुप्रपद्य प्रतिस्वं केवलं मालारूपं चेति प्रथत इत्यर्थः। भेदचर्चां निगमयति—तदेवमष्टाविति। केवलं निरवयवं, मालानिरवयवं, समस्तवस्तुविषयं सावयवम्, एकदेशविवर्ति सावयवं, श्लिष्टशब्दं केवलपरम्परितं, श्लिष्टशब्दं मालापरम्परितमश्लिष्टशब्दं केवलपरम्परितमश्लिष्टशब्दं मालापरम्परितं चेति। यदा तु विशेषणांशरूपण-बलादेव विशेष्ये रूपकमर्थादवगम्यते तदा समासोक्तं रूपकम्। यद्वा समासेनोक्तम्। एवमादिभेदाः स्थूलतया न प्रतन्यन्त इत्याह—अन्ये त्वित्यादि। दास इति। अस्तीत्यहमर्थे निपातः। अत्र पुलकाङ्कुराणां कण्टकत्वेन निरवयवं रूपणम्। तच्च रूपकान्तरसाहचर्याभावात् केवलम्।

पीयूषप्रसृतिरिति। दात्रं लवित्रम्। लूनिर्लवनम्। विमनस्कत्वं

---

१. °सोक्तभेदाः—शा०। २. तेऽन्यत्र—शा० ना०।

द्विर्भावः स्मरकार्मुकस्य किमपि प्राणेश्वरीसागसा-
माशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनुः ॥२३॥
विस्तारशालिनि नभस्तलपत्रपात्रे
कुन्दोज्ज्वलप्रभभसंचयभूरिभक्तम् ।
गङ्गातरङ्गघनमाहिषदुग्धदिग्धं
जग्धं मया नरपते ! कलिकालकर्ण ॥२४॥
आभाति ते क्षितिभृतः क्षणदाप्रभेयं[1]
निस्त्रिंशमांसलतमालवनान्तलेखा ।
[2]इन्दुत्विषो युधि हठेन तवारिकीर्ती-
[3]रानीय यत्र रमते तरुणः प्रतापः ॥२५॥

का आशातंतु, चन्द्रमा का यह (कलात्मक) शरीर दूज में उदित हो रहा है ।२३॥

(सावयव समस्त-वस्तुविषय रूपक)

कलियुग के कर्ण राजन् ! विस्तृत आकाश की पत्तल में रखा हुआ, कुन्द-कलियों-जैसा सफेद, गंगा की तरंग-रूपी भैंस के गाढ़े दूध से सना हुआ नक्षत्र-मण्डल-रूपी प्रचुर भात मैंने खाया है । २४॥

(सावयव एकदेशविवर्ति रूपक)

आप राजा (क्षितिभृत्—राजा तथा पर्वत) की खड्गरूपिणी घनी तमाल-वनप्रान्त की पंक्ति रात के समान मालूम पड़ती है । जहाँ चन्द्रकान्तिवाले आपका युवा प्रताप शत्रुओं की कीर्तिओं को युद्धस्थल से हठात् लाकर रमण करता है । २५॥

निशि विरहेण । द्विर्भावो द्विरुदयः । एतन्मालानिरवयवम् ।

विस्तारशालिनीति । पत्रपात्रं पलाशोपरचितममंत्रम् । भानि ताराः । भक्तमन्नम् । घनं शृतम् । अत्र ग्राम्यजनोक्तौ समस्तपदार्थविषयत्वात् समस्त-वस्तुविषयं सावयवं रूपकम् ।

आभातीति । क्षितिभृद् राजा । स एव क्षितिभृत् शैलः । निस्त्रिंशः खड्गः । स एव तमालवनान्तलेखा । अत्र कीर्तीनां हठहृतमहिलात्वमर्थात्

---

१. निर्भेयम्—अ० । २. इन्दुद्विषो—नि० ।
३. रादाय—अ० ।

क्षितिभृत इत्यत्र श्लिष्टशब्दं[1] परम्परितम् ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न [2]वा
वृद्धिं वा[2] झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ।।२६।।

अत्र [3]वक्त्रेन्दुरूपणहेतुकं [4]पीयूषेणाधरामृतस्य श्लिष्टशब्दं रूपणम् ।

'क्षितिभृत्' इस पद में श्लिष्टशब्द-परम्परित है ।

(श्लिष्टशब्द-निबंधन केवल परम्परित)

(तुम्हारा मुख) क्या कमल की श्री को तिरस्कृत नहीं करता है ? अथवा क्या नेत्रों को आनन्द नहीं देता है ? अथवा क्या मकरध्वज (कामदेव तथा समुद्र) की वृद्धि (अपने) आलोक से ही नहीं पैदा करता है ? तुम्हारे मुख-चंद्र के रहते हुए यह ज़ो दूसरा चन्द्रमा उग आया है उसे यदि अमृत का अभिमान है तो वह भी यहाँ बिम्बाधर में मौजूद है ।२६।।

इस उदाहरण में मुख पर चन्द्र के आरोप के कारण पीयूष पर अधरामृत का श्लिष्टशब्द से आरोप है ।

प्रतीयत इति एकदेशविवर्ति सावयवम् । क्षितिभृत इत्यंशे तु सङ्कर इत्यभिप्रायेणाह—क्षितिभृत इत्यत्रेत्यादि ।

किं पद्मस्येति । अत्र न हन्ति किमित्यादौ नञा प्रथमतो हननादिनिषेधः किमिति काक्वा निराक्रियते । अतो हन्त्येवेत्यादिरर्थः सम्पद्यते । अत्र वक्त्रेन्दुरिति रूपणम् यस्येन्दुनिष्ठस्य पीयूषस्य हेतुः तदधरामृतेन सह श्लिष्टम् । इतरथा तदपीहास्तीत्युपन्यासः कथं सङ्गच्छते । अत इन्दुरूपणद्वाराऽऽयातत्वात् परम्परितं केवलं च । तदेतद्दर्शयितुमाह—अत्र वक्त्रेन्दुरूपणेत्यादि ।

---

१. श्लिष्टपदं—नि० । श्लिष्टशब्दपरम्परितम्—अ० ।

२. किं—अ० ।

३. वक्त्रेण रूपणमहेतुकम्—नि० ।

४. पीयूषस्याधरामृतेन श्लिष्टशब्देन रूपणम्—अ० । वि० दृशाऽयमपपाठः । 'अधरामृतस्य पीयूषेण'—इत्येवं नि१ क्रमः ।

विद्वन्मानसहंस ! वैरिकमलासंकोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥२७॥

अत्र त्वमेव हंस [1]इत्याद्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप [2]इति श्लिष्टशब्दं [3]मालापरम्परितम् ।

(श्लिष्टशब्द-निबंधन माला-परम्परित)

हे वीरश्रेष्ठ ! विद्वानों के मन-मानस के राजहंस ! शत्रुओं के श्री—संकोच-रूपी कमलों के असंकोच (कमलायाः संकोच एव कमलानामसंकोचः) के सूर्य ! दुर्गों के अमार्गण-रूप दुर्गा के मार्गण (दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्) के महादेव ! समिधारूप युद्धों को स्वीकार करने में अग्निदेव ! सत्य के प्रति अनुराग ही सती के प्रति रोष (सत्ये प्रीतिरेव सत्यामप्रीतिः)—उसके निष्पादन में दक्षप्रजापति ! विजय-प्रारम्भ-रूप अर्जुन के भीमसेन ! स्वामिन् ! (आप अपने) साम्राज्य का ब्रह्मा के सैकड़ों वर्षों तक शासन करते रहें । २७॥

यहां 'तुम्हीं हंस हो' इत्यादि आरोप करते हुए 'मन ही मानसरोवर है' इत्यादि आरोप है अतः श्लिष्ट-शब्दनिबन्धन माला-परम्परित है ।

**विद्वन्मानसेति ।** विदुषां मानसमेव मानसं तत्र हंसः । वैरिणां कमलाया लक्ष्म्याः सङ्कोच एव कमलानामसङ्कोचस्तत्र दीप्रद्युते गभस्तिमालिन् । दुर्गाणां नदीशैलादिपरिक्षेपवतामावासानां मार्गणमन्वेषणम् । तदभाव एव दुर्गायाः कात्यायन्या मार्गणं तत्र नीललोहित । समितः संग्रामाः ता एव समिध एधांसि तत्स्वीकारे वैश्वानर । सत्ये प्रीतिरेव सत्यां दाक्षायिण्यामप्रीतिः तद्विधाने दक्ष दक्षप्रजापते । विजये परपराभवे प्राग्भवोऽग्रेसरता स एव विजयादर्जुनात् प्राग्भवः पुरो जन्म तत्र भीम । वत्सरशतमित्यन्तसंयोगे द्वितीया । क्रियाः कुरु । अत्र हि विदुषां मानसे त्वं हंस इति प्रतीतौ कथमस्य हंसत्वमिति विमर्शो जातो मानसपदे श्लेषमवगमयति । तथावगमितेन श्लेषेण हंसत्वमेव व्यवतिष्ठत इति श्लिष्टशब्दं परम्परितम् । तच्च मालारूपम् । तदिदमभिसन्धायाह—अत्र त्वमेवेत्यादि । समर्थत्वभयावहत्वलक्षणयोरर्थयोराभासनमात्रमेवेति न विरोधः ।

---

1. इत्यारो —नि० । 2. इति—शा० ना० शा१ नास्ति ।
3. °शब्दमाला—अ० ।

यामि मनोवाक्कायैः शरणं करुणात्मकं [1]जगन्नाथम् ।
जन्मजरामरणार्णवतरणतरण्डं [2]हराङ्घ्रियुगम् ॥२८॥

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः ।
सङ्ग्रामत्रास[3]ताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥२९॥

अत्र 'क्ष्मासौविदल्ल' इति परम्परितमप्येकदेशविवर्ति । एवमाद-यो[4]ऽपि भेदा लेशतः सूचिता एव ।

(अश्लिष्टशब्द-निबन्धन केवल परम्परित)

जन्म, जरा तथा मरणरूपी समुद्र पार करने के लिए नौकारूप, करुणा-स्वरूप, जगत् के प्रभु शङ्कर के चरणयुगल की मन, वाणी तथा शरीर से शरण ग्रहण करता हूं । २८॥

(अश्लिष्टशब्दनिबन्धन माला-परम्परित)

मालवा के अधिपति का पृथ्वी (—रूपी राजरानी) के लिए कंचुकी-रूप खड्ग, जो राज्यश्री का हरितमणि से बना पलंग है, पौरुषसमुद्र की लहर है, पराजित शत्रुओं के वंश से प्राप्त उत्कट विजयरूपी हाथी का विस्तृत मद-फलक है, युद्धभय से विकल मुरलाधिपति के कीर्तिहंस के लिए जो नीलमेघ है, वह (खड्ग) युद्धस्थल में विजय प्राप्त करता है । २९॥

यहाँ 'पृथ्वी (—रूपी राजरानी) के लिए कंचुकी' यह (प्रयोग) परम्परित को भी एकदेशविवर्ति बना देता है । इसी प्रकार के भेदों की थोड़ी सूचना (उदाहरणों में) दे दी गई है ।

यद्वा तत्रांशे श्लेष एवास्तु दक्षभीमपदयोः श्लेष एव प्रतीतिविश्रान्तेः अंशान्त-रमिहोदाहरणमिति सर्वमवदातम् ।

यामीति । तरण्डं प्लवः । अत्र तरण्डत्वरूपणसिद्धिर्जन्मजरामरणानाम-र्णवत्वरूपणायत्तेत्यश्लिष्टशब्दं रूपणं केवलं परम्परितम् । पर्यङ्क इति । पर्यङ्को विष्टरः । वंशः कुलम् । वेणुश्च । स्त्यानो घनः । मुरला देशविशेषाः । सौविदल्लः कञ्चुकी । इदं स्पष्टमेवाश्लिष्टशब्दं मालापरम्परितम् । ननु क्ष्मासौविदल्ल इत्यत्र भूमेर्महिष्यादिरूपणमशाब्दमित्यत आह—अत्र क्ष्मेत्यादि ।

---

१. जगन्नाथ—अ० । २. तवाङ्घ्रियुगम्—अ० शा० ।
३. त्रस्नु—अ० । ४. °दयोऽन्येऽपि—नि० ।

इदं[1] वैधर्म्येणापि दृश्यते । [2]यथा—

सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
[3]यैरेषा हि दुराशया कलियुगे राजावली सेव्यते[4]
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम्[5] ॥३०॥

अत्र चारोप्यमाणस्य धर्मित्वादाविष्टलिङ्गत्वेऽपि[6] क्वचित्स्वतोऽसंभवत्संख्यायोगस्यापि[7] विषयसंख्यात्वं प्रत्येकमारोपात् ।

यह (रूपक) वैधर्म्य से भी होता है जैसे—

सौजन्यजल के लिए मरुभूमि, सुचरित-चित्र के लिए आकाशभित्ति, गुण-चन्द्रिका के लिए कृष्णचतुर्दशी, सरलता-सम्बन्ध के लिए कुत्ते की लहराती पूँछ, इस प्रकार की दुर्भाव से सम्पन्न राजमण्डली की भी जो सेवा कर लेते हैं उनके लिए केवल भक्ति द्वारा आसानी से प्राप्य शंकर की सेवा करने में कितना कौशल होगा ? ॥ ३०॥

और इस रूपक में (अत्र च) आरोप्यमाण के धर्मी होने के कारण (उसका) लिंग तो नियत रहता है, कहीं उसमें विषय की संख्या भी—जो स्वतः उसमें (आरोप्यमाण) नहीं रहती हैं—प्रत्येक (विषय) पर आरोप के आधार पर आ जाती है ।

ननु किमनेनांशविषमेनोदाहरणेन प्रयोजनमित्यत आह—एवमादयोऽपीत्यादि । तथाहि—आदौ समासोक्त्यादिभेदो निरुदाहरणं सूचितः । आभाति ते क्षितिभृत इत्यत्र सङ्करः । क्षमासौविदल्ल इति तु परम्परितमप्येकदेशविवर्तीत्येवमादयो भेदा इति यावत् । किञ्च न केवलमिदं परम्परितरूपकमन्वयमुखेनैव यावता व्यतिरेकमुखेनापि सम्भवतीत्याह—इदं चेत्यादि ।

सौजन्येति । सौजन्यरूपस्याम्बुनो मरुस्थली अत्यन्तमसम्भवात् । सुचरितरूपस्य चित्रकर्मणो गगनभित्तिः अनधिष्ठानत्वादित्यनुसन्धेयम् । दुराशया दुरभिप्राया दुष्टया लिप्सया च । ननु रूपके यस्यारोपस्तस्य धर्मित्वादाविष्टलिङ्गसंख्याकत्वं धर्मिणो युक्तं तत्र न लिङ्गान्वयीकरणे गतिरस्तीति केचित् । संख्यान्वयीकारस्तु प्रत्येकमारोपादुपपद्यते । तदेतदुदाहृत्य हृदयं गमयति—

---

१. इदञ्च—अ० । २. यथा—शा० ना० शा१ नास्ति ।
३. रेषापि—नि० । रेषा च—अ० । ४. सेविता—अ० नि० ।
५. कौतुकम्—शा१ । ६. लिङ्गसंख्यत्वेऽपि—अ० । ७. अपि—अ० नास्ति ।

यथा—'क्वचिज्जटावल्कलावलम्बिनः कपिला दावाग्नयः' इत्यादौ न हि कपिलमुनेर्बहुत्वम्।

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥३१॥

इत्यत्र नियतसंख्याककार्यविशेषोत्थापितो[1] गरलार्थप्रभावितो विषशब्दे श्लेष एव जलदभुजगमिति रूपकसाधकमिति[2] [3]पूर्वसिद्धत्वाभावान्न तन्निबन्धनं विषशब्दे श्लिष्टशब्दं परम्परितमिति श्लेष एवात्रेत्याहुः।

जैसे—'कहीं-कहीं जटा और वल्कल वाली दावाग्नियाँ कपिल (पिंगल वर्ण तथा कपिलमुनि) हैं।' कपिल मुनि तो अनेक नहीं होते हैं।[4]

मेघरूप सर्प से उत्पन्न विषरूप वर्षा की बूँदे वियोगिनियों के लिए मानसिक अशान्ति, (विषयों में) अरुचि, उदासीनता, प्रलय, मूर्छा, अन्धकार, देहपीड़ा और मरण हठात् पैदा कर देती हैं। ३१॥

इस श्लोक में निश्चित (अर्थात् आठ) संख्या वाले विशेष कार्यों द्वारा उत्पादित, जहर के अर्थ से प्रभावित विष (गरल तथा जल) शब्द में श्लेष ही 'मेघरूप सर्प से उत्पन्न' इसमें आए रूपक का साधक है। (उस रूपक के) पहले से सिद्ध न होने के कारण विष शब्द में श्लिष्टशब्दनिबन्धन परम्परितरूपक नहीं माना जा सकता है, अतः यहाँ श्लेष ही है, यह मानते हैं।

यथा क्वचिदित्यादि। दवाग्निषु प्रत्येकमारोपात् कपिलमुनावसत्यपि बहुत्वसंख्योपपत्स्यत इति यावत्। निरवकाशत्वाद् बली श्लेषः सर्वालङ्कारबाधक इति सिद्धान्तयिष्यते। तेन श्लेषेण रूपकबन्ध इति सोदाहरणमाह—भ्रमिमित्यादि। भ्रमिः शिरोघूर्णिः। अरतिरभीष्टतो निवृत्तिः। आलस्यमनवस्था। प्रलय इन्द्रियोपरतिः। मूर्च्छा तेषामान्ध्यम्। तमोऽन्तर्धूमायमानता। शरीरसादः अङ्गानामप्रभविष्णुता। मरणं प्रतीतम्। तैरेतैर्नियतै-

---

१. °पितग° —अ०। २. रूपकसाधक —अ०। ३. पूर्वं सि —नि०।

४ उपर्युक्त उदाहरण में दावाग्नि पर 'कपिल' (आरोप्यमाण) का आरोप किया गया है। कपिल मुनि एक है पर 'कपिलाः' के रूप में बहुवचन का प्रयोग दावाग्नि के बहुवचन के आधार पर हुआ है। विश्लेषण करते समय 'अयमग्निः कपिलः, अयमग्निः कपिलः' इस रूप में विषय (दावाग्नि) को एक एक रूप में लेकर (प्रत्येक पर) 'कपिल' का आरोप किया जाएगा।

**आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ॥सू० १६॥**

**आरोप्यमाणं रूपके प्रकृतोपयोगित्वाभावात्प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं भजते परिणामे तु प्रकृतात्मतया आरोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति[1] ।**

आरोप्यमाण के प्रकृतोपयोगी होने पर परिणाम होता है। सू० १६ ॥

रूपक में अप्रकृत (आरोप्यमाण या विषयी) प्रकृत का उपयोगी नहीं होता है अतः प्रकृत के केवल उपरंजकरूप में ही उसका सम्बन्ध होता है। पर परिणाम में अप्रकृत का प्रकृतरूप में उपयोग होता है अतः प्रकृत अप्रकृत के रूप में परिणत हो जाता है।

रष्टभिर्विषकार्यैरेव गरलरूपोऽर्थ उद्भाव्यत इति नेह विषशब्दश्लेषो रूपकहेतुकः यथा विद्वन्मानसेत्यादौ। किन्तु श्लेषः पूर्वं सिद्धो रूपकहेतुरित्येवंविधे विषये श्लेषमेव न तु रूपकमित्याहुः न्यायविद इति श्लेषः।

यत् त्वभेदप्रधानं स्यात् साधर्म्यं तद् द्विधा मतम्।
आरोपाध्यवसानाभ्यामारोपे रूपकं भवेत् ॥
वस्तुतो भेदसद्भावात् शङ्क्या नातिशयोक्तिता।
विषयस्यानपह्नुत्या न चैतत् स्यादपह्नुतिः ॥
ततो विषयिरूपेण रूपवान् विषयो यतः।
आरोपणेन क्रियते तेनैतद् रूपकं मतम् ॥
भेदस्तृतीयो यस्त्वत्र परम्परितसंज्ञकः।
साधर्म्येणैव तत्सिद्धिर्वैधर्म्येणापि दृश्यते ॥
विषय्यारोप्यते येन प्रतिस्वं विषयेषु तत्।
भवेद् विषयसंख्यात्वं संख्यावेशे विधर्मिणः ॥
रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद् यदि।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥

अथ रूपकालङ्कारात् प्रकृतोपयोगलक्षणवैधर्म्यशालिने परिणामालङ्काराय सूत्रम्—

"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ॥"

प्रकृतोपयोगित्वं विविच्य दर्शयितुमाह—आरोप्यमाणं रूपक इत्यादि। आरोप्यमाणं चन्द्रत्वादि। प्रकृतोपयोगित्वाभावादिति। प्रकृतं मुखादि,

---

[1] परिणमते—ना०।

आगमानुगमविगमख्यात्यभावात्सांख्यीयपरिणामवैलक्षण्यम्।[1] तस्य सामानाधिकरण्यवैयधिकरण्य[2]-प्रयोगाद् द्वैविध्यम्। आद्यो यथा—

आगम, अनुगम, विगम, ख्याति न होने से सांख्य के परिणाम से (परिणामालंकार का परिणाम) भिन्न है। समानाधिकरण और व्यधिकरण के रूप में प्रयोग होने के नाते इसके दो भेद हैं। प्रथम का उदाहरण—

तत्रोपयोगित्वं वाक्यार्थानुप्रवेशपर्यन्तमारोपणविवक्षायां स्यात् तद्धि रूपके नास्ति मुखमेव चन्द्र इत्येतावतैव रूपकत्वसिद्धेः। तस्मादारोप्यमाणं चन्द्रत्वादि मुखादौ प्रकृतार्थे ताद्रूप्यप्रतीत्याधानरूपेणोपरञ्जकत्वेनैव रूपकालङ्कारोऽन्वयं भजते। परिणामे त्विति। परिणामालङ्कारे पुनरारोप्यमाणं न केवलं प्रकृतोपरञ्जकं यावता प्रकृतरूपमपह्नुवानं सत् तदात्मत्वेनोपयुज्यते। अत इह वाक्यानुप्रवेशान्तमारोपविवक्षा सा चाप्रकृतस्य प्रकृतरूपापत्तावेवोपपद्यते न पुना रूपकवद् प्रकृतस्याप्रकृतरूपतापत्तौ। तदेतदाह—प्रकृतमारोप्यमाणरूपत्वेनेत्यादि। अत्रैतदुपह्वरम्—आरोपस्य द्विष्ठत्वेऽपि प्रकृताप्रकृतयोर्नैकविधा वृत्तिः। कुतः? विषयविषयित्वेन विवक्षानियमात्। विषयो खल्वाधेयगुण एव भवति। विषयी पुनर्गुणाधातैव भवति। इत्थं च सति विषयित्वारोपणं विषये ताद्रूप्यप्रतीतिमाक्रान्तं चेद् विवक्ष्यते तदा ताद्रूप्यप्रतीतिजनकत्वमात्रमुपरञ्जकत्वमिति तावतैवारोपणस्य चरितार्थता। अतस्ताद्रूप्यप्रतीतिमात्रप्रसिद्धचर्थमप्रकृतं प्रकृतरूपापन्नं भवति रूपके। परिणामे तु प्रकृतोपयोगान्तमारोपविवक्षेति स्वरूपादप्रच्युतस्यैव प्रकृतस्याप्रकृतरूपोपग्राहित्वलक्षणावस्थान्तरापत्तिरेव। इतरथा रूपकन्यायेन प्रकृतस्य स्वरूपस्थगनेन प्रकृतमेव न प्रतीयेत। का तत्र प्रकृतोपयोगिता तदभावे च का रूपकविविक्तविषयता? प्रायेणात्र प्राचामाचार्याणामपि व्यामोहकलानुवृत्तिरिति रहस्यमुद्घाटितं रूपकपरिणामविषयविवेचनस्य। अत्र संग्रहायावान्तरश्लोकौ—

विषय्याकारमारोप्य विषयस्थगनं यदा।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः॥
यदा तु विषयो(यी)रूपात् स्वस्मादप्रच्युतो भजेत्।
उपयुक्त्यै पराकारं परिणामस्तदा मतः॥ इति।

नन्वयं लक्षणपरिणामः सांख्यैरप्युपवर्णितः। तथाहि धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चेति त्रिधा परिणामः संख्यातः। तत्र च लक्षणपरि-

१. ख्यात्यसम्भवात्—अ० ना०। २. करण्याभ्यां द्वैविध्यम्—अ०।

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं[1] नाविकाय ।

शिव की मौलिमाला गंगा को (सीता, लक्ष्मण और) स्वयं तीसरे राम ने पारकर उस नाविक (निषाद) को लक्ष्मण की मित्रता उतराई दी ।

णामात् किमस्य वैधर्म्यमित्यत आह—आगमानुगमेत्यादि । आप्तोक्तिरागमः । अनुगमो व्याप्तिः । व्यावृत्तिर्विगमः तत्प्रतीत्यभावाद् तद्वैलक्षण्यम् । न खल्वयं काव्ये लक्षणपरिणामः । आगमरूपेण वा अनुमानरूपेण वा ख्यातिरित्यलं प्रासङ्गिकेन बहुना । तत्रापि सांख्ययोगादिशास्त्रविषय प्रतिज्ञातं खल्वस्माभिः श्रीगुरुप्रसादसमनन्तरं शैशवे एव यथा—

शैवं विष्णुनिबद्धमौपनिषदं सांख्यं सपातञ्जलं
शास्त्रं स्वात्महिताय वेद सकलैः साकं पुराणादिभिः ।
भूपानां तु विनोदनाय भरतं नीतिं च वात्स्यायनं
षड्भाषाकवितां च लक्षणवतीं श्रीचक्रवर्ती कविः ॥

इति । स्पर्धया सिसाधयिषून् दुस्तार्किकजरद्गवान् प्रत्युपहासपरस्य ममायमन्यः श्लोकः—

सांख्यं वेश्मनि वेश्मनि श्रुतिशिरः कक्ष्यासु कक्ष्यासु च
द्वारि द्वारि शिवागमाः पथि पथि प्राचां कवीनां गिरः ।
पठ्यन्ते यदसूयिभिर्जडतरप्रज्ञैर्जरत्तार्किकै—
स्तत् सर्वं खलु चक्रवर्तिकवितुर्विद्यायशोडिण्डिमः ॥

इति । महाराजवीरवल्लालास्थानजुषां विदुषां प्रसादाशिषो हि मय्येताः प्रथन्ते । कास्ताः ? संस्कृतसार्वभौम प्राकृतपृथ्वीश्वर शौरसेनीशिरोमणे मागधीमकरध्वज पैशाचीपरमेश्वर अपभ्रंशराजहंस आलङ्कारिकचक्रवर्तिन् ध्वनिप्रस्थानपरमाचार्य सहजसर्वज्ञ परमयोगीश्वर शैववैष्णवयोगसांख्यप्रमुखसमस्तस्वात्मविद्यातत्त्वनित्यनिष्णात अश्रुताधिगतसमस्तविद्याकलाप अद्वैतविद्याविद्वेषिवनदावानल कलियुगस्कन्द अभिनवभट्टाचार्य वैदिकविद्याप्रतिष्ठापनपरमाचार्य काव्यमीमांसाप्रभाकर वादिमृगेन्द्रवेश्याभुजङ्ग इत्याद्याः । महाराजहोसलराजकुलद्वारि प्रशस्तिशिलाशासनप्रतिष्ठापनात् प्रभृति वयमुपशान्तरभसाः । अत्र तु ग्रन्थे काव्यमीमांसानिकषवतां ममोपयान्तु वत्सलाः सचेतसः । प्रकृतमनुसरामः । स चायं परिणामालङ्कारो द्विरूप इति व्युत्पादयति—तस्य सामानाधिकरण्येत्यादि ।

---

१. °मुपकृत°—अ० ।

व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥३२॥

अत्र सौमित्रिमैत्री प्रकृता आरोप्यमाणसमानाधिकरणातररूपत्वेन[1] परिणता। [2]आतरस्य मैत्रीरूपतया प्रकृते उपयोगात्। [3]तदत्र यथा समासोक्तावारोप्यमाणं प्रकृतोपयोगि तच्चारोप-[4]विषयात्मतया [5]तत्र स्थितम्, अत एव तत्र [6]तद्व्यवहारसमारोपः[7]। एवमिहापि ज्ञेयम्। केवलं तत्र विषयस्यैव प्रयोगः। विषयिणो गम्यमानत्वात्। इह तु द्वयोरप्यभिधानं तादात्म्यात्तु[8] तयोः परिणामित्वम्। द्वितीयो यथा—

इसके बाद विशाल स्तनों वाली शवर-युवतियों के द्वारा कौतुक से भरे नयनों से, कष्ट-पूर्वक (किसी प्रकार) अनुगत राम शीघ्र ही चित्रकूट पर्वत की ओर चल पड़े।३२॥

यहाँ प्रकृत है लक्ष्मण की मित्रता। वह अप्रकृत और समानविभक्तिक 'उतराई' के रूप में परिणत हो गई है। 'उतराई' का मैत्रीरूप में प्रकृत में उपयोग है। अस्तु, जिस प्रकार समासोक्ति में अप्रकृत प्रकृतोपयोगी होता है और वह आरोपविषय के रूप में वहाँ पाया जाता है और इसलिए उसमें उस (अप्रकृत) के व्यवहार का आरोप होता है, इसी प्रकार यहाँ भी समझना चाहिए। अन्तर केवल इतना है कि उस (समासोक्ति) में विषयी के गम्यमान होने से विषय का ही प्रयोग होता है पर यहाँ दोनों का ही शब्दतः उपादान होता है। पर उन दोनों में तादात्म्य होने के नाते परिणामिता मानी जाती है।

दूसरा जैसे (वैयधिकरण्य का उदाहरण)—

तीर्त्वेति। धुनी सरित्। आत्मना तृतीय इत्यनेन सीतासौमित्रिव्यतिरिक्तपरिजनविसर्जनं प्रत्याय्यते। आतरस्तरपण्यम्। अस्मै नाविकाय गुहाय। व्यामशब्देन तत्परिमाणमुच्यते। तदिह बाहुद्वयं लक्षयति। तद्ग्राह्यस्तनत्वेन तु कृच्छ्रानुयाने हेतुरुपन्यस्तः। अत्रातरस्य प्रकृतस्य न केवलं मैत्रीताद्रूप्यप्रतीतिमात्रं विवक्ष्यते अपितु नदीतरणप्रत्युपकरणात्मकम्।

प्रकृतोपयोगित्वमपि। अत्राप्रकृतस्य प्रकृतरूपापन्नस्य प्रकृतोपयोग इति प्रकृतस्य स्वरूपादप्रच्युतेः परिणामत्वम्। तदेतद् दर्शयितुमाह—अत्र सौमित्रमैत्रीत्यादि। समानाधिकरणग्रहणं प्रथमप्रकारत्वप्रथनाय। परिणामबीज-

---

१. °णान्तर°—नि०। २. आतुरस्य—नि०। ३. तत्—अ० नास्ति।
४. आरोप्य—अ०। ५. तत्र—अ० नास्ति। ६. तत्—अ० नास्ति।
७. न तु रूपसमारोपः—इत्यंशः अ०पुस्तकेऽधिकः। ८. तु—नि० नास्ति।

अथ पक्त्रिमतामुपेयिवद्भिः सरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरंगमाद्यैः ॥३३॥

[1]राजसंघटने [2]उपायनमुचितम्, तच्चात्र वचोरूपमिति [3]वचसां व्यधिकरणोपायनरूपत्वेन परिणामः ।

इसके बाद पहले मुख-मार्ग पर आश्रित प्रौढ़ वचनों से राजा को उपहार दिया और बाद में घोड़े आदि का । ३३ ॥

राजा से मिलन में उपहार देना उचित है । वह (उपहार) यहाँ वचन रूप है । भिन्नविभक्ति में आए वचनों का उपहार के रूप में परिणाम है ।

भूतमुपयोगित्वमुद्घाटयितुमाह—आतरस्य मैत्रीत्यादि । यत इत्थं सामानाधिकरण्यप्रयोगे परिणामालङ्कारस्य विषयव्यवस्था तस्मात् समासोक्तिसाधर्म्यमस्तीति व्युत्पादयिषुरुपक्रमते—तदत्र यथेत्यादिना ।

विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे हि समासोक्तिर्वक्ष्यते—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥

इति । उपोढरागत्वविलोलतारकत्वादिको नायकयोर्धर्मविशेषः । गृहीतं न न लक्षितमिति वाक्यानुप्रवेशान्तं विवक्षित इति प्रकृतोपयोगी स चारोपविषयभूतसन्ध्यारागनक्षत्रादिरूपेणैवास्ते । अनेन प्रकृतस्य स्वरूपादप्रच्युतिर्दर्शिता अतो व्यवहारान्तमारोपः, न तु रूपकन्यायेन रूपसमारोपमात्रम् । इयत्यंशे परिणामसमासोक्त्योः साधर्म्यमवगन्तव्यमित्याह—एवमिहापीति । तर्हि किमनयोर्मिथो वैलक्षण्यमित्यत आह—तादात्म्यात् त्विति । न खलु तादात्म्ये सति क्षीरं दधीति प्रयोगमात्रात् परिणामत्वहानिः । वैयधिकरण्येनोदाहरति—अथ पक्त्रिमतामिति । पाकेन निर्वृत्तिः पक्त्रिमता । प्रयोजनवल्लक्षणाप्राचुर्यम् । वक्त्रं पन्थाः तदाश्रितैः तदवलम्बिभिः । तत्परतः तदनन्तरम् । अत्र लक्षणायोजनायाह—अत्र राजसंघटन इत्यादि । उचितग्रहणेन प्रकृतित्वं द्योतितम् ।

आरोप्यमाणः प्रकृते यदासावुपयुज्यते ।
परिणामस्तदा तेन रूपकादस्य भिन्नता ॥

---

१. अत्र राज—अ० । शा१ पुस्तके भग्नः ।
२. °तूपा°—नि० । उपायनमुचितम्—इति
३. वचसाम्—अ० नास्ति ।

## विषयस्य संदिह्यमानत्वे संदेहः ॥सू० १७॥

अभेदप्राधान्ये आरोप इत्येव। विषयः प्रकृतोऽर्थः, यद्भित्तित्वेनाप्रकृतः[1] संदिह्यते। [2]अप्रकृतसंदेहे, [3]विषयोऽपि संदिह्यत एव। तेन प्रकृताप्रकृतगतत्वेन कविप्रतिभोत्थापिते संदेहे संदेहालंकारः। स च त्रिविधः। शुद्धो, निश्चयगर्भो निश्चयान्तश्च। शुद्धो [4]यत्र संशय एव पर्यवसानम्। यथा—

विषय की संदिह्यमानता में सन्देह होता है। सू० १७॥

'अभेद-प्रधान आरोप रहने पर' इसका अनुवर्तन है (इत्यव)। विषय अर्थात् प्रकृत अर्थ जिसकी भित्ति पर अप्रकृत का सन्देह होता है। अप्रकृत में सन्देह होने पर प्रकृत भी सन्देह का विषय बन ही जाता है। अतः प्रकृत और अप्रकृत में कविप्रतिभा से उत्पादित सन्देह रहने पर सन्देहालंकार होता है।

वह तीन प्रकार का है। शुद्ध, निश्चयगर्भ तथा निश्चयान्त। जहां संशय में ही विश्रान्ति हो वह शुद्ध है। जैसे—

रूपमात्रसमारोपाद् रूपके व्यञ्जको ह्यसौ।
व्यवहारसमारोपादिह स्यात् प्रकृतान्वयः॥
भवेदप्रस्तुतत्वेन रूपके प्रकृतस्थितिः।
परिणामसमासोक्त्योर्ज्ञातव्योऽस्माद् विपर्ययः॥
उपादानानुपादानकृतो भेदस्तयोर्मिथः।
"विषयस्य सन्दिह्यमानत्वे सन्देहः" ॥

सङ्गत्यर्थमधिकारमनुस्मारयति—अभेदप्राधान्य इत्यादि।

ननु विषयत्वेन निर्ज्ञाने कः सन्देह इत्यत आह—विषयः प्रकृत इत्यादि। निर्ज्ञातमेव मुखादि लक्षणम्। प्रकृतमर्थं भित्तीकृत्य चन्द्रादावप्रकृतेऽर्थे संदिह्यमाने सन्देहस्य द्विष्ठत्वात् प्रकृतोऽर्थोऽपि सन्देहदोलामधिरोहति। इत्थं प्रकृताप्रकृतगतत्वेन स सन्देहोऽलङ्कारः, य उत्थाप्यते प्रतिभयैव सन्देहः नतु स्थाणुपुरुषादाविव स्वरसवाही। तद्विशेषार्थमाह—स च त्रिविध इत्यादि।

---

[1] तोऽर्थः—अ०। [2] अप्रकृते—नि०।

[3] प्रकृतोऽपि—अ०शा०ना० पुस्तकेषु 'विषयोऽपि' इति स्थाने वर्तते।

[4] यस्य —नि०।

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा [1]वल्लरी
लीलाप्रोच्छलितस्य [2]किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥३४॥

निश्चयगर्भो [3]यः [4]संशयोपक्रमो निश्चयमध्यः संशयान्तश्च[5] । स यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं [6]साक्षात्प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति [7]पुरः
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥३५॥

क्या यह यौवनवृक्ष की रसभार के कारण खिली हुई नवीन लता है ? अथवा तट तक उछलते हुए सौन्दर्यसागर की लहरी है ? या प्रगाढ़ उत्कण्ठा वाले (पुरुषों) को अपने सिद्धान्तों की शिक्षा देने में तत्पर शृंगारी कामदेव की उपदेश-यष्टिका है ? ।३४॥

संशय से प्रारम्भ कर (जहाँ) बीच में निश्चय हो, अन्त में फिर संशय हो वह निश्चयगर्भ (सन्देहालंकार) है । इसका उदाहरण—

क्या यह सूर्य है ? वह तो सात घोड़ों पर चलता है । क्या यह साक्षात् अग्नि है ? पर यह दिशाओं में नियतरूप से व्याप्त नहीं है । क्या साक्षात् यमराज है ? पर उसका वाहन तो भैंस है । तुम्हें युद्धस्थल में सामने देख कर शत्रुओं के योद्धागण विभिन्न प्रकार की कल्पनाएँ करते हैं ॥ ३५ ॥

**किं तारुण्येति । उत्कलिका उत्कण्ठा । समयः सम्प्रदायः । उपदेश-यष्टिः रक्षानिर्देशदण्डः । शृङ्गारी देवो मन्मथः । अत्र निश्चयानुपादानात् सन्देहः शुद्धः । निश्चयगर्भं विविच्य दर्शयति—निश्चय इत्यादि । संशयान्त-कथानां मध्य निश्चयो निश्चयाभासोऽनुसन्धेयः ।**

**अयं मार्तण्ड इति । इतः प्राप्तः । सर्वा दिशो न प्रसरति ऊर्ध्वज्वलनैक-रूपत्वात् । तिरः तिर्यक् । अत्रासंख्यतुरगत्वादिना मार्तण्डत्वादिसन्देहा-पगम एव जायते न पुनर्नायकस्य शृङ्गग्राहिकया रूपं निर्ज्ञातिमिति निश्चया-**

---

1. मञ्जरी—अ० ना० शा० ।
2. प्रोच्चलितस्य—अ० ।
3. यः—शा० ना० पुस्तकयोर्नास्ति ।
4. सन्देहोपक्रमः—शा[1] ।
5. च—अ० नास्ति ।
6. सर्वाः—अ० ।
7. तिरः—शा०, चिरात्—नि० ।

निश्चयान्तो यत्र संशय उपक्रमो निश्चये पर्यवसानम् । यथा—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति[1] हरिणाक्षि निश्चितं परतः ॥३६॥

क्वचिदारोप्यमाणानां भिन्नाश्रयत्वे[2] दृश्यते । यथा—

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥३७॥

अत्रारोपविषये[3] तिमिरे रागादि तर्वादिभिन्नाश्रयत्वेनारोपितम् ।

जहाँ संशय से प्रारम्भ हो, निश्चय में विश्रान्ति हो वह निश्चयान्त (सन्देहालंकार) है । जैसे—

चन्द्र है क्या ? पर कलंक कहाँ है ? यह जलज है क्या ? पर जल कहाँ गया ? हरिणनयने ! तुम्हारी ललित और विलासभरी वाणी सुनकर बाद में मुख है यह निश्चय हुआ । ३६ ॥

कहीं आरोप्यमाण के भिन्न आश्रयों में रहने पर भी (संदेहालंकार) पाया जाता है । जैसे—

अन्धकार ने अनेक प्रकार के पेड़ों और पर्वतों को रंग दिया है क्या ? आकाश को नवा कर रोक दिया है क्या ? ऊबड़खावड़ जगहों में धरती को भर दिया है क्या ? और दिशाओं को मानो इकट्ठा कर दिया है ? ३७ ॥

यहाँ आरोपविषय अन्धकार पर वृक्षादिरूप भिन्न आश्रयों को रंग देने आदि का आरोप है ।

भासा एते । अतएव पुनः संशयोत्थानमिति निश्चयगर्भता । तृतीयं विवेचयति । निश्चयान्त इत्यादि ।

इन्दुः किमिति । परतो निश्चितमिति कथनाद् द्वितीयार्धान्ते इत्थं सन्दिह्योत्यध्याहार्यम् । क्वचित्पुनर्विषये संशयितव्येऽपि आरोप्यमाणानां विषयान्तरत्वमपि भवतीत्याह—क्वचिदित्यादि । रञ्जिता इति । रञ्जिता वर्णान्तरं नीताः । संहृताः संक्षिप्ताः ।

अथ भिन्नाश्रयतां दर्शयितुमाह—अत्रारोपेत्यादि । नन्वत्र सम्भावनापि

---

1. मिह—शा० । 2. भिन्नाश्रयत्वेन—नि० ।
3. विषयति°—नि० ।

केचित्त्वध्यवसायाश्रयेण[1] संदेहप्रकारमाहुः। अन्ये तु नुशब्दस्य संभावना-[2]द्योतकत्वं मत्त्वा उत्प्रेक्षाप्रकारमिममाचक्षते[3]।

**सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान् ॥सू० १८॥**

असम्यग्ज्ञानत्वसाधर्म्यात्संदेहानन्तरमस्य लक्षणम्। भ्रान्तिश्चित्त-धर्मो[4] विद्यते यस्मिन्भणितिप्रकारे स भ्रान्तिमान्। सादृश्यप्रयुक्ता च भ्रान्तिरस्य विषयः। यथा—

कुछ लोग अध्यवसाय के आधार पर (इसे) सन्देह का भेद मानते हैं। और दूसरे तो 'नु'—मानो—शब्द को सम्भावना का द्योतक मानकर इसे उत्प्रेक्षा का भेद मानते हैं।

सादृश्य से दूसरी वस्तु की प्रतीति भ्रान्तिमान् है। सू० १८॥

असम्यक् ज्ञान-रूप समान धर्म के आधार पर सन्देह के बाद इसका लक्षण दिया गया है। भ्रान्ति चित्त का धर्म है। वह जिस उक्तिप्रकार में विद्यमान हो वह भ्रान्तिमान् है। सादृश्य से होने वाली भ्रान्ति ही इस (अलंकार) का विषय है। जैसे—

प्रतीयत इति कथं सन्देहालङ्कार इत्यत आह—केचिदध्यवसायेत्यादि। अध्यव-साय उत्प्रेक्षणम्। उत्प्रेक्षाश्रयोऽयं सन्देह इति केचित्। उत्प्रैक्षैवेत्यन्ये। उभयत्र नुशब्दस्य सन्देहसम्भावनाद्योतकत्वमेव हेतुः। वस्तुतस्तु नेह सम्भावनाप्रतीतिः वितर्कस्यैककोटिपक्षपाताभावात्। अतो दोलायमाननानाकोटिकोऽयं सन्देह एवेति भावः।

सन्देहोऽप्रकृतद्वारा प्रकृतं संस्पृशेद् यदि।
प्रतिभोत्थापितः सोऽयं सन्देहालङ्कृतिर्मतः॥

अथ भ्रान्तिमते सूत्रम्—

"सादृश्याद् वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्"।

सादृश्यहेतुको विपर्ययो भ्रान्तिमानित्यर्थः। सङ्गत्यर्थमाह—असम्यग्ज्ञा-नेत्यादि। लक्ष्यपदं निर्वक्ति—भ्रान्तिश्चित्तेत्यादि। चित्तधर्मतामात्रस्या-लङ्कारता मा भूदित्याह—सादृश्यप्रयुक्तेत्यादि।

१. °सायात्मकत्वेनेमं—अ०। °सायाश्रयणेन—शा०। °श्रयत्वेन—नि०।
२. °द्योतकत्वसत्त्वादुत्प्रे°—नि०। ३. °मिदमा°—ना०।
४. धर्मः स विद्यते—नि०।

ओष्ठे बिम्बफलाशयालमलकेषूत्पाकजम्बूधिया
कर्णालंकृतिभाजि दाडिमफलभ्रान्त्या च शोणे मणौ।
[1]निष्पत्त्यासकृदुत्पलच्छददृशामात्तक्लमानां मरौ
राजन् गूर्जरराजपञ्जरशुकैः [2]सद्यस्तृषा मूर्च्छितम् ॥३८॥

गाढमर्मप्रहारादिना[3] तु भ्रान्तिर्नास्यालंकारस्य विषयः। यथा—

दामोदरकराघातचूर्णिताशेषवक्षसा।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥३९॥

सादृश्यहेतुकापि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव [4]गृह्यते। यथोदाहृतं[6] न स्वरसोत्थापिता शुक्तिकारजतवत्। एवं स्थाणुर्वा[5] स्यात्पुरुषो वा स्यादिति संशयेऽपि बोद्धव्यम्।

अयि राजन् ! मरुस्थल में भटकने से थकी हुई, नील कमलदल-जैसे नयनवाली रमणियों के अधर में बिम्बफल की आशा से, केशों को पके हुए जामुन समझने से, कर्णाभरण की लालमणि में अनार की भ्रान्ति से, गुर्जर देश के राजा के पिंजड़े में बैठे तोते, यह सब एकवारगी समझ जाने के बाद, तुरन्त प्यास से मूर्छित हो जाते हैं। ३८॥

किन्तु गाढ मर्मप्रहार आदि से होने वाली भ्रान्ति इस अलंकार का विषय नहीं है। जैसे—

दामोदर के हाथों से चोट पाकर जिसका सारा वक्षःस्थल चूर-चूर हो गया था उस चाणूर पहलवान ने आकाशतल में सैकड़ों चांद देखे।३९॥

सादृश्य से होने वाली भ्रान्ति भी (अलंकार के) सौन्दर्य के लिए वही मानी जाती है जो कवि-प्रतिभा द्वारा निष्पादित हो जिसका निदर्शन दिया जा चुका है, उसे शुक्तिका में रजत की भाँति स्वरसतः (या वस्तुस्वभाव से) उत्पन्न नहीं होना चाहिए। 'ठूँठ हो सकता है अथवा पुरुष' इस संशय के बारे में भी यही समझना चाहिए।

**ओष्ठे बिम्बेति। शोणो मणिर्माणिक्यम्। निष्पत्य आलीय। सादृश्यादिति यदुक्तं तत्र प्रत्युदाजिहीर्षुराह—गाढमर्मेत्यादि।**

**दामोदरेति। वक्षोरूपमर्मचूर्णनं नभसः शतचन्द्रत्वेन दर्शने हेतुः। सादृश्यहेतुकापि लोकविलक्षणैव भ्रान्तिरलङ्कारबीजमित्याह—सादृश्यहेतुकापी-**

१. व्युत्पत्त्या—शा०। निष्पत्त्या सकृदु—नि०। २. सत्यम्—ना०।
३. दिक्कता तु—अ०। ४. गृह्यते—शा० ना० पुस्तकयोर्नास्ति।
५. °हृता—अ०। ६. स्थाणुर्वा पुरुषो वेति सं—अ० शा०।

**एकस्यापि निमित्तवशादनेकधा [1]ग्रहणमुल्लेखः ।।सू० १९।।**

**यत्रैकं वस्त्वनेकधा गृह्यते [2]स रूपबाहुल्योल्लेखनादुल्लेखः । न [3]चेदं निर्निमित्तमुल्लेखमात्रमपितु[4] नानाविधधर्मयोगित्वाख्यनिमित्तवशादेतत्क्रियते । तत्र रुच्यर्थित्वव्युत्पत्तयो यथायोगं[5] प्रयोजिकाः । तदुक्तम्—**

एक को भी, किसी निमित्त से अनेक प्रकार से समझना उल्लेख है ॥ सू० १९ ॥

जहाँ एक वस्तु का अनेक प्रकार से ग्रहण होता है, रूपों की बहुलता का उल्लेख न होने के कारण, वह उल्लेख है । यह निष्प्रयोजन और उल्लेखमात्र ही नहीं होता अपितु अनेक प्रकार के धर्मों से सम्बन्धित होने के कारण इसका विधान होता है । इन सबके (तत्र) रुचि, अर्थिता तथा व्युत्पत्ति, जिसका जहाँ सम्बन्ध हो, कारण बनते हैं । यह कहा है—

त्यादि । विच्छित्तिरलौकिकी शोभा । शुक्तिकारजतवत् शुक्तिकारजते यथेत्यर्थः । अलौकिकत्वनयोऽयं सन्देहेऽपि समान इति व्युत्पादयति—एवं स्थाणुरित्यादि ।

सादृश्योत्थापिता भ्रान्तिर्यत्र स भ्रान्तिमान् मतः ।

अथोल्लेखालङ्काराय सूत्रम्—

"एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेखः" ॥

एकस्यापि वस्तुनो नानाविधधर्मयोगलक्षणनिमित्तवशादनेकधा ग्रहे सत्युल्लेखालङ्कारः । तच्चानेकधात्वं ग्रहीतृभेदाद् भवति । तदेतद् व्याचष्टे—यत्रैकं वस्त्वित्यादि । यत्र उक्तिप्रकारे । गृह्यते ज्ञायते । उल्लेखनं निर्धारणम् । नानाविधधर्माभावे त्वनेकधाग्रहणमात्रेण नोल्लेख इत्याह—न चेदमित्यादि । एतत् क्रियते उल्लेखनं निष्पाद्यते इत्यर्थः । ननु नानाविधधर्मयोगमात्रान्नानेकधा ग्रहणमनुपश्याम् इत्यत आह—तत्र च रुच्यर्थित्वेत्यादि । रुचिरभिरतिः । अर्थित्वं लिप्सा । व्युत्पत्तिः शब्दार्थसङ्केतज्ञानम् । यथायोगमिति । क्रियायोगो योग्यता तमनतिक्रम्य । रुच्यादिषु त्रिषु यथायोगमेकं द्वयं त्रयमेव वा प्रयोजकं भवतीति यावत् । तत्र संवादायाह—यदुक्तमिति ।

---

1. ग्रहण उ—अ० ।
2. स—-ना० नास्ति ।
3. चानिमित्तमुल्लेख°—अ० ।
4. °खनमा°—शा० ना० शा१ ।
5. यथासंभवं—अ० ।

यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसंधानसाधिते[1] ॥४०॥

[2]यथा—'[3]यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, संगीतशालेति लासकैः' इत्यादि[4]हर्षचरिते श्रीकण्ठाख्यजनपदवर्णने । अत्र ह्येक एव [5]श्रीकण्ठाख्यो जनपदस्तत्तद्गुणयोगात्तपोवनाद्यनेकरूपतया निरूपितः । रुच्यर्थित्वव्युत्पत्तयश्च[6] प्रायशः [7] समस्तव्यस्ता योजयितुं शक्यन्ते । नन्वेतन्मध्ये 'वज्रपञ्जरमिति शरणागतैरसुरविवरमिति [8]वातिकैः' इत्यादौ [9]रूपकालंकारयोग इति कथमयमुल्लेखालंकारविषयः ।

रुचि के अनुसार, अभिलाषा के अनुसार और व्युत्पत्ति के अनुसार, बार-बार एकाग्रता से ध्यान की हुई एक ही वस्तु का ज्ञान भिन्न बन जाता है ।४०॥

जैसे—'जिसे मुनियों ने तपोवन, वेश्याओं ने काममन्दिर, नृत्यशिक्षकों ने संगीतशाला.......' हर्षचरित के इस श्रीकण्ठ जनपद के वर्णन में । यहाँ श्रीकण्ठ नामक जनपद एक ही है पर विभिन्न गुणों से युक्त होने के कारण उसका तपोवन आदि अनेक रूपों में वर्णन है । रुचि, अभिलाषा और व्युत्पत्ति प्रायः एक साथ और अलग-अलग आ सकती हैं ।

प्रश्न यह उठता है (ननु) कि इसी वर्णन में (एतन्मध्ये) 'शरण में आए लोगों ने वज्र का पिंजड़ा तथा खजाना खोजने वालों ने खान (समझा)......' इत्यादि में रूपक अलंकार का सम्बन्ध है फिर यह उल्लेखालंकार का विषय

यथारुचीत्यादि । रुच्यर्थित्वव्युत्पत्त्यनुसारेणैकस्मिन्नप्यनुसन्धानेन साधिते निर्धारितेऽर्थे आभासः प्रतीतिर्भिद्यते, नानोल्लेखात्मिका जायत इत्यर्थः । यतस्तपोवनमिति एक एव श्रीकण्ठजनपदो मुन्यादिभिः(नानात्वेनोल्लिख्यतेतत्र)तपोवनत्वादिनानाविधधर्मयोगो निमित्तम् । जनपदे हि तपोवनत्वादयो धर्मा निसर्गत एव सन्ति । इतरथा नोल्लेखः । रूपकत्वप्राप्तेः । लक्षणं योजयति—अत्र ह्येक एवेत्यादि । समस्तव्यस्ता इति मुन्यादीनां तपोवनत्वादिनोल्लेखे तथाविधा रुच्यादयो हि समस्ततया व्यस्ततया वा सम्भवन्ति । विषयपरिशुद्धयै चोदयति—नन्वेतन्मध्य

---

१. साधितः—अ० । २. उदाहरणम्—अ० ।
३. यस्तपोवनमिति मुनिभिः—इयानंशो ना० पुस्तके नास्ति ।
४. हर्षचरिते–अ० शा० पुस्तकयोर्नास्ति । ५. श्रीकण्ठजनपदः—अ० ।
६. श्चात्र—अ० । ७. समस्ता व्यस्ता वा–अ० ।
८. वादिकैः—अ० । ९. रूपकानुप्रवेशादलंकारयोग—अ० ।

सत्यम्। अस्ति तावत् 'तपोवनम्' इत्यादौ रूपकविविक्तोऽस्य विषयः। [१]यत्र वस्तुतस्तद्रूपतायाः संभवः। यत्र तु रूपकं [२]व्यवस्थितं तत्र चेदियमपि भङ्गिः [३]संभाविनी तत्संकरोऽस्तु। न [४]त्वेतावतास्याभावः शक्यते वक्तुम्। ततश्च न दोषः कश्चित्। एवं [५]हि तत्र [६]विषये भ्रान्तिमदलंकारोऽस्तु। अतद्रूपस्य [७]तद्रूपताप्रतीतिनिबन्धनत्वात्। नैतत्।

क्योंकर है ? (उत्तर) ठीक है। पर 'तपोवन......' आदि में तो रूपक से पृथक् इसका क्षेत्र विद्यमान है जहाँ वस्तुतः इसका स्वरूप पाया जा सकता है। और जहाँ रूपक का अवस्थान है वहाँ यदि यह (उल्लेख का) सौन्दर्य भी सम्भव है तो (रूपक तथा उल्लेख का) संकर हो जाए पर इतने से इस (उल्लेखालंकार) का अभाव नहीं माना जा सकता। और इस प्रकार किसी प्रकार का दोष नहीं रह जाता।

तो फिर ऐसे स्थल में भ्रांतिमान् अलंकार मान लो क्योंकि जो 'अतद्रूप' है—तपोवन नहीं है—उसकी 'तद्रूप' (तपोवनरूप) में प्रतीति होती है। यह (ठीक) नहीं है क्योंकि (भ्रान्तिमान् में) अनेकधा ग्रहणरूप एक नवीन विशे-

इत्यादि। वज्रपञ्जरत्वादेर्हि तपोवनत्वादिवत् न जनपदधर्मत्वमिति रूपकत्वमेव परिहरति—सत्यमस्ति तावदित्यादि। न तावदस्य रूपकविविक्तविषयता नास्ति। यत्र त्वंशे रूपकं तत्र यद्युल्लेखात्मिका विच्छित्तिर्न सम्भवति तदा नास्त्येव विवादः। अथ सम्भवति तदा सङ्कर एव न्यायः। न पुनरस्य स्वरूपत एवापलापः शक्यः। भ्रान्तिमतो विविक्तविषयतामस्य दर्शयितुमाक्षिपति—एवं तर्हीत्यादि।

तत्रेति। यो रूपकविविक्तस्तत्र विषय इत्यर्थः। भ्रान्तिमत्त्वशङ्काया बीजमुद्घाटयति—अतद्रूपस्य तद्रूपतेति। यद्यपि जनपदे तपोवनत्वादयः सन्त्येव धर्माः, वस्तुतस्तु न तद्रूपो जनपदः। तस्मादतद्रूपस्य तद्रूपताप्रतीतिनिबन्धनेन भ्रान्तिमानस्त्विति यावत्। परिहरति—नैतत्। अनेकधेत्यादि। न ह्यनेकधाग्रहणरूपं

१. यदत्र—नि०। २. स्थितं—अ०।
३. सम्भविनी—अ०।
४. तु—अ० पुस्तके नास्ति। ५. तर्हि—अ० ('हि'—इतिस्थाने)
६. विषये...ऽस्तु—इयानंशः शा१ पुस्तके भग्नः।
७ तद्रूपतया—शा० ना०।

अनेकधाग्रहणाख्यस्यापूर्वस्यातिशयस्याभावात्,[1] [2]तद्धेतुकत्वाच्चास्यालंकारस्य। संकरप्रतीतिस्त्वङ्गीकृतैव। यद्येवम्, अभेदे भेद इत्येवंरूपातिशयोक्तिरत्रास्तु। नैष दोषः। ग्रहीतृभेदाख्येन विषयविभागेनानेकधात्वोट्टङ्कनात्तस्य च विच्छित्त्यन्तररूपत्वात्सर्वथा नास्यान्तर्भावः शक्यक्रिय इति निश्चयः। यथा वा—

णाराअणो त्ति परिणअवआहिं[3] सिरिवल्लहो त्ति तरुणीहिं।
बालाहिं उण [4]कोदूहलेण [5]एमे अ सच्चविओ ॥४१॥

षता नहीं है और इस (उल्लेखालंकार) का वही हेतु है। (भ्रान्तिमान् और उल्लेख की) संकरप्रतीति तो स्वीकार्य ही है।

(प्रश्न) यदि ऐसा है (अर्थात् संकर मानते हैं) तो अभेद होने पर भेद—'अभेदे भेदः'—इस अतिशयोक्ति को यहाँ मान लो। (उत्तर) यह दोष नहीं है (अर्थात् इससे कोई दोष नहीं पैदा होता)।

निष्कर्ष यह है कि भिन्न प्रमाताओं द्वारा ग्रहीत होना, इस विषय-विभाग से, अनेक प्रकार से उल्लेखन होने के कारण और चूँकि इसमें चमत्कार भिन्न होता है अतः इस (अलंकार) का अंतर्भाव किसी भी प्रकार नहीं किया जा सकता है। अथवा जैसे—

वृद्धाओं ने नारायण, युवतियों ने लक्ष्मीपति, और बालिकाओं ने उत्सुकता से इसी प्रकार का कुछ समझा।४१॥

वैचित्र्यं भ्रान्तिमति लक्षणम्। इह तु लक्षणमेव। अतो न भ्रान्तिमात्रमिति यावत्। नन्विह भ्रान्तिमानपि स्वलक्षणोपपन्न इत्यत आह—सङ्करप्रवृत्तिस्त्विति। अतिशयोक्तिविशेषतोऽप्यस्य विविक्तविषयतायै शङ्कते—यद्येवमभेदे भेद इत्यादि। वस्तुतो हि तपोवनाद्यवयवापेक्षया न जनपदस्यावयविनो भेदोऽस्ति। इत्थं च सत्यभेदे भेद इत्येवंरूपातिशयोक्तिरत्रास्तु किमन्यकल्पनेनेत्याक्षेपनिष्कर्षः। परिहरति—नैष दोषः। ग्रहीतृभेद इत्यादि। न ह्यतिशयोक्तौ ग्रहीतृभेदोपयोगः। अत्र पुनरुपयोग इति नातिशयोक्तिमात्रमेतत्। न च ग्रहीतृभेदस्याप्रयोजकत्वं शङ्क्यमित्याह—तस्य चेत्यादि। यत इत्थम् अतः सर्वथा नास्यान्तर्भावः शक्यक्रियः। रूपकासङ्कीर्णतयाप्युदाहरति—नाराअणों-

१. ०ग्रहणारव्यस्यातिशयस्यापूर्वस्याभावात्—अ०।
०ग्रहणाख्यपूर्वस्यातिशयस्य भावात्—शा० ना०।
२. तद्धेतुकाच्च—शा० ना०।
३. वहूहिम्—अ०
४. कोऊहलेण—अ०।
५. एअमेअ—अ०।

[ नारायण इति परिणतवयोभिः श्रीवल्लभ इति तरुणीभिः ।
बालाभिः पुनः कौतूहलेन एवमेव सत्यापितः ॥ ]

एवम् [1]"पृथुरुरसि [2]अर्जुनो यशसि' इत्यादाववसेयम् । इयांस्तु विशेषः—पूर्वत्र ग्रहीतृभेदेनानेकधात्वोल्लेखः, इह तु विषयभेदेन । नन्वनेकधात्वोल्लेखने[4] गुर्वादिरूपतया श्लेष इति कथमलंकारान्तरमत्र स्थाप्यते । सत्यम् । अनेकधात्वनिमित्तं तु विच्छित्त्यन्तरमत्र दृश्यते इति

इसी प्रकार "वाणी में 'गुरु' (गम्भीर तथा बृहस्पति) कीर्ति में 'अर्जुन' (धवल तथा पाण्डव-अर्जुन)........" इसमें भी समझ लेना चाहिए । इतना भेद अवश्य है कि पहले प्रमाता के भेद के आधार पर अनेकधा उल्लेख हुआ था और इस जगह विषय (वाणी तथा यश) के भेद के आधार पर । पर प्रश्न यह है (ननु) कि अनेकधा उल्लेख करने में गुरु आदि के रूप में श्लेष है फिर इसमें दूसरा अलंकार कैसे माना जा सकता है ? (यह तो) ठीक है। अनेकरूपता के आधार पर यहाँ एक दूसरी विच्छिति भी है ।

तीति । नारायण इति परिणतवयोभिः, श्रीवल्लभ इति तरुणीभिः, बालाभिर्पुनः कौतुकेन एवमेव दृष्टः । अत्र पुरप्रवेशावसरे एक एव कृष्णो जरतीभिः साक्षान्मोक्षप्रदोऽयमादिनारायण इति दृष्टः । तासां रुच्यादेस्तथाविधत्वात् । तरुणीभिः पुनर्लक्ष्म्याः प्राणवल्लभ इति । बालाभिःपुनः कौतुकेनैवमेव दृष्टः । एवमेवेति निपातो यत्किञ्चिदित्यर्थे विवक्षितः । न चात्र शङ्कनीयं कौतुकेनेति प्रयोजकान्तरोपादान्नेह रुच्यादयः प्रयोजका इति । कौतुकस्यापि रुच्यादिकमन्तरेणासम्भवात् । एवं ग्रहीतृभेदादुदाहृत्य विषयभेदादुदाहरति—एवं गुरुर्वचसीत्यादि । वचसि विषयभूते गुरुः प्रामाणिकत्वादनुल्लङ्घ्यः, वाचस्पतिश्च । तथोरसि पृथुः प्रथीयान्, पृथुनामा नृपश्च । यशस्यर्जुनोऽवदातः, धनञ्जयश्च । इत्यादौ ह्येक एव नायको वचःप्रमुखविषयभेदाद् ग्रहीतृभेदनैरपेक्ष्येण रुच्यादिवशादनेकधा गृह्यत इत्युल्लेखालङ्कारत्वम् । प्रकारद्वयस्यावान्तरवैधर्म्यायाह—इयांस्त्वित्यादि । अत्रोल्लेखाभावमाशङ्कते नन्वित्यादि । श्लेषस्य सर्वालङ्कारबाधकत्वं हि वक्ष्यते । अतो लक्षणोपपन्नमलङ्कारान्तरं सति श्लेषे न स्यादिति । नात्रोल्लेखो युक्त इत्याक्षेपः । परिहरति सत्यमित्यादि । सत्यमुक्तनयेन

१. गुरुर्वचसि—नि० नास्ति । २. विशालो मनसि अर्जुनो०—अ० ।
३. नन्वयं श्लेषालङ्कारविषय इति—अ० । ननु श्लेष इति--शा० ।
४. ०त्वोल्लेखे—अ० ।

तत्प्रतिभोत्पत्तिहेतुः [1]श्लेषोऽत्र स्यात्। न तु सर्वथा तदभावः। अतश्चालंकारान्तरम्। [3]यदेवंविधे विषये श्लेषाभावेऽपि [4]विच्छित्तिसद्भावः, तस्मादेवमादावुल्लेख एव श्रेयान्। [5]एवमलंकारान्तरविच्छित्त्याश्रयेणाप्यलंकारो[6] निदर्शनीयः।

श्लेष इसो (उल्लेख) के प्रतिभान का उत्पादक कारण है अतः यहाँ श्लेष हो सकेगा पर इस (उल्लेखालंकार) का तो सर्वथा अभाव न होगा। इसीलिए यह एक भिन्न अलंकार है। चूँकि इस प्रकार के स्थल में श्लेष न रहने पर भी चमत्कार सम्भव है अतः इस प्रकार के उदाहरणों में उल्लेख मानना अधिक अच्छा है। इस प्रकार (श्लेष की ही भाँति) दूसरे अलंकारों के चमत्कार का आश्रय लेकर भी इस अलंकार का उदाहरण दिया जा सकता है।

श्लेषेणोल्लेखो बाध्यते अथापि स्वरूपेणाविद्यमानस्य बाधासम्भवाद् बाध एवोल्लेखसद्भावे लिङ्गम्। अनेकधाग्रहणरूपविच्छित्तिविशेषबलात् प्रतिभात्येवोल्लेख इति यावत्। यत इत्थमतो न तु सर्वथा तदभाव इत्यलङ्कारान्तरमेव। एतदेव साधयितुमत्रैवोदाहरणे श्लेषनैरपेक्ष्यं दर्शयति—यदेवंविध इत्यादि। अत्र ह्यनुल्लङ्घ्यो वचसि प्रथीयानुरसि निर्मलो यशसि इति श्लेषापोहेऽपि नोल्लेखापोहः। यस्मादित्थं तस्मादेवमादौ विषये उल्लेखालंकार एव विशेषविच्छित्तिक इत्यलंकारान्तरापेक्षया श्रेयान्, प्रशस्यतर इत्यर्थः। इत्थं रूपकातिशयोक्तिश्लेषादिविच्छित्त्याश्रयत्वन्यायेनालङ्कारान्तरविच्छित्त्याश्रयेणाप्ययं सम्भवति। स तु स्वयमनुसन्धेयः। न्यायस्य व्युत्पादितत्वादित्यभिप्रायेणाह—एवमलङ्कारान्तरेत्यादि। दर्शनीयः उदाहरणीयः। क्वचित् कारकान्तरेति पाठः।

नानाधर्मबलादेकं यदि नानैव गृह्यते।
नानारूपसमुल्लेखात् स उल्लेख इति स्मृतः॥
यदेकं तद्धि नानेति गृह्यते रूपभेदतः।
रुच्यादिवशतो लोके नानात्वं चेदकृत्रिमम्॥

---

१. श्लेषोऽप्यत्र—अ०। २. °कारान्तरे—ना०।

३. यदेवंविधविषयश्लेषा—शा०।

४. विच्छित्त्यन्तरसम्भवः। यथा 'युधिष्ठिरः सत्यवचसि' इत्यादि। तस्मादेवमादौ—अ०। ५. एवं कारकान्तर—अ०।

६. °श्रयणेनायमलङ्कारो—अ०। °श्रयेणाप्ययमलङ्कारो—नि०।

**विषयस्यापह्नवेऽपह्नुतिः ॥सू० २०॥**

**वस्त्वन्तरप्रतीतिरित्येव । [2]प्रकान्तानपह्नववैधर्म्येणेदमुच्यते । आरोपप्रस्तावादारोपविषयापह्नुतावारोप्यमाणप्रतीतावपह्नुत्याख्योऽलंकारः । तस्य च त्रयी बन्धच्छाया—अपह्नवपूर्वक आरोपः, आरोपपूर्वकोऽपह्नवः, [3] छलादिशब्दैरसत्यत्वप्रतिपादकैर्वापह्नवनिर्देशः । [4]तस्य पूर्वोक्त[5]-भेदद्वये वाक्यभेदः । तृतीयभेदे [6]त्वेकवाक्यत्वम् । आद्यो यथा—**

विषय (उपमेय) का अपह्नव होने पर अपह्नुति होती है । सू० २० ॥

विषय का अपह्नव होने पर दूसरी वस्तु की प्रतीति होना इतना स्वरूप है । प्रकरण अपह्नव न होने का है उससे वैधर्म्य (भिन्नधर्मता) के आधार पर इस अलंकार का निरूपण किया जा रहा है । 'आरोप' का प्रकरण है अतः आरोप-विषय के अपह्नव (प्रतिषेध) और आरोप्यमाण की प्रतीति में अपह्नुति नामक अलंकार होता है ।

इसकी अभिव्यक्ति-प्रणाली तीन प्रकार की होती है—(१) अपह्नव करके आरोप (२) आरोप करके अपह्नव और (३) प्रतिषेध (असत्यत्व) का भाव सूचित करने वाले छल आदि शब्दों से अपह्नव का विधान । इसके इन प्रथम

**अतद्रूपस्य ताद्रूप्यान्न ह्यसौ भ्रान्तिरिष्यते ।**
**न चाप्यतिशयोक्तिः स्यादभेदे भेदरूपिणी ॥**
**आद्य नानेकधात्वं स्याज् ज्ञातृभेदो न चान्तिमे ।**
**विषयज्ञातृभेदाभ्यां विना नोल्लेखसम्भवः ॥**
**यद्यपि श्लेषतो बाधो न तथाप्यस्य निह्नवः ।**
**अनपेक्ष्यापि यच्छ्लेषं तत्रैव स्थातुमर्हति ॥**

**अथापह्नुत्यै सूत्रम्—"विषयापह्नवेऽपह्नुतिः" ॥**

**ननु मुखं न भवतीति वियापह्नवमात्रे सत्यपि नापह्नुतिरित्यतोऽधिकारं स्मारयति—वस्त्वन्तरप्रतीतिरित्येवेति । अतः प्रकृतनिषेधपुरस्कारेणाप्रकृत-समर्थनमपह्नुतिरित्यर्थः । तथा च काव्यप्रकाशकृत्—**

**"प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः" । इति**

**ननु यदि सादृश्याद् वस्त्वन्तरप्रतीतिरिहापि को विशेषः तर्ह्यस्य भ्रान्ति-**

---

[1] विषयापह्नवे—अ० शा० । [2] प्रक्रान्तापह्नव°—नि० ।
[3] °पूर्वको वापह्नवः—शा१ । [4] तस्य—वि० पाठानुसारम् ।
[5] पूर्वकभेद०—अ० । [6] त्वेकवाक्यम्—नि० ।

[1]यदेतच्चन्द्रोन्तर्जलदलवलीलां [2]प्रकुरुते
तदाचष्टे लोकः शशक इति नो[3] मां प्रति तथा ।
अहं त्विन्दुं मन्ये [4]त्वदरिविरहक्लान्ततरुणी-
[5]कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥४२॥

[6]अत्रैन्दवस्य [7]शशकस्यापह्नवे उपक्षिप्ते शशकप्रतिवस्तुकिणवत इन्दोरारोपो नान्वयघटनां पुष्यतीति न निरवद्यम् । तत्तु यथा—

दो भेदों में वाक्य भिन्न होते हैं पर तीसरे भेद में एकवाक्य का स्वरूप मिलता है। प्रथम का उदाहरण—

चन्द्रमा के भीतर यह जो मेघखण्ड की क्रीड़ा कर रहा है उसे दुनिया खरगोश कहती है, मुझे तो वैसा नहीं मालूम होता। मैं तो समझता हूँ कि (राजन् ! ) तुम्हारे शत्रुओं की वियोग से क्षुब्ध युवतियों के कटाक्ष के उल्कापात से उत्पन्न घाव से चन्द्रमा का शरीर दागी हो गया है। ४२॥

यहाँ खरगोश का अपह्नव कर, खरगोश के ही समान दूसरी वस्तु, घाव से दागी चंद्रमा का आरोप क्रम का सुन्दर निर्वाह नहीं कर पाता अतः यह (उदाहरण) निर्दोष नहीं है। वह (निर्दोष उदाहरण) तो इस प्रकार होगा—

मत इत्याह—प्रक्रान्तानपह्नवेत्यादि। प्रक्रान्तं प्रकृतं, तस्य ह्यत्रापह्नवः। भ्रान्तिमत्यनपह्नव इति विशेषः। उल्लेखे तु न प्रकृतापह्नवमात्रं विशेषः किन्त्वनेकधा ग्रहणमपि ज्ञेयम्। इदमिति वचनक्रियाविशेषणम्। यत्त्वेवमिदमपह्नुतिवचनं तत् प्रक्रान्तानपह्नववैधर्म्येणेत्यर्थः। लक्षणं निष्कष्टुमाह—आरोपप्रस्तावादित्यादि। आरोपप्रस्तावो रूपकात् प्रभृति, तत्प्रकारवैचित्र्यायाह—तस्य त्रयीत्यादि। त्रयी त्रिप्रकारेत्यर्थः। बन्धच्छाया ग्रथनवैचित्र्यम्। त्रैविध्यं विविनक्ति—अपह्नवपूर्वक इत्यादि। छलादयः छलछद्मकैतवनिभादयः। तैरपि हि नञर्थ एवावस्थाप्यते। तर्हि तृतीयभेदे को विच्छित्तिविशेष इत्यत आह—पूर्वक इत्यादि। यदेतदिति। नो मां प्रति तथेति प्रकृतापह्नवः। उत्तरार्धं तु अप्रकृतसाधनमिति। यद्यप्यपह्नुतिरेषा तथापि दोषानुविद्धत्वादुदाहरणाभास इत्याह—अत्रैन्दवस्येत्यादि। शशकप्रतिवस्त्विवति। अपह्नोतु-

१. चन्द्रेऽन्तर्ज°—ना०। २. वितनुते—अ०।
३. न तन्माम्—अ० ना०। ४. विरहाक्रान्त°—नि०।
५. पाते त्वणकिण—ना०। ६. अत्र त्वैन्दवस्य—अ० ना०।
७. शशस्या—अ० नि० ना०।

पूर्णेन्दोः [1]परिपोषकान्तवपुषः [2]स्फारप्रभाभास्वरं
नेदं मण्डलमभ्युदेति गगनाभोगे जिगीषोर्जगत् ।
मारस्योच्छ्रितमातपत्रमधुना पाण्डु प्रदोषश्रिया
मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिनः ॥४३॥

द्वितीयो यथा—

[3]विलसदमरनारीनेत्रनीलाब्जषण्डा[4]-
न्यधिवसति सदा यः संयमाधःकृतानि ।
न तु [5]रुचिरकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥४४॥

तृतीयो यथा—

आकाश-प्रदेश में फैली हुई प्रभा से चमकने वाला यह परिवेश कलाओं के परिपोष से सुन्दरमूर्ति पूर्णचंद्र का नहीं है अपितु जगत् को जीतने के लिए उत्सुक कामदेव का, जो मान से चूर लोगों का अभिमान मिटाने में बड़े चाव से लगा रहता है, सांझ की प्रभा से हल्के पीले रंग का तना हुआ छाता है। ४३ ॥

दूसरा (आरोप करके अपह्नव) जैसे—

संयम से झुके हुए, विलासवती सुरस्त्रियों के नयनरूपी नील कमलदलों पर जो सदा वास करता है, सुन्दर पंखों वाले मयूर पर नहीं, वह कुमार (कार्तिकेय) तुम लोगों को ब्रह्मचर्य की श्री प्रदान करे। ४४ ॥

तीसरा (छलादि शब्द से अपह्नव का निर्देश) जैसे—

मिष्टस्य शशकस्य यः प्रतिवस्तुभूत उल्कापातकिणः तस्यैवारोपो न्याय्यः, न पुनस्तद्वत इन्दोः, अतो नान्वयः संघटते। इत्थं लक्षणोपपन्नोऽप्यलङ्कारो दोषानुविद्धः सन्नाभासीभवतीति व्युत्पाद्य सम्यगुदाजिहीर्षुराह—तत्तु यथेति ।

पूर्णेन्दोरिति—दृष्टश्रुताद्यपराधजन्मा रोषो मानः। तेनोन्नद्ध उत्सिक्तो जनः शृङ्गारी लोकः, तस्याभिमानः सान्त्वासहिष्णुता। हेवाकः स्वाच्छन्द्यम् । अत्र न मण्डलमपितु आतपत्रमित्यन्वयो घटते। अयमपह्नवपूर्वक आरोपः। आरोपपूर्वकमुदाहरति—विकसदमरेति। संयमो मनोनिग्रहः, तेनाधःकृतानि आक्रान्तानि। अत्र नेत्रषण्डान्यध्यास्ते न तु मयूरे वर्तत इत्यारोपपूर्वकता ।

---

1. अतिपोष—अ०। 2. भासुरम्—अ०। 3. विकसदमर°—अ०।
4. खण्डा—नि०। 5. ललित—अ० ना० शा०।

उद्भ्रान्तोज्झित गेहगूर्जरवधूकम्पाकुलोच्चैः कुच-
प्रेङ्खोलामलहारवल्लिविगलन्मुक्ताफलच्छद्मना ।
सार्धं त्वद्रिपुभिस्त्वदीययशसां शून्ये मरौ धावतां[2]
[3]भ्रष्टं राजमृगाङ्ककुन्दमुकुलस्थूलैः श्रमाम्भःकणैः ॥४५॥

अत्र 'शून्य' इत्यस्य स्थाने मन्येशब्दप्रयोगे सापह्नवोत्प्रेक्षा[4] स्थापयिष्यते[5]। 'अहं त्विन्दुं 'मन्ये' इति तु वाक्यभेदे[7] मन्येशब्दप्रयोगे[8] नोत्प्रेक्षेत्यपि[9] वक्ष्यते।

अयि नृपचंद्र ! भयभीत होकर घर से भागने वाली गुजरात की वधुओं के काँपते उन्नत पयोधरों पर हिलने वाले धवल हारों से गिरने वाले मोतियों के बहाने, शून्य मरुस्थल में तुम्हारे शत्रुओं के साथ दौड़ने वाली तुम्हारी कीर्ति के कुन्दकली के समान मोटे-मोटे श्रमजल चू रहे थे। ४५ ॥

इस श्लोक में (अत्र) 'शून्ये' के स्थान में 'मुझे लगता है' (मन्ये) शब्द का प्रयोग करने से अपह्नुति-गर्भित उत्प्रेक्षा की स्थापना करेंगे। 'मैं तो चन्द्र को ···· समझता हूँ' (श्लोक ४२) इसमें तो वाक्य भिन्न होने से 'समझता हूँ' (मन्ये) शब्द का प्रयोग करने पर भी उत्प्रेक्षा न होगी यह भी बताया जाएगा।

उद्भ्रान्तेति। सार्धं धावतामित्यनेन यशसस्तत्प्रदेशव्याप्तिः समकालमेव सूचिता। मुक्ताफलच्छद्मना अम्भःकणैर्भ्रष्टमित्यत्र हि न मुक्ताफलानि अपितु अम्भःकणा एवेति प्रतीतिः। इमामेवापह्नुतिमुत्प्रेक्षाङ्गत्वेन प्रतिपिपादयिषुरुपक्षिपति—अत्र शून्य इत्यस्येत्यादि। मन्ये मरावित्यादिपाठे हि मन्ये-शब्दमाहात्म्यादुत्प्रेक्षा, छलशब्दतस्त्वपह्नुतिः, सा चोत्प्रेक्षाङ्गमिति भविष्यति। इत्थमुत्प्रेक्षाङ्गत्वं न केवलं तृतीयभेदस्यैव यावता पूर्वकभेदद्वयस्यापि सम्भवतीत्याह—अहं त्विन्दुमित्यादि। वाक्यभेदग्रहणं प्राथमिकभेदद्वयप्रथनाय। इत्थं त्रिरूपाप्यपह्नुतिरुत्प्रेक्षाङ्गत्वेन सूचिता। ननु छलादिप्रयोगेऽप्यपह्नवारोप-

---

1. गोप—अ०। 2. धावता—अ०। 3. दृष्टं—ना०।
4. °त्प्रेक्षेत्यपि स्था°—नि०। 5. स्थापयिष्यते···नोत्प्रेक्षेत्यपि—शा१ नास्ति। 6. मन्ये—अ० नास्ति।
7. 'इति तु'—इति स्थाने 'इत्यादि' अ०।
8. वाक्यभेदे सामग्रचभावे मन्येशब्दप्रयोगेऽपि—अ०।
9. नोत्प्रेक्षेति च—नि०।

एतस्मिन्नपि भेदेऽपह्नवारोपयोः पौर्वापर्यप्रयोग-[१]पर्याये भेदद्वयं [२]सदपि न पूर्ववच्चित्रतावहमिति[३] न भेदत्वेन गणितम्। तत्रापह्नवपूर्वके आरोपे [४]निरन्तरमुदाहृतम्। आरोपपूर्वके त्वपह्नवे यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका [५]रात्रिकापालिकीयम्।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्यच्छलेन ॥४६॥

इस तीसरे (अर्थात् छल आदि शब्द द्वारा अपह्नव का निर्देश) भेद के अपह्नव और आरोप के पूर्वापर क्रम को बदल देने से दो भेद और हो सकते हैं पर वे पहले की तरह वैचित्र्य नहीं पैदा करते अतः उनकी भेद के रूप में गणना नहीं की गई है। इनमें से अपह्नव करने के बाद आरोप का उदाहरण अभी दिया जा चुका है। आरोप होने के बाद अपह्नव का उदाहरण होगा—

चांदनी के भस्मलेप से उजली, तारों की अस्थियाँ पहिने हुई अन्तर्धान के व्यापार में रस लेने वाली यह रात्रि-योगिनी कलंक के बहाने चंद्रमा-रूपी खप्पर में सिद्धांजन का चूर्ण धारण कर एक द्वीप से दूसरे द्वीप में घूमती फिरती है। ४६॥

पौर्वापर्यविपर्ययनिबन्धनं वैचित्र्यं किं नोच्यत इत्यत आह—एतस्मिन्नपीति अत्रेदमाकूतम्। यद्यप्यपह्नवारोपपौर्वापर्यविपर्यये भेदद्वयं भवत्येव न तु चमत्कारः कश्चित् न तु भेदसम्भवोऽलङ्कारप्रथनहेतुः अपितु सचमत्कारभेदसम्भवः। सचमत्कारता च सति भेदे स्यात्। एकवाक्यतायां तु छलादिशब्दस्य पौर्वापर्य-पर्यायप्रयोगेऽपि न प्रतीतिभेदः कश्चित्। क्रियाविशेषणत्वेन क्रियापेक्षया प्रतीतौ प्राथम्यनियमात्। अतः छलादिप्रयोगे द्विधा न गणितः।

वैचित्र्याभावमेव सोदाहरणं दर्शयितुमाह—तत्रापह्नवेत्यादि। समनन्तरत्व-मिहोक्तप्रतियोगिकम्। उद्भ्रान्तोज्झितेत्यत्रेति यावत्। ज्योत्स्नाभस्मेति। छुरणमुद्धूलनम्। अन्तर्धानं रात्रिपक्षे तिरस्कृतिः। विलयः अन्यत्रादृश्यत्व-सिद्धिः। मुद्रा भिक्षापिण्डम्। तदर्थं कपालमुद्रा कपालम्। परिमलः परिमर्दः। तेन तज्जनितं लक्ष्म लक्ष्यते। यथा छलादिप्रयोगेणार्थाक्षेपादसत्यत्वं तथा

१. विपर्यये—नि०। पर्यायभेद°—अ०। २. सम्भवदपि—अ०।
३. ०तामावहतीति—अ०। ४. पूर्वमु°—अ०
५. °लिकेयम्—ना०।

क्वचित्पुनरसत्यत्वं [1]वस्त्वन्तररूपताभिधायिवपुःशब्दादिनिबन्धनं यथा—

अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखाधूमस्येयं परिणमति रोमावलिवपुः ॥४७॥

एवमभेदप्राधान्ये आरोपगर्भानलंकारांल्लक्षयित्वा अध्यवसायगर्भाँल्लक्षयति। तत्र—

और कहीं दूसरी वस्तु के स्वरूप को बताने वाले 'वपु' आदि शब्दों के प्रयोग से (प्रकृत की) असत्यता प्रतिपादित होती है। जैसे—

मृगनयनी के सौन्दर्य-सुधासरोवर, मांसल जघनभाग में शंकर द्वारा जलाया गया मदन ही, सचमुच, आ पड़ा है क्योंकि उसके अंगरूपी अंगारों के बुझने से उठने वाली यह धूम-शिखा नाभिकुहर में रोमावली के रूप में परिणत हो गई है। ४७ ॥

इस प्रकार अभेद की प्रधानता में, आरोपगर्भ अलंकारों का निरूपण करने के बाद अध्यवसायगर्भ (अलंकारों) का लक्षण प्रस्तुत करते हैं। इनमें से (तत्र)—

प्रकारान्तरेणापि सम्भवतीत्याह—क्वचित् पुनरित्यादि। वस्त्वन्तरं प्रकृतापह्नवक्षमम्। अमुष्मिन्निति। अत्र हि धूमशिखा रोमावलीवपुः परिणमतीत्युक्तौ न रोमावलिः अपितु धूमशिखेति प्रतीयते। अनेनैषा प्रतीयमानापि दर्शिता मन्तव्या।

प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।
नञा छलादिशब्दैश्च सा शब्दान्तरतस्त्रिधा॥
स्याद् भेदाभेदतुलया विच्छित्तिरुपमादिका।
रूपकादिस्त्वभेदांशे मुख्ये त्वारोपसंश्रयात्॥
उत्प्रेक्षादिरभेदेन वक्ष्यतेऽध्यवसायभाक्।

तामेतां सङ्गतिं विशदीकुर्वन्नुत्प्रेक्षाप्रस्तावायाह—एवमभेदप्राधान्य इत्यादि। आरोपमूला रूपकादयोऽपह्नुत्यन्ताः। अध्यवसायगर्भास्तूत्प्रेक्षादयः। अत एव टीका तत्रेति—अध्यवसायगर्भेषु मध्यादित्यर्थः।

1. ०भिधायिशब्दनिबन्धनम्—अ०।

**अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा ॥सू० २१॥**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। [1]स च द्विविधः साध्यः सिद्धश्च। साध्यो यत्र विषयिणोऽसत्यतया प्रतीतिः। असत्यत्वं च विषयिगतस्य धर्मस्य विषय उपनिबन्धे, [2]विषयिसंभवित्वेन [3]विषयासंभवित्वेन च प्रतीतेः। धर्मो गुणक्रियारूपः तस्य संभवासंभव-

अध्यवसाय में व्यापार की प्रधानता होने पर उत्प्रेक्षा होती है। सू० २१॥

विषय का निगरण कर अभेद का प्रत्यायन विषयी का अध्यवसाय है। और वह दो प्रकार का है—साध्य तथा सिद्ध। जहाँ विषयी की असत्यरूप में प्रतीति हो (वह) साध्य (अध्यवसाय) है। और असत्यता, विषयी में रहने वाले धर्म का विषय में निबंधन करने पर, विषयी में सम्भवरूप में और विषय के असम्भवरूप में प्रतीति से आती है। धर्म गुण-रूप और क्रिया-रूप होता है।

"अध्यवसाये व्यापारप्राधान्य उत्प्रेक्षा।"

अध्यवसायो निश्चयज्ञानम्। स च लोके द्विरूपः। सम्यगात्मा मिथ्यारूपश्च। उभयरूपोऽप्ययं नालङ्कारः। न हि शुक्तिरिति सम्यगध्यवसाये रजतत्वमिति मिथ्याध्यवसाये वा विच्छित्तिः काचित्। तदुभयविलक्षणस्तु जानतोऽप्यतस्मिंस्तदेवेति योऽध्यासरूपः स इहालङ्कारत्वेन परिगृह्यते। तस्यैवालौकिकस्य विच्छित्तिरूपत्वात्। तस्य च द्वयी गतिः कदाचिदध्यवसानात्मनः स्वरूपस्य प्राधान्यं कदाचिदध्यवसितस्य विषयस्य। इत्थं च सत्यध्यवसाये विषयभूते यदाध्यवसानस्य प्राधान्यं तदोत्प्रेक्षालङ्कार इति सूत्रार्थः। तदेतदवयवशो व्याचष्टे—विषयनिगरणेनेत्यादि। निगरणं निगलनं स्वरूपतोऽपलाप इत्यर्थः। येयं विषयनिगीर्णवतो विषयिणो विषयतादात्म्येन प्रतीतिः स इहाध्यवसायोऽभिमत इति यावत्। अनेनालौकिकस्यैवाध्यवसायस्यालङ्कारबीजत्वं दर्शितम्। व्यापारप्राधान्यग्रहणस्य व्यावर्त्यमुद्घाटयितुमाह—स च द्विविध इत्यादि। तत्र साध्यस्य स्वरूपमाह—साध्यो यत्रेत्यादि। साध्य इतीयदेवैकं वाक्यम्। आक्षिप्तेन तच्छब्दार्थेनाभिसंबन्ध उत्तरवाक्यगतो हि यच्छब्दः पूर्ववाक्ये तच्छब्दोपादाननिरपेक्ष एव तदर्थेन सम्बन्धमीष्टे। यत्र विषयिणोऽसत्यतया प्रतीतिः स साध्य इत्यर्थः। अत्रैतदनुसन्धेयम्—मुखं

---

1. स च···प्रतीतिः—अयमंशः शा१ पुस्तके भग्नः।
2. सम्भवत्वेन, विषयासम्भवत्वेन प्रतीतेः —ना०।
3. विषयासम्भवित्वेन—शा० शा१ पुस्तकयोर्नास्ति।

प्रतीतौ संभवाश्रयस्य[1] तत्रापरमार्थतया असत्यत्वं [2]प्रतीयते, इतरस्य तु परमार्थतया सत्यत्वम्। यस्यासत्यत्वं, तस्य सत्यत्वप्रतीतावध्यवसायः साध्यः। अतश्च व्यापारप्राधान्यम्। सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि [3]सत्यताप्रतीतिः।

उसकी सम्भव या असम्भव-प्रतीति में (धर्म के) सम्भव आश्रय (विषयी) के वस्तुतः वहाँ न होने के कारण असत्यता और दूसरे (विषय) की वस्तुस्थिति होने के कारण सत्यता मालूम पड़ती है। जिसकी (वस्तु दृष्टि से) असत्यता है, उसी की सत्यता का प्रत्यायन होने पर अध्यवसाय साध्य होता है। और इसीलिए व्यापार की प्रधानता होती है। जहाँ वस्तु-दृष्टि से असत्य विषयी का भी सत्य रूप में ज्ञान हो वह सिद्ध (अध्यवसाय) है।

मुखत्वेन जानन्नेव यदा नूनं चन्द्र इति सम्भावयति तदा विषयी चन्द्रो मुखत्वेनासत्यः प्रतिभाति तदाध्यवसायः साध्य इति। ननु साध्य एवास्त्वध्यवसायः सिद्धो वा अभेदप्रतीतौ कथमसत्यत्वमित्यत आह—असत्यत्वं चेत्यादि। विषयिगतस्य चन्द्रादिगतस्य माधुर्यादेर्धर्मस्य विषये मुखादावुपनिबन्धे नूनं चन्द्र इत्यस्यां दशायां विषयिण्येव सम्भवत्ययम्, विषये तु न सम्भवतीति प्रतीयमानत्वाद् विषयविषयिणोरभेदः स्फुरन्नपि धर्मस्यासत्यताप्रतीत्या न प्ररोहति। अतोऽध्यवसानव्यापारस्य साध्यता। ननु को धर्मः किंप्रमाणा चासौ तदाश्रयस्य सत्यत्वासत्यत्वप्रतीतिरित्यत आह—धर्मो गुणक्रियारूप इत्यादिना। गुणक्रियारूप इति धर्मस्य साकल्यकथनात् तदुभयमूलतयोत्प्रेक्षासम्भवः सूचितः। अस्य हि धर्मस्य सम्भवोऽसम्भवश्च प्रतीयते। विषय्याश्रयतया सम्भवः, असम्भवस्तु विषयाश्रयतया। इत्थं च सति सत्यत्वासत्यत्वप्रतीतिर्नाप्रामाणिकी। कुतः ? सम्भवाश्रयस्य तत्रावस्थायां परमार्थबुद्ध्यनुदयादसत्यत्वं प्रतीयते यतः। तदितरस्य तु सत्यत्वमेव परमार्थत्वात्।

चर्वितमर्थं निष्कर्षति—यस्यासत्यत्वमित्यादि। अतश्चेत्यादि। यत इत्थमध्यवसायः साध्यः। अत उत्प्रेक्षायामध्यवसायव्यापारस्यैव प्राधान्यमित्यर्थः। अथ सिद्धं विवेचयति—सिद्धो यत्रेत्यादि। सिद्ध इति पूर्ववदेकं

---

१. °स्य च—शा० ना० नि०। 'संभावनाश्रयस्य'–वि०।

२. तत्र परमार्थतया सत्यत्वम्—शा० ना० 'अपरमार्थतयाऽसत्यत्वम्' इति स्थाने।

३. सत्यतया प्रतीतिः। सत्यताप्रतीतेः—वि० भा०।

सत्यत्वं च पूर्वकस्यासत्यत्वनिमित्तस्याभावात्। अतश्चाध्यवसितप्राधान्यम्। तत्र साध्यत्वप्रतीतौ व्यापारप्राधान्येऽध्यवसायः संभावनमभिमानस्तर्क ऊह उत्प्रेक्षेत्यादिशब्दैरुच्यते। [1]तदेवमप्रकृतगतगुणक्रियाभिसंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा। सा च वाच्या इवादिभिः[2] प्रदर्श्यते। प्रतीयमानायां पुनरिवाद्यप्रयोगः। सा च [3]जातिक्रियागुणद्रव्याणामप्रकृतानामध्यवसेयत्वेन[4] चतुर्धा। प्रकृतस्यैतद्भेदयोगेऽपि न वैचित्र्यमिति [5]ते न गणिताः।

और सत्यता उपर्युक्त असत्यता के हेतु के न रहने से होती है। यही कारण है कि अध्यवसाय में व्यापार की प्रधानता होती है।

ऐसे स्थलों में (तत्र) साध्यावस्था की प्रतीति में व्यापार की प्रधानता होने पर अध्यवसाय को सम्भावन, अभिमान, तर्क, ऊह, उत्प्रेक्षा आदि शब्दों से बताया जाता है। इस प्रकार विषयी में रहने वाले गुण और क्रिया के सम्बन्ध से प्रकृत (विषय) की अप्रकृतरूप में सम्भावना उत्प्रेक्षा है।

'इव' आदि के द्वारा उसे वाच्या के रूप में प्रदर्शित किया जाता है। पर प्रतीयमाना में 'इव' आदि का प्रयोग नहीं होता है। और वह (वाच्योत्प्रेक्षा) जाति, क्रिया, गुण तथा द्रव्य-रूप अप्रकृत का अध्यवसाय होने के कारण चार प्रकार की है। यद्यपि प्रकृत के भी ये भेद हो सकते हैं किंतु (इनमें) चारुता नहीं होती अतः उनकी गणना नहीं की गई है।

वाक्यम्। स इति द्योतितं कोऽसावित्यत आह—यत्र विषयिणो वस्तुत इत्यादि। यदा तु मुखमुद्दिश्य चन्द्रोऽयमिति प्रयोगः तदा वस्तुतोऽसत्यो विषयी सत्यतया प्रतीयते। सत्यत्वप्रतीतेर्हेतुमाह—सत्यत्वं चेत्यादि। सम्भवाश्रयस्यापरमार्थताप्रतीतिरसत्यत्वस्य निमित्तम्। यत इत्थमतश्चाध्यवसितस्यार्थस्यैव प्राधान्यं तदातिशयोक्तिर्वक्ष्यते। यदा साध्यत्वप्रतीतिः तदाध्यवसायस्य पर्यायान् व्युत्पादयति—तत्र साध्यत्वेति। चर्चितं लक्षणं निष्कर्षति—तदेवमित्यादि। तस्याः सामान्यतस्तावद् द्वैविध्यमाह—सा च वाच्येत्यादि। सामान्याच्चातुर्विध्यं दर्शयति—सा च जातिक्रियेत्यादि। अध्यवसेयत्वेन सम्भाव्यत्वेन। नन्वप्रकृतग्रहणं किं प्रकृतेऽप्येवं सम्भवादित्यत आह—प्रकृत-

१. °गत—शा० ना० पुस्तकयोर्नास्ति। २. इवादिशब्दैः—शा१।
३. जातिगुणक्रिया°—शा० ना० शा१। ४. °ध्यवसायत्वेन—शा१।
५. न ते—अ० नि०।

प्रत्येकं च भावाभावाभिमानरूपतया द्वैविध्येऽष्टविधत्वम्। भेदाष्टकस्य च प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडश भेदाः। तेषां च प्रत्येकं निमित्तस्योपादानानुपादानाभ्यां [1]द्वात्रिंशत्प्रभेदाः। तेषु च [2]प्रत्येकं हेतुस्वरूपफलोत्प्रेक्षणरूपत्वेन[3] षण्णवतिर्भेदाः। एषा गतिर्वाच्योत्प्रेक्षायाः। तत्रापि द्रव्यस्य प्रायः स्वरूपोत्प्रेक्षणमेवेति हेतुफलोत्प्रेक्षाभेदास्ततः पातनीयाः। प्रतीयमानायास्तु[4] यद्यप्युद्देशत एतावन्तो[5] भेदाः, तथापि निमित्तस्यानुपादानं तस्यां न संभवतीति तैर्भेदैर्न्यूनोऽयं

(अप्रकृत के भेदों में से) प्रत्येक के भावोत्प्रेक्षण और अभावोत्प्रेक्षण के रूप में दो भेदों के आधार पर आठ भेद होंगे। और आठ भेदों में से प्रत्येक का विभिन्न गुण-रूप तथा क्रियारूप होने से सोलह भेद हुए। इनमें से भी प्रत्येक के निमित्त का उपादान अथवा अनुपादान के द्वारा बत्तीस प्रभेद हुए। इनमें से भी प्रत्येक में हेतु, स्वरूप या फल की उत्प्रेक्षा के रूप में छ्यानबे भेद हुए। यह वाच्योत्प्रेक्षा की स्थिति है। द्रव्य का प्रायः स्वरूपोत्प्रेक्षण ही होता है अतः इन भेदों में से (तत्रापि) हेतु और फल के उत्प्रेक्षण पर आधृत भेद कम कर देने चाहिए।

प्रतीयमाना के यों तो यद्यपि इतने ही भेद होते हैं किंतु निमित्त का

स्यैतदित्यादि। प्रकृतं हि लौकिकं कविक्लृप्तविच्छित्तिविधुरतया न वैचित्र्याय। भेदचतुष्कमपि द्विधा दर्शयति—प्रत्येकं च भावाभावेत्यादि। भावरूपा सम्भावना अभावरूपा चेति। अत्र व्यापारभेदाद्भेदः। पूर्वं व्यापारवद् भेदात्। व्यापारनिमित्तभेदानाह—भेदाष्टकस्य चेत्यादि। भेदषोडशकमपि निमित्तोपादानानुपादानाभ्यां द्विगुणयति—तेषां चेत्यादि। अथ सम्भाव्यस्य हेत्वादिरूपतया पुनस्त्रैविध्यमाह—तेषु च प्रत्येकमित्यादि। वाच्यान्निगमयति—एषा गतिरित्यादि। तत्रापोह्यांशायाह—तत्रापि द्रव्यस्येत्यादि। पातनीयाः हापनीयाः। प्रतीयमानां विभक्तुमाह—प्रतीयमानायाश्चेत्यादि। उद्देशत एतावन्तः लक्षणपरीक्षयोस्तु कृतयोः कतिचन हीयन्त इति भावः। ये हीयन्ते तान् प्रस्तौति तथापि निमित्तस्येत्यादि। तैरिति निमित्तानुपादाननिबन्धनैः।

१. प्रकाराः—शा० ना० शा१। २. प्रत्येकं—शा१ नास्ति।
३. °त्प्रेक्षारूप°—शा०।
४. याश्च—शा० ना०। °नाया यद्यपि—शा०।
५. एतावन्त एव—नि० भा०।

प्रकारः। इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य [1]निष्प्रमाणत्वात्। प्रायश्च स्वरूपोत्प्रेक्षात्र न [2]संभवति। तदेवं प्रतीयमानोत्प्रेक्षाया यथासंभवं भेदनिर्देशः।

उपादान न होना इसमें सम्भव नहीं है अतः उन भेदों को घटाकर इसके भेद होते हैं। क्योंकि इवादि का उपादान न हो, निमित्त की भी चर्चा न रहे तो उत्प्रेक्षण निराधार हो जाता है। इसमें प्रायः स्वरूप का उत्प्रेक्षण नहीं हो सकता है। इस प्रकार प्रतीयमानोत्प्रेक्षा के सम्भव भेदों का निर्देश कर दिया गया है।

अयं प्रकार इति प्रतीयमानोत्प्रेक्षाप्रकार इत्यर्थः। निमित्तानुपादानं न सम्भवतीति यत् प्रतिज्ञातं तत् प्रमाणेन द्रढयति—इवाद्यनुपादान इत्यादि। इवाद्यनुपादाननिमित्तकीर्तनयोरन्यतराभावे हि न किञ्चित् प्रमाणमुत्प्रेक्षणे। अनुपात्तनिमित्तिका हि या वाच्योत्प्रेक्षा तस्यामिवाद्युपादानबलादेवोत्प्रेक्षणप्रतीतिः। इह पुनरिवाद्युपादानवन्ध्यायां प्रतीयमानायां निमित्तबलादेवेति निमित्तोपादाननियमः। स्वरूपोत्प्रेक्षणमपि न सम्भवतीत्याह—प्रायश्चेत्यादि। प्रायोग्रहणात् पर्यायोक्तनयेन स्वरूपस्य क्वचित् सम्भवदप्युत्प्रेक्षणं गम्यस्यापि भङ्ग्यन्तरतोऽभिधानात् न निरूपणार्हमिति द्योतितम्। प्रतीयमानां निगमयति—तदेवमित्यादि। यथासम्भवमिति। सम्भवमनतिक्रम्य। तथाहि प्रतीयमानोत्प्रेक्षा तावद् वाच्योत्प्रेक्षाप्रकृतिका। वाच्योत्प्रेक्षा तु षण्णवतिस्सोद्दिष्टा। यथा जातिगुणक्रियाद्रव्याणामुत्प्रेक्ष्यत्वेन चतस्र उत्प्रेक्षाजातयः प्रतिस्वं चतुर्विंशतिधा प्रथन्ते। यथा जात्युत्प्रेक्षा तावद् भावाभावाभिमानरूपतया द्विधा। द्विविधापि गुणनिमित्तिका क्रियानिमित्तिका च। इत्थं चतुर्धा। सा चोपात्तनिमित्ता, अनुपातनिमित्ता चेत्यष्टधा। अष्टविधापि हेतुस्वरूपफलोत्प्रेक्षारूपतया त्रिविधेति चतुर्विंशतिप्रकारा। अनेनैव नयेनान्यदप्युत्प्रेक्षात्रयं प्रत्येकं चतुर्विंशतिधा मन्तव्यम्। तथा च—प्रत्येकं त्रिस्कन्धिका एताः हेतुस्वरूपफलोत्प्रेक्षणरूपतया स्कन्धत्रयमपि प्रतिस्वमष्टविधम्। तथाहि उपात्तगुणनिमित्ता तथोपात्तक्रियानिमित्ता सैवानुपात्तक्रियानिमित्ता चेति भावाभिमानरूपतया चतुर्धा। एवमभावाभिमानरूपतयापि चतुर्धा इति हेतूत्प्रेक्षास्कन्धोऽष्टविधः। अनयैव नीत्या फलोत्प्रेक्षास्कन्धः

१. निष्प्रमाणकत्वात्—शा० ना० शा१। २. भवति—शा० ना०।

एषा चार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद्दृश्यते। क्वचित्पदार्थान्वयवेलायां सादृश्याभिधानादुपक्रान्ताप्युपमा वाक्यार्थतात्पर्यसामर्थ्यादभिमन्तृव्यापारोपारोहक्रमेणोत्प्रेक्षायां पर्यवस्यति। क्वचिच्छलादिशब्दप्रयोगे सापह्नवोत्प्रेक्षा भवति। अतश्चोक्तवक्ष्यमाणप्रकारवैचित्र्येणानन्त्यमस्याः।

यद्यपि यह (उत्प्रेक्षालंकार) अर्थ पर आश्रित है किन्तु (इसका) धर्म कहीं श्लिष्ट शब्द पर आश्रित दिखाई देता है। कहीं पदार्थों का अन्वय करते समय सादृश्य का उपादान होने से प्रारम्भ उपमा से होता है किन्तु वाक्यार्थ की तात्पर्यशक्ति से सम्भावना-व्यापार की प्रधानता हो जाने से पर्यवसान उत्प्रेक्षा में होता है। कहीं छलादि शब्दों के प्रयोग से उत्प्रेक्षा अपह्नुतिगर्भित हो जाती है। अस्तु! उपर्युक्त तथा वक्ष्यमाण भेदों की विविधता के कारण इस की अनन्तता है।

स्वरूपोत्प्रेक्षास्कन्धश्च प्रतिस्वमष्टविध इति जात्युत्प्रेक्षा त्रिस्कन्धतया चतुर्विंशतिधा एवं गुणक्रियाद्रव्योत्प्रेक्षा अपि प्रत्येकं चतुर्विंशतिधा ज्ञेयाः। तत्र द्रव्योत्प्रेक्षायां हेतुफलोत्प्रेक्षापाते षोडशकहानिः। अतः स्थूलदृशा तावदशीतिविधा वाच्या। प्रतीयमानायान्तु अनुपात्तनिमित्ताया निरवशेषं पातेऽष्टचत्वारिंशद्धानिः। उपात्तनिमित्तायाञ्च स्वरूपोत्प्रेक्षणपाते षोडशकहानिः। अतो द्वात्रिंशद्भेदा प्रतीयमाना मन्तव्या।

उभयरूपाया अप्यस्या वैचित्र्यान्तरायाह—एषा चेत्यादि। अर्थाश्रयापि अर्थालङ्कारोऽपीत्यर्थः। धर्मो गुणक्रियात्मको यस्य स श्लिष्टशब्दः कश्चिद्धेतुर्भवत्यस्याः। उत्प्रेक्षा ह्यर्थालङ्कारः, श्लेषः पुनरुभयालङ्कारोऽलङ्कारान्तरबाधकश्च। तथापि धर्मविषये श्लिष्टशब्दहेतुका सम्भवत्येषा। न च बाध्यते। न चोपमालङ्कारत्वप्राप्तिरिति यावत्। यथेत्थं श्लेष उत्प्रेक्षाङ्गं तथोपमाप्यङ्गमस्या भवतीत्याह—क्वचित् पदार्थान्वयेत्यादि। पदार्थसमन्वयदशायामुपमयोपक्रमः, तथोपक्रान्ताप्युपमा वाक्यार्थतात्पर्यपर्यालोचनमहिम्ना अभिमन्तुः सम्भावयितुः व्यापारोपारोहक्रमेण सम्भावनव्यापारस्य प्रतीतिविश्रान्त्यन्तमुपर्युपरि प्रसरणपरिपाट्या उत्प्रेक्षायां पर्यवस्यति। अथापह्नुतिप्रस्तावे उत्प्रेक्षाङ्गत्वेन यदपह्नुतिः प्रतिज्ञाता तस्यायमवसरः इत्यभिप्रायेणाह—क्वचिच्छलादीत्यादि। इत्थं ये प्रकारा उक्ता ये च वक्ष्यन्ते तेषां वैचित्र्यादस्या इयत्तैव नास्तीत्याह—अतश्चोक्तवक्ष्यमाणेत्यादि।

सांप्रतं [1]त्वियं दिङ्मात्रेणोदाह्रियते। तत्र जात्युत्प्रेक्षा यथा—

स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः।
स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥४८॥

अत्राङ्कुरशब्दस्य जातिशब्दत्वाज्जातिरुत्प्रेक्ष्यते। क्रियोत्प्रेक्षा यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।

अत्र लेपनवर्षणक्रिये तमोनभोगतत्वेनोत्प्रेक्ष्येते। [2]उत्तरे त्वर्धे—

अब इसका केवल दिशा-निर्देश के लिए उदाहरणों से निरूपण किया जाता है। इन भेदों में से (तत्र) जात्युत्प्रेक्षा का उदाहरण—

तुम लोगों की रक्षा करे वह चन्द्र जो नये कमलनाल की कोटि की तरह कुटिल है, जो कामारि-शंकर के आग से भूरे मस्तक पर गड़ा हुआ है, बहती हुई मन्दाकिनी के पानी से हर रोज सीचे जाने वाले स्फटिक की तरह सफेद (शंकर के) कपाल से जो कोंपल की भाँति फूट पड़ा है।४८॥

यहां कोंपल शब्द जातिवाचक है अतः जाति की उत्प्रक्षा है। क्रियोत्प्रेक्षा का उदाहरण—

अंधेरा अंगों को मानो पोत रहा है। आकाश मानो काजल बरसा रहा है।

यहां लेपन—पोतना—तथा बरसाना (इन दो) क्रियाओं की अंधेरे तथा आकाश में उत्प्रेक्षा की गई है। पर इस श्लोक के उत्तरार्ध में—

**ननु यद्यानन्त्यं कथमुदाहरणतो दर्शयिष्यत इत्यत आह—साम्प्रतं त्वित्यादि। दिङ्मात्रेणेत्यादि। यथा दिङ्मात्रेणोदाहृतापि न्यायतः साकल्येन ज्ञातुं शक्यते तथेति यावत्। उद्देशक्रममाविश्चिकीर्षुराह— तत्र जात्युत्प्रेक्षा यथेति।**

**स वः पायादिति। कुटिलत्वलक्षणो गुणो निमित्तम्। अङ्कुरशब्दो जातिवचनः। अत उपात्तगुणनिमित्तिका भावाभिमानरूपिणी जात्युत्प्रेक्षेयम्। तत्र यद्यपि स्वरूपमुत्प्रेक्ष्यते न तु हेतुफले अथाप्युद्देशक्रमविरोधात् सोंऽशो नोदाजिहीर्षितः। एवमुदाहरणेषूदाहर्तव्या विशेषांशाः स्वयमनुसन्धेयाः। क्रमस्य विवक्षणान्नास्माभिः प्रतिस्वं प्रतन्यन्ते। अत्र जात्युत्प्रेक्षात्वं विविच्य दर्शयति—अत्राङ्कुरेत्यादि।**

---

**अथ क्रियोत्प्रेक्षा—लिम्पतीवेत्यादि। क्रियोत्प्रेक्षात्वं विवेचयति—अत्र**

१. तु दिङ्मात्रेणेयम्—अ०। २. उत्तरार्धे तु—अ० नि०।

असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥४९॥

इत्यत्रोपमैव नोत्प्रेक्षा । गुणोत्प्रेक्षा यथा—

[1]सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥५०॥

अत्र दुःखं गुणः । द्रव्योत्प्रेक्षा यथा—

[2]पातालमेतन्नयनोत्सवेन विलोक्य शून्यं मृगलाञ्छनेन ।
इहाङ्गनाभिः स्वमुखच्छलेन कृताम्बरे चन्द्रमयीव सृष्टिः ॥५१॥

दुष्ट व्यक्ति की सेवा की भाँति आंख बेकार हो गई है ।४९॥

इसमें उपमा ही है, उत्प्रेक्षा नहीं है ।

गुण की उत्प्रेक्षा जैसे —

यही है वह स्थान जहाँ तुझे खोजते हुए मुझे धरती पर पड़ा एक नूपुर दिखाई दिया था, जो मानो तेरे चरण कमल से विछुड़ जाने की व्यथा से चुपचाप था ।५०॥

यहां व्यथा गुण है । द्रव्य की उत्प्रेक्षा जैसे—

यह पाताल नयनाभिराम चन्द्र से सूना है—यह सोचकर यहां की अंगनाओं ने अपने मुख के बहाने पाताल में मानो चंद्रमयी सृष्टि रच डाली है ।५१॥

लेपनेत्यादि । न च मन्तव्यं वर्षणस्य नभःकर्तृत्वान्न तमोगतत्वमिति । नभसोऽपि तमसाधिष्ठितस्यैव वर्षणकर्तृकत्वसम्भवात् । अनेन परम्परायाताया अपि सम्भावनाया उत्प्रेक्षात्वं द्योतितम् । ननूत्तरार्धानुदाहरणे को हेतुरित्यत आह—उत्तरे त्वित्यादि । उपमैव नोत्प्रेक्षेति । अत्रैतदुपह्वरम्—उपमानाङ्गश्चेल्लोकसिद्धस्तदोपमैव द्वयोः सिद्धत्वादिवशब्दः साधर्म्यद्योतको यतः, यदा तु कविकल्पितः तदोत्प्रेक्षैव उपमानस्य लोकतोऽसम्भवादिवशब्दस्तत्सम्भावनां द्योतयति यतः । अत्रावान्तरश्लोकौ—

यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः साधर्म्यसूचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः ॥ इति ॥

अथ गुणोत्प्रेक्षा । सैषा स्थलीति । इयं प्रतिप्रतिष्ठमानस्य दाशरथेः सीतां प्रत्युक्तिः । गुणोत्प्रेक्षात्वं दर्शयति—दुःखं गुण इति । अथ द्रव्योत्प्रेक्षा यथा—

---

1. एषा—शा० ना० शा१ । 2. °मन्तर्नयनो°—ना० ।

अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम् । एतानि भावाभिमाने उदाहरणानि । अभावाभिमाने यथा—

कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥५२॥

अत्रापश्यन्ताविति क्रियाया अभावाभिमानः । एवं जात्यादाव-[1]प्यूह्यम् । गुणस्य निर्निमित्तत्वं यथा—'नवबिसलताकोटिकुटिलः' [2]इत्यादावुदाहृते कुटिलत्वस्य ।

यहां चन्द्र एक है अतः द्रव्य है । ये उदाहरण भावरूप सम्भावना के थे । अभाव के उत्प्रेक्षण का उदाहरण—

उफ ! इस (कामिनी) के कपोल-फलक ऐसे हो गये हैं ! इतने कृश हो गए हैं कि मानो एक दूसरे को देख नहीं पा रहे हैं ।५२॥

यहां 'देख नहीं पा रहे हैं' इस प्रकार क्रिया का अभावात्मक सम्भावन (अभिमान) किया गया है । इसी प्रकार जाति आदि में (अभावरूप अभिमान की ) ऊहा कर लेनी चाहिए । गुण के निमित्त रहित होने का

पातालमेतदिति । द्रव्यत्वं दर्शयति—चन्द्रस्येत्यादि । उदाहरणचतुष्केऽप्यनुगतं विशेषमुद्घाटयति—एतानि भावाभिमान इत्यादि ।

अथाभावाभिमाने कपोलफलकाविति । कष्टं कृच्छ्रात् । तथाविधाविति स्वानुभवैकसमधिगम्यो रामणीयकातिशयो द्योत्यते । क्षामतागमनं नैसर्गिकम् । परस्परदर्शनाभावो हेतुत्वेनोत्प्रेक्ष्यते । अत एवाभावाभिमानरूपता । तदेतद् दर्शयति—अत्रापश्यन्तावित्यादिना । न्यायस्य सुज्ञातत्वात् स्थालीपुलाकन्यायेनोदाहरणमात्रमिति न व्युत्क्रमदोषः शङ्कनीयः । क्रमापेक्षया तु जात्याद्युत्प्रेक्षापुरस्कारेणोदाहर्तव्यम् । तदेतदभिसन्धायाह—एवं जात्यादावभ्यूह्यमिति । इत्थं जात्यादिचतुष्कमभावाभिमानरूपतयोदाहृतम् ।

अथ भेदाष्टकस्य गुणक्रियानिमित्ततोदाहर्तव्या । तत्र गुणनिमित्तकत्वेनोदाजिहीर्षुराह—नवबिसलतेत्यादि । तद् विवेचितचरमिति वाच्यम् ।

---

1. °वभ्यूह्यम्—शा० ।
2. इत्यत्रोदाहृतस्य—शा० । इत्यत्रोदाहृते—अ० । इत्याद्युदाहृतम्—ना० । इत्यादावुदाहृतस्य—नि० ।

क्रियाया यथा[1]—'ईदृक्षां क्षामतां गतौ' इत्यत्र क्षामतागमनस्य। [2]निमित्तोपादानस्यैते[3] उदाहरणे। अनुपादाने 'लिम्पतीव तमोऽङ्गानि' इत्याद्युदाहरणम्। हेतूत्प्रेक्षा यथा—'विश्लेषदुःखादिव बद्धमौनम्' [4]इत्यादौ।

स्वरूपोत्प्रेक्षा यथा[5]—

उदाहरण 'नई विसलता की कोटि-सा कुटिल······'इस पूर्वोदाहृत पद्य में 'कुटिलता' का है। क्रिया का उदाहरण 'इतने कृश हो गए हैं' इसमें आए 'कृश होने' का है। इन दोनों उदाहरणों में निमित्त का उपादान किया गया है। अनुपादान का उदाहरण 'अन्धकार अंगों को लीप रहा है·········' इत्यादि में है। हेतूत्प्रेक्षा का का उदाहरण 'विछोह की व्यथा से मानो मौन······'इत्यादि में है।

स्वरूपोत्प्रेक्षा जैसे—

एवं गुणनिमित्तकत्वं क्रियाद्युत्प्रेक्षात्रये स्फुटतरत्वादुदाहरणनिरपेक्षमभिसन्धाय क्रियानिमित्तत्वेनोदाहरति—ईदृक्षामित्यादि। क्षामतागमनलक्षणा क्रिया ह्यदर्शनोत्प्रेक्षाया निमित्तम्। इयता षोडशकमुदाहृतं मन्तव्यम्।

अथ निमित्तोपादानानुपादानाभ्यां षोडशकस्य यद् द्वैविध्यं प्रतिज्ञातं तत्र निमित्तोपादानस्य समनन्तरोदाहरणान्येवोदाहरणत्वेन दर्शयति—एते निमित्तेत्यादि। कुटिलत्वक्षामतागमनयोरुपादानात्। अनुपादानमप्युदाहृतेष्वेव दर्शयति—लिम्पतीवेत्यादि। अत्र लेपनादित्वेन सम्भावने व्यापनादि निमित्तं नोपात्तम्। इयता द्वात्रिंशद्भेदा उदाहृताः।

अथ द्वात्रिंशद्धेतुफलस्वरूपात्मकतया त्रिधोदाहर्तव्याः। तत्र हेतुरूपतयोदाहरति—विश्लेषदुःखादिवेत्यादि। अत्र दुःखगुणो हेतुत्वेनोत्प्रेक्षितः। इत्थं जातिक्रिये हेतुत्वेनावगन्तव्ये। अत्र द्रव्योत्प्रेक्षायां तदभावात्तन्निबन्धनमष्टकं पातनीयम्। अथ स्वरूपतयोदाहरति—

१. यथा—शा१ नास्ति।
२. एते निमित्तोपादानस्योदाहरणे—अ०।
३. °स्योक्ते—ना०। ४. इत्यादि—ना०।
५. यथा—शा० ना० पुस्तकयोर्नास्ति।

कुबेरजुष्टां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥५३॥

फलोत्प्रेक्षा यथा—

चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥५४॥

एवं वाच्योत्प्रेक्षाया उदाहरणदिग्दत्ता । प्रतीयमानोत्प्रेक्षा यथा—

प्रखर किरण वाला (सूर्य) समय विताकर कौवेरी दिशा (उत्तरा) के पास चल दिया था तो दक्षिणा दिशा ने हवा बहाई थी मानो मुंह से वेदना की आह छोड़ी हो ।५३॥

फलोत्प्रेक्षा जैसे—

भय से भागे चोलराज की मस्तक की चमड़ी को कटीले बनप्रान्तों ने उधेड़ दिया था मानो (भाग्य के) अक्षरों को वांचने के लिए जिससे पता चल सके कि अब भी उसे क्या भुगतना है ।५४॥

इस प्रकार वाच्योत्प्रेक्षा के उदाहरणों की परिपाटी बता दी है। प्रतीयमानोत्प्रेक्षा जैसे—

कुबेरजुष्टामित्यादि । जुष्टा सेविता कुबेरजुष्टा दिग् उदीची । सा प्रतिनायिकात्वेनानुसन्धीयते । समय एकदर्तुविशेषः । अन्यदा त्वन्यत्र गमनलक्षणः सङ्केतः । दक्षिणस्यां दिशि नायिकात्वमनुसन्धीयते । व्यालीकमपराधः । अत्र हि निःश्वासस्य स्वरूपमेवोत्प्रेक्ष्यम् । न तु हेतुः फलं वा । इत्थं गुणोत्प्रेक्षादित्रये स्वरूपात्मकत्वं ज्ञेयम् ।

अथ फलोत्प्रेक्षा । चोलस्येत्यादि । अत्र दर्शनक्रिया विपाटफलत्वेनोत्प्रेक्ष्यते । इत्थं जातिगुणयोरपि फलत्वमनुसन्धेयम् । द्रव्योत्प्रेक्षायां हेतुफलासंभवात् तन्निबन्धनषोडशकं पातनीयम् । इत्थमशीतिविधापि साकल्येनोदाहृतकल्पैव । तदेतन्निगमयन्नाह—एवं वाच्योत्प्रेक्षाया इत्यादि ।

अथ प्रतीयमाना परिपाट्योदाह्रियते—महिलासहस्सेत्यादि

महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अनुदिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअंती ।
अणुदिणमणण्णम्मा[1] अंगं तणुअंपि[2] तणुएइ[3] ॥५५॥
[महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनूकरोति ॥]

[4]अमाअंती इत्यत्रावर्तमानेवेति तनूकरणहेतुत्वेनोत्प्रेक्षितम् । एवं भेदान्तरेष्वपि[5] ज्ञेयम् । [6]श्लिष्टशब्दहेतुर्यथा—

अनन्यसामान्यतया प्रसिद्धस्त्यागीति गीतो जगतीतले यः[7] ।
अभूदहंपूर्विकया गतानामतीव भूमिः स्मरमार्गणानाम् ॥५६॥

अत्र धर्मविषये मार्गणशब्दः श्लिष्टः ।

सुन्दर ! तेरा हृदय हजारों महिलाओं से भरा है। वह (मेरी सखी) नहीं समा पा रही है। शरीर दुबला तो है ही पर वह है कि सब काम छोड़ कर, प्रतिदिन उसे घिसने में लगी रहती है ।५५।।

'नहीं समा पा रही है' —मानो प्रवेश नहीं पा रही है—इसी की उत्प्रेक्षा (शरीर को) घिसने के कारण के रूप में है (अर्थात् शरीर को घिसती जा रही है क्योंकि समा नहीं पा रही है)। इसी प्रकार दूसरे भेदों में भी समझ लेना चाहिए। श्लिष्टशब्दहेतुक का उदाहरण—

असाधारण रूप में जिसकी ख्याति है, त्यागी के रूप में जिसका जगतीतल में गान होता है, वही अहंपूर्विका से बढ़ने वाले काम के बाणों (याचकों) का परम लक्ष्य बना था ।५६।।

यहां धर्मविषयक 'मार्गण' शब्द (बाण तथा याचक) श्लिष्ट है ।

दिवसमित्यत्यन्तसंयोगे द्वितीया । प्रतीयमानामुत्प्रेक्षामुद्घाटयति—अमाअन्तीत्यत्रेत्यादिना । ज्ञानस्येह सुज्ञानत्वाद विस्तरभीरुराह—एवं भेदान्तरेष्विति । अर्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका सम्भवतीति योद्दिष्टा तामुदाहरति—श्लिष्टशब्देत्यादि ।

अनन्येति । प्रसिद्धस्त्यागीति गानप्रकारः । मार्गणाः शराः याचकाश्च । लक्ष्ययोजनायाह—अत्र धर्मविषय इति । मार्गणविषयी भावो धर्मः संभावनांश एव प्रतीतिविश्रान्ते श्लेषो नोत्प्रेक्षाबाधकः ।

---

1. °अम्मा—अ० नि० । 2. तनयति—छायान्तरम् ।
3. 'इति'—नि० श्लोकानन्तरम् । 4. अत्र अमाअन्तीवेति—ना० ।
5. अपि—ना० नास्ति । 6. श्लिष्टशब्दहेतुका—अ० शा० । 7. सः—अ० ।

[1]उपमोपक्रमोत्प्रेक्षा यथा—

कस्तूरीतिलकन्ति [2]भालफलके देव्या मुखाम्भोरुहे
[3]रोलम्बन्ति तमालबालमुकुलोत्तसन्ति [4]मौलावपि।
[5]याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरु-
स्थासन्ति प्रथयन्तु[6] तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥५७॥

अत्र यद्यपि 'सर्वप्रातिपदिकेभ्यः क्विप्'[7]इत्युपमानात्क्विब्विधावामुखे उपमाप्रतीतिस्तथाप्युपमानस्य प्रकृते संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षायां पर्यवसानम्।

उपमा से प्रारम्भ होने वाली उत्प्रेक्षा का उदाहरण —

देवी के भाल-फलक पर जो कस्तूरी का तिलक बन जाती हैं, मुखकमल पर भ्रमर बन जाती हैं, मौलि में तमाल के नये मुकुलालंकार बन जाती हैं, कानों में विकसित नील कमल बन जाती है, स्तन-परिसर में कृष्ण अगरु का लेप बन जाती हैं, श्रीकण्ठ शिव के कण्ठ की वे छवियां तुम्हारा कल्याण बढ़ाएं ।५७॥

यहाँ पर यद्यपि 'सभी प्रातिपदिकों से क्विप् प्रत्यय लगता है' (वार्तिक ३।१।११) इससे उपमान के कारण 'क्विप्' का विधान होन से प्रारम्भ में उपमा की प्रतीति होती है तथापि उपमान का प्रकृत के साथ सम्भावन ही उचित है अतः उत्प्रेक्षण का उत्थान हो जाने से पर्यवसान उत्प्रेक्षा में होता है।

**कस्तूरीति। लोलम्बा भृङ्गाः। अङ्कः पर्यन्तः। स्थासश्चर्चिका। उपमोपक्रमतामुपपादयति—अत्र यद्यपीत्यादि। सर्वप्रातिपदिकेभ्यः उपमानार्थेभ्यः क्विबित्येके आचार्या इति सूत्रार्थः। अत्र क्विपो माहात्म्यादुपमा प्रतीतापि संभावनायां पर्यवस्यति। कण्ठत्विषां तिलकादिरूपत्वनियमासिद्धेः। तिलकादिरूपतापि कदाचित् स्यादित्युपमानांशे संभावनाप्राणत्वमेव, न तु वास्तवम्, अत उत्प्रेक्षायां पर्यवसानम्। तदिदमभिसन्धायाह—तथाप्युपमानस्येत्यादि। उपमानस्य तिलकादेः प्रकृते कण्ठत्विड्रूपे संभवौचित्यात् संभावनमात्रस्योचितत्वात्। संभावनस्योत्थाने उत्प्रेक्षणस्योदये।**

---

१. उपमोपक्रमोत्प्रेक्षा यथा—शा० नास्ति। २. फाल—अ०।
३. लोलम्बन्ति—अ०। ४. मौलिं प्रति—अ०।
५. कर्णे याः—शा१। ६. प्रथयन्ति—शा१।
७. इत्येके इत्यु°—अ०।

यथा वा विरहवर्णने 'केयूरायितमङ्गदैः'[1] इत्यादौ। एषा च [2]समस्तोपमाप्रतिपादकविषयेऽपि[3] हर्षचरितवार्तिके, साहित्यमीमांसायां च तेषु तेषु प्रदेशेषूदाहृता[4]। इह तु ग्रन्थविस्तरभयान्न प्रपञ्चिता। सापह्नवोत्प्रेक्षा यथा—

गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु।
यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति सिप्रा ॥५८॥

अथवा जैसे विरह के वर्णन में 'बाजूबन्द केयूर बन गए' इत्यादि में (उपमा का उत्प्रेक्षा में पर्यवसान है)। प्रतिपादक शब्द के रहने पर (प्रारम्भ में प्रतीत) होने वाली इस समस्त (समास में आई हुई) उपमा का उदाहरण हर्षचरितवार्तिक और साहित्य-मीमांसा के उन उन (अर्थात् सम्बन्धित) स्थलों में दिया गया है। पर यहाँ ग्रन्थ-विस्तार के भय से विस्तार में नहीं बताया गया है। अपह्नुति- गर्भित उत्प्रेक्षा जैसे—

पुरस्त्रियों के (सिप्रानदी के) तट पर पहुँचने पर, सहसा मछलियों द्वारा घर्षण करने से उठने वाले फेन-जाल के व्याज से जहाँ सिप्रा मानो उन्मुक्त अट्टहास करती हुई मालूम पड़ती है। ५८॥

अथोपमार्थकप्रत्ययान्तरप्रयोगेऽप्युपमोपक्रमत्वं दर्शयितुमाह—यथा वेत्यादि। केयूरायितमिति। अत्रापि हि क्यङो माहात्म्यादुपमाप्रतीतिः। अङ्गदादेः केयूरादिवदाचरणे नियमाभावात्, तथात्वसंभावनायामुत्प्रेक्षैव पर्यवस्यति।

अथोपमानांशस्य वस्तुतोऽसिद्धस्य कविकल्पनायत्तत्वे सर्वैवोपमा प्रतिपादकशब्दमाहात्म्यादामुखे प्रतीताप्युत्प्रेक्षात्वेन पर्यवस्यतीत्यभिसन्धायाह—एषा चेत्यादि। अप्रपञ्चने हेतुमाह– इह त्विति।

गतासु तीरमिति। सविभ्रमगतिः फेनोल्लासहेतुः। अत्रेवशब्दादट्टहासस्य सम्भाव्यता। छलशब्देन तु फेनततेरपह्नव इति सापह्नवेयमुत्प्रेक्षा। यत्तु व्यक्तिविवेककृदीदृशि विषये मन्यते "इवादिशब्दैरेव प्रकृतार्थस्यासत्यत्वप्रतीतेः छलादिशब्दाः पुनरुक्ता" इति, तन्मन्दम्। न खल्वीदृशि विषये छलादिशब्दस्याप्रयोगे प्रकृतार्थस्यासत्यता गम्यते, अपितूत्प्रेक्षां प्रति हेतुभाव एव। यथात्रैव फेनपरम्पराभिरिति पाठे। अतः सापह्नवत्वलक्षणमुत्प्रेक्षावैचित्र्यं छलादिशब्द-

१. °मङ्गुलीयकैः—अ० शा०।

२. एषापि च—अ० नि०। सा च—नि१।

३. विषयेऽपि दृश्यते—अ०। ४. ०हृतेति—अ०।

अत्रेवशब्दमाहात्म्यात्संभावनं, छलशब्दप्रयोगाच्चापह्नवो [1]गम्यते। एवं छद्मादिशब्दप्रयोगेऽपि ज्ञेयम्। 'अपर इव पाकशासनः' इत्यादावपरशब्दाप्रयोगे [2]उपमैवेयम्। तत्प्रयोगे तु प्रकृतस्य राज्ञः पाकशासनत्वप्रतीतावध्यवसायसंभवादिवशब्देन च तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेयम्। इवशब्दाप्रयोगे तु[3] सिद्धत्वादध्यवसायस्यातिशयोक्तिः। [4]इवापरशब्दयोरप्रयोगे तु रूपकम्।

यहां 'इव'-शब्द की महिमा से सम्भावन की तथा छल शब्द के प्रयोग से अपह्नव की प्रतीति होती है। इसी प्रकार छद्म आदि शब्द का प्रयोग करने पर भी (सापह्नव उत्प्रेक्षा को) समझना चाहिए। 'मानो दूसरा इन्द्र है' इस प्रकार के स्थलों में (इत्यादौ) यदि 'दूसरा' शब्द का प्रयोग न हो तो यह उपमा ही होगी। पर इसका ('दूसरा' शब्द का) प्रयोग करने पर प्रकृत राजा में इन्द्र की प्रतीति हो जाती है अतः अध्यवसाय का उत्थान हो जाता है। इव शब्द से उसकी साध्यावस्था भी प्रतीत हो जाती है। अस्तु, यह उत्प्रेक्षा ही है। इव शब्द का यदि प्रयोग न हो तो अध्यवसाय सिद्ध हो जाएगा अतः अतिशयोक्ति होगी। 'इव' तथा 'दूसरा' दोनों शब्दों का प्रयोग न होने पर तो रूपक होगा।

प्रयोगैकशरणम्। तदिदमभिसन्धायाह— अत्रेवशब्देत्यादि।

अथोत्प्रेक्षाया एव प्रपञ्चनार्थं तत्तादलंकारबीजभूततत्तत्पदावापोद्धाराभ्यामलंकारवैचित्र्यमाविर्भवतीति व्युत्पादयति— अपर इवेत्यादिना। अपरशब्दाप्रयोगे हि पाकशासनः सिद्धतया प्रतीयते इत्युपमैव। तत्प्रयोगे तु प्रकृतो राजैवापरपाकशासनत्वेनाध्यवसीयते। इवशब्दाच्चाध्यवसानस्य साध्यतेत्युत्प्रेक्षैव। इवशब्दापोहे त्वपरपाकशासनत्वं सिद्धतया प्रतीयत इत्यतिशयोक्तिः। इवापरशब्दयोर्द्वयोरप्यपोहे रूपकमभेदप्राधान्यप्रतीतेः। इत्थं नानावैचित्र्यनिर्भरायामस्यां कुत्रचिदंशे नियमेन वाच्यता कुत्रचित्तु कामचार इति व्युत्पादयिषुर्हेतूत्प्रेक्षां तावद् व्युत्पादयति— तदेवंप्रकारेत्यादिना। प्रकृतसम्बन्धिन उपमेयसम्बन्धिनः। यस्य धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशाद् अभेदोपचरणवशादभिन्न उत्प्रेक्षानिमित्तमाश्रीयते। उपमाधर्मेण सह भेदत्यागेनैवोत्प्रेक्षा हेतुतयाश्रीयते। निय-

---

१. अवगम्यते—अ०। २. तूप°—अ०।

३. तु—अ० नि० पुस्तकयोर्नास्ति।

४. अपरशब्दस्याप्रयोगे तु—शा० ना०। अपरशब्दाप्रयोगे तु शा१।

तदेवं प्रकारवैचित्र्येणावस्थिताया[1] उत्प्रेक्षाया हेतूत्प्रेक्षायां यस्य प्रकृतसंबन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्न [2]उत्प्रेक्षायां निमित्तत्वेनाश्रीयते। स च वाच्य एव नियमेन भवति। अन्यथा कं प्रति हेतुः स्यात्। यथा[3]—'अपश्यन्ताविवान्योन्यम्' इत्यादौ। अत्र कपोलयोः प्रकृतयोः संबंधित्वेनोपात्तस्य क्षामतागमनस्य हेतुरदर्शन-मुत्प्रेक्षितम्। हेतुफलं च[4] क्षामतागमनं तत्र[5] निमित्तम्।

इस प्रकार भेदों की विविधता मे रहने वाली उत्प्रेक्षा के हेतूत्प्रेक्षण में प्रकृत से सम्बन्धित जिस धर्म के हेतु की उत्प्रेक्षा की जाती है वह धर्म अध्यव-साय के कारण (अप्रकृत के धर्म से) भिन्न नहीं होता है अतः उत्प्रेक्षा में (उसी को) निमित्त के रूप में मान लिया जाता है। और वह नियमतः वाच्य ही होता है। अन्यथा वह किसका हेतु माना जाएगा ? जैसे 'मानों एक दूसरे को देख नहीं पा रहे हैं.....' (श्लोक ५२) इसमें प्रकृत (कपोल) से सम्बन्धित धर्म के रूप में आए 'कृश हो जाने' के हेतु 'न देख पाना' की उत्प्रेक्षा की गई है। और हेतु का फल 'कृश हो जाना' उसका निमित्त है।

मेन च वाच्यो भवति। अस्योपमानधर्मेण सहाभेदाश्रयणं वाच्यत्वं चेति नियम-द्वयमनुसन्धेयम्। यद्येवं न स्यात् तदोत्प्रेक्ष्यमाणो हेतुरभित्तिकमेव चित्रं स्यादि-त्याह—अन्यथा कं प्रतीति।

तामिमां व्यवस्थामुदाहरणतो हृदयंगमीकरोति—यथा अपश्यन्ताविवेत्या-दिना। अत्र कपोलौ प्रकृतौ, तत्सम्बन्धी धर्मः क्षामता, तद्धेतुत्वेनादर्शनमुत्प्रे-क्षितम्। तदुत्प्रेक्षणे च न केवला कपोलक्षामता निमित्तमपितु लोके परस्परम-दृष्ट्रोर्या क्षामता तदभिन्नत्वेनाध्यवसिता सैव चोत्प्रेक्षितादर्शनलक्षणस्य हेतोः फलम्। तदिदमभिसन्धायाह—अत्र कपोलयोरित्यादि। तच्च विभिन्न-मिति फलदशायामभेदेनाध्यवसीयत इत्यर्थः। अदर्शनं प्रत्यप्रकृतैव हि क्षामता

---

1. ०यामुत्प्रेक्षायाम्—अ०। 2. उत्प्रेक्षाया—अ०। उत्प्रेक्षानिमित्त—शा०, ना०, शा१।
3. यथा—शा१ नास्ति।
4. च तत्र—शा१।
5. तत्र—शा१ नास्ति।

एवम् 'अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्' इत्यत्र नूपुरगतस्य मौनित्वस्य[१] हेतुर्दुःखित्वम्। तदुत्प्रेक्षणे मौनित्वमेव निमित्तं ज्ञेयम्। एवं सर्वत्र।

स्वरूपोत्प्रेक्षायां यत्र धर्मी [२]धर्म्यन्तरगतत्वेनोत्प्रेक्ष्यते, तत्र[३] निमित्त-भूतो धर्मः[४] क्वचिन्निर्दिश्यते। यथा—'स वः पायादिन्दुः' इत्यादौ। अत्र [५]कुटिलत्वादि निर्दिष्टमेव।

इसी प्रकार '(नूपुर) दिखाई पड़ा था जो मानो तेरे चरणकमल से बिछुड़ जाने की व्यथा से चुपचाप था।' (श्लोक ५०) यहाँ नूपुर में चुपचाप होने का हेतु (उसका) 'व्यथित होना' है जिसकी उत्प्रेक्षा में चुपचाप होना ही निमित्त मानना चाहिए। इसी प्रकार (हेतूत्प्रेक्षा में) सर्वत्र (प्रकृत का धर्म ही हेतूत्प्रेक्षण का निमित्त होता है और वह नियमतः शब्दोपात्त) होता है।

स्वरूपोत्प्रेक्षा में जहाँ (एक) धर्मी की दूसरे धर्मी में उत्प्रेक्षा की जाती है वहाँ निमित्त-भूत धर्म का कहीं तो निर्देश होता है। जैसेकि 'तुम लोगों की वह चन्द्र रक्षा करे' (४८) इत्यादि में। यहाँ कुटिलता आदि का निर्देश है ही।

फलम्[६]। तत्र निमित्तं हेतूत्प्रेक्षणे प्रयोजकं परस्परदृष्ट्योर्यत् क्षामतागमनं तेन सहाभेदेनाध्यवसित इत्यर्थः। इयमभावाभिमानरूपक्रियालक्षणहेतूत्प्रेक्षा। एवं भावाभिमानलक्षणहेतूत्प्रेक्षायामपि न्यायः समान इत्याह—एवमदृश्यतेत्या-दिना। अत्रापि हि नुपूरगतमौनित्वस्य हेतुत्वेन दुःखमुत्प्रेक्षितं, तदुत्प्रेक्षणे च लौकिकदुःखमौनित्वाभेदेनाध्यवसितं नूपुरमौनित्वमेव निमित्तम्, दुःखोत्प्रेक्षणफलं च। इयं प्रक्रिया सर्वत्रैव हेतूत्प्रेक्षायामेकरूपेत्याह—एवं सर्वत्रेति।

अथ स्वरूपोत्प्रेक्षायां क्वचिद् धर्मो धर्म्यन्तरगतत्वेनाध्यवसीयते। क्वचित्तु

---

१. मौनित्वस्य यो—अ०। २. °गत°—शा० ना० पुस्तकयोर्नास्ति।
३. तत्रापि—अ० नि०। निमित्ताभूतधर्मः—अ०। ४. धर्मो निमित्तभूतः—शा० ना० शा१। ५. कुटिलता निर्दिष्टैव—अ०।
६. 'तच्च भिन्नमिति फलदशायामभेदेनाध्यवसीयते, किन्तु उपमानधर्मत्वाद् विभिन्न इत्यर्थः। अदर्शनं प्रत्यप्रकृतैव हि क्षामता फलम्। तत्र निमित्तं हेतूत्प्रेक्षणे प्रयोजकम्। इयमभावाभिमानरूपक्रियालक्षणहेतू-त्प्रेक्षा' अयं लेशतो भिन्नः पुनरुक्तपाठः कोष्ठके विनिवेशितः। तत्र चेयं टिप्पणी—'कोष्ठान्तर्गतो भागः अत्र देयमिति भिन्ने कस्मिश्चित् पत्रे लिखितमासीत्'।

'वेलेव रागसागरस्य' इत्यादौ संक्षोभकारित्वादि गम्यमानम्। यत्र च[1] धर्म एव धर्मिगतत्वेनोत्प्रेक्ष्यते तत्रापि निमित्तस्योपादानानुपादानाभ्यां द्वैविध्यम्। उपादाने[2] यथा—

प्राप्याभिषेकमेतस्मिन्प्रतितिष्ठासति द्विषाम्।
चकम्पे [3]लोप्यमानाज्ञा भयविह्वलितेव भूः ॥५९॥

अत्र भूगतत्वेन [4]भयविह्वलितत्वाख्यधर्मोत्प्रेक्षायां कम्पादि निमित्तमुपात्तम्। [5]अनुपादाने यथा—'लिम्पतीव तमोऽङ्गानि' [6]इत्यादौ।

'अनुराग-जलधि की मानों वेला हो' इत्यादि में संक्षोभ-जनकत्व आदि प्रतीयमान है। और जहाँ धर्म की दूसरे धर्मी में उत्प्रेक्षा की जाती है वहाँ भी निमित्त के उपादान और अनुपादान से दो भेद हो जाते हैं। उपादान रहने का उदाहरण—

अभिषेक पाकर यह राजा विजय के लिए प्रस्थान करने वाला ही था कि शत्रुओं की धरती (राज्य), जिसमें उनकी आज्ञा अब नहीं चल पा रही थी मानों भय से आकुल हो, काँपने लगी। ५९॥

यहाँ धरती में 'भय से आकुल होना' इस धर्म की उत्प्रेक्षा में कांपने आदि का निमित्त के रूप में उपादान हुआ है। अनुपादान का उदाहरण 'अंधेरा अंगो को पोत रहा है…'(४९) आदि में है।

धर्म एव धर्म्यन्तरगतत्वेन तत्रोभयत्रापि निमितांशः कदाचिद् वाच्यो भवति कदाचित्तु गम्यमान इति विवेचयितुमारभते—स्वरूपोत्प्रेक्षायां यत्र धर्मीत्यादिना। स वः पायादिति। अत्रेन्दुकलाकपालाङ्कुरयोः साधर्म्यस्यासिद्धत्वात् कुटिलत्वलक्षणस्य शब्देनोपादानम्। वेलेव रागसागरस्येत्यत्र संक्षोभकारितायाः प्रसिद्धत्वादनुपादानम्।

अथ धर्मस्य धर्मिगतत्वेनाध्यवसाने निमित्तोपादानानुपादाने दर्शयति—यत्र धर्म एवेत्यादि।

प्राप्याभिषेकमिति। द्विषां भूरिति समन्वयः। अत्र धर्मिणि धर्मसम्भा-

---

[1] च—शा१ नास्ति।　[2] उपादानं यथा—शा० ना०।
[3] लोक्यमानाज्ञा—नि०। ना० शा१ पुस्तकयोरयमंशोऽस्पष्टः।
[4] भय—अ० शा१ पुस्तकयोर्नास्ति।
[5] अनुपादनं यथा—शा० ना०।　[6] इत्यादि—अ०।

अत्र तमोगतत्वेन [1]लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादि निमित्तं गम्यमानम्। व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्। न च विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्। तस्माद्यथोक्तमेव साधु। फलोत्प्रेक्षायां यदेव तस्य कारणं तदेव [2]तस्य निमित्तम्। तस्यानुपादाने कस्य तत्फलत्वेनोक्तं स्यात्। तस्मात्तत्र तस्य निमित्तस्योपादानमेव न प्रकारान्तरम्। यथा—

यहाँ अंधेरे में लेपन क्रिया का कर्तृत्व होने की उत्प्रेक्षा में (अन्धकार का) प्रसार आदि निमित्त प्रतीयमान है। यदि (अंधकार के) प्रसार को उत्प्रेक्षा का बिषय माना जाता है तो किसी दूसरे निमित्त का अनुसन्धान करना होगा। पर (उत्प्रेक्षा के) विषय का प्रतीयमान होना ठीक नहीं है। उत्प्रेक्षण का आश्रय होने के नाते वह प्रस्तुत है अतः उसका उपादान ही उचितहै। अतएव जो कहा है वही ठीक है।

फल की उत्प्रेक्षा में जो भी उसका कारण होता है वही उसका निमित्त होता है। उस (निमित्त) का उपादान न हो तो वह फल किसका कहलाएगा? अतः फलोत्प्रेक्षा में निमित्त का उपादान ही होता है, दूसरा (अनुपादानमूलक) भेद नहीं होता है। (फलोत्प्रेक्षा का) उदाहरण—

वनं निमित्तोपादानं च विवेचयति—अत्र भूगतत्वेनेत्यादि। लिम्पतीवेति। निमित्तानुपादानं विवेचयति—अत्र तमोगतेत्यादि। ननु धर्मे धर्मसम्भावनवैचित्र्याय व्यापने लेपनमुत्प्रेक्ष्यतामित्यत आह—व्यापनादौ त्विति। निमित्तमन्यदन्वेष्यं स्यादिति। यथा लेपनोत्प्रेक्षणे व्यापनं निमित्तत्वेन गम्यते नहि तथा व्यापनोत्प्रेक्षणे निमित्तमन्यदवगम्यते। अतोऽनवगतस्य कल्पनमवगतस्य परित्याग इति दोषद्वयमापतेदिति भावः।

दोषान्तरमप्युद्भावयति—न च विषयस्येत्यादि। यदि व्यापनमेवोत्प्रेक्षणविषयो नहि तस्य गम्यमानता युक्ता। तत्र हेतुः—तस्योत्प्रेक्षिताधारत्वेनेति। उत्प्रेक्षितमुत्प्रेक्षणम्। तदाधारत्वेनाभिधातुं प्रस्तुतस्याभिधातुमेवोचितत्वात्। अतो लेपनमेवोत्प्रेक्ष्यमिति। निगमयति तस्माद् यथोक्तमेवेति।

अथ फलोत्प्रेक्षाया निमित्तानुपादानं न सम्भवतीत्याह मते—फलोत्प्रेक्षायामित्यादि। तस्य फलस्य यदेव लोकस्थित्या कारणं तदेवोत्प्रेक्षणनिमित्तम्।

---

१. लेपनादि—वि०, भा२, भा३। २. तस्य—अ० नि० पुस्तकयोर्नास्ति।

रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥६०॥

अत्राश्व[1]परिवर्तन[2]फलस्योत्तरदिग्गमनं कारणमेव निमित्तमुपात्तम् । तदसावुत्प्रेक्षायाः कक्ष्याविभागः प्रचुरतया[3] स्थितोऽपि लक्ष्ये दुरवधारत्वादिह न प्रपञ्चितः । [4]तस्याश्चेवादिशब्दवन्मन्येशब्दोऽपि प्रतिपादकः । किंतूत्प्रेक्षासामग्र्यभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति । यथोदाहृतं प्राक् । 'अहं त्विन्दुं मन्ये [5]त्वदरिविरह' इत्यादि ।

रथ में जुते हुए पुराने घोड़ों को बदलने के लिए सूर्य श्रेष्ठ घोड़ों की जन्मभूमि उत्तर दिशा की ओर चल दिया । ६०॥

यहाँ 'घोड़ों का बदलना' फल का 'उत्तर दिशा की ओर प्रस्थान' कारण ही निमित्त है जो उपात्त है ।

इस प्रकार उत्प्रेक्षा का श्रेणीविभाग यद्यपि बहुत अधिक है पर उदाहरण (लक्ष्य) में समझ पाना कठिन है अतः यहाँ विस्तार नहीं किया गया है । इस (उत्प्रेक्षा) का 'इव' आदि शब्द की भांति 'मन्ये' (मुझे लगता है) शब्द भी वाचक है । किन्तु उत्प्रेक्षा की सामग्री न रहने पर 'मन्ये' शब्द का प्रयोग वितर्क ही प्रतिपादित करता है, जैसा कि पहले 'मैं तो चन्द्र को समझता हूँ कि तेरे शत्रुओं के विरह' (४२) इत्यादि में उदाहरण देकर बताया था ।

तच्चेन्नोपादीयते तदोत्प्रेक्ष्यमाणं फलं कस्य फलतयोक्तं स्यात् । अतः फलोत्प्रेक्षायां निमित्तोपादाननियम एव । तदिदमुदाहृत्य दर्शयति—**रथस्थितानामिति** । अत्रोत्तरदिशस्तुरगोत्तमोत्पत्तिभूमित्वात् तद्गमनं पुरातनतुरगपरिवर्तनहेतुः । तदेव चोत्प्रेक्षणनिमित्तम् । तदनुपादाने परिवर्तनमुत्प्रेक्ष्यमाणं कस्य फलं स्यात् ? तदिदमभिप्रेत्याह—**अत्र परिवर्तनस्येत्यादि** । अनेनाशीतिविधत्वेन दृष्टेषु प्रभेदेषु पुनः केषाञ्चित् पातो दर्शितः । तथाहि उपात्तनिमित्ता ये षोडशभेदास्तेषां प्रतिस्वं हेतुस्वरूपफलोत्प्रेक्षणरूपत्वेऽष्टचत्वारिंशत् । अनुपात्तनिमित्तके तु षोडशके हेतुफलरूपताभावात् स्वरूपोत्प्रेक्षैकरूपै(तै?)वेति षोडशैव । अतः षट् पञ्चाशदेव प्रभेदाः । यदित्थमियमुत्प्रेक्षातिसूक्ष्मेक्षिकया प्रपञ्चिता ।

---

1. अश्व°—शा० ना० पुस्तकयोर्नास्ति, शा १ लेखोऽत्र भग्नः ।
2. परिवर्तनस्य—नि० ।
3. प्रचुरः—ना० ।
4. अस्याश्चे°—शा० ।
5. त्वदरिविरह°—अ० नास्ति ।

एवमध्यवसायस्य साध्यतायामुत्प्रेक्षां निर्णीय सिद्धत्वेऽतिशयोक्तिं लक्षयति—

**अध्यवसितप्राधान्ये त्वतिशयोक्तिः ॥सू० २२॥**

इस प्रकार अध्यवसाय की साध्यावस्था में उत्प्रेक्षा निश्चित करने के बाद सिद्धावस्था में अतिशयोक्ति का लक्षण प्रस्तुत करते हैं—

अध्यवसित की प्रधानता हो तो अतिशयोक्ति होती है ।सू० २२॥

तत्र हेतुमाह—तदसावित्यादि । कक्ष्याविभागः जातिगुणादिरूपतया स्थितः प्रचुरस्थितोऽपि अनाकुलन्यायेन तया प्रभूतवृत्तिरपि लक्ष्ये दुरवधारत्वात् उत्तानधियां लक्ष्ययोजनान्तमशक्याधिगमत्वात् प्रपञ्चित इत्यर्थः ।

अथ मन्येप्रमुखस्य शब्दस्य सम्भावनाद्योतकत्वेऽपि तद्योगमात्रेणोत्प्रेक्षाभ्रमो न कार्य इति व्युत्पादयति—अस्याश्चेत्यादि । उत्प्रेक्षासामग्र्यभाव इति अप्रकृतगतगुणतयाभिसम्बन्धादप्रकृतत्वेन प्रकृतसम्भावनमुत्प्रेक्षासामग्री । तदभावे वितर्को नूनमित्यभ्यूहमात्रम् । तदिदमनुस्मारयति—यथोदाहृतं प्रागित्यादि । अत्र संग्रहश्लोकाः—

गुणक्रियाभिसम्बन्धात् प्रकृते प्रकृतात्मना ।
संभावनं स्यादुत्प्रेक्षा वाच्येवाद्यैः परान्यथा ॥
जातिक्रियागुणद्रव्योत्प्रेक्षणात् सा चतुर्विधा ।
भावाभावाभिमानत्वे जात्यादेः साष्टधा पुनः ॥
गुणक्रियानिमित्तत्वे ज्ञेया षोडशधा तथा ।
द्वात्रिंशच्च निमित्तस्योपादानादन्यथा स्थितेः ॥
हेतौ स्वरूपे चोत्प्रेक्ष्ये फले षण्णवतिः पुनः ।
द्रव्ये हेतुफलात्मत्वासम्भवात् तद्भिदा च्युतिः ॥
तथा प्रतीयमानाया निमित्तस्यानुपग्रहः ।
नापि स्वरूपं तैर्भेदैस्तस्मान्न्यूना भवेदियम् ॥
क्वचिच्छ्लेषेण धर्मांशगतेनैषा न बाध्यते ।
उपमोपक्रमाप्येषा भवेत् सापह्नवापि च ॥

अथोत्प्रेक्षां निगमयन्नतिशयोक्तिं सङ्गतिपुरस्कारेण प्रस्तौति—एवमध्यवसायस्येति । सिद्धत्व इति अध्यवसितस्य विषयिणः प्राधान्ये अध्यवसायस्य सिद्धत्वम् । अथ सूत्रम्—

"अध्यवसितस्य प्राधान्ये त्वतिशयोक्तिः" ॥

अध्यवसाने त्रयं [1]संभवति—स्वरूपं, विषयो विषयी च। विषयस्य हि विषयिणा[2] निगीर्णत्वेऽध्यवसायस्य स्वरूपोत्थानम्। तत्र साध्यत्वे स्वरूपप्राधान्यम्। सिद्धत्वे[3]ऽध्यवसितप्राधान्यम्। विषयप्राधान्यमध्यवसाये नैव संभवति। अध्यवसितप्राधान्ये चातिशयोक्तिः। अस्याश्च पञ्च प्रकाराः। भेदेऽभेदः। अभेदे भेदः। संबन्धेऽसंबन्धः। असंबन्धे संबन्धः। कार्यकारणपौर्वापर्यविध्वंसश्च।

[4]तत्र भेदेऽभेदो यथा—

अध्यवसाय में तीन हो सकते हैं—स्वरूप, विषय तथा विषयी। विषयी-उपमान जब विषय-उपमेय का अन्तर्निगरण कर लेता है तो स्वरूप का उत्थान होता है। इसकी साध्यावस्था में स्वरूप की प्रधानता होती है। सिद्धावस्था में अध्यवसित—विषयी—की प्रधानता होती है। अध्यवसाय में विषय की प्रधानता सम्भव ही नहीं है। और अध्यवसित-विषयी की प्रधानता हो तो अतिशयोक्ति होती है। इसके पाँच भेद हैं। (१) भेद रहने पर अभेद। (२) अभेद होने पर भेद। (३) सम्बन्ध होने पर असम्बन्ध। (४) असम्बन्ध होने पर सम्बन्ध तथा (५) कारण और कार्य के पूर्वापरभाव का विपर्यय।

इनमें से भेद होने पर अभेद का उदाहरण—

उत्प्रेक्षातिशयोक्त्योर्विषयं विभङ्क्तुमाह—अध्यवसाये त्रयमित्यादि। स्वरूपमध्यवसानव्यापारात्मकम्। विषयः प्रकृतोऽर्थः, विषयी त्वप्रकृतः। तत्राध्यवसायस्वरूपमुत्प्रेक्षाप्रस्तावे विवेचितम्। प्रतीतिवैशद्याय स्मारयति—विषयस्य हीत्यादि। अन्तर्नीतत्वे निगीर्णत्वे। तत्रोत्प्रेक्षाविषयं विभजति—सिद्धत्वेऽध्यवसितप्राधान्यमिति। अध्यवसितो गुणीकृताध्यवसायो विषयी। विषयस्तु प्राधान्यं नार्हतीत्याह—विषयप्राधान्यमिति। नैव सम्भवतीति विषयस्य विषयिणा निगीर्णस्य स्वरूपप्रतीतिरेव तिरोधीयते। प्राधान्यसम्भवः कुत इति भावः। अतिशयोक्तिलक्षणं निगमयति—अध्यवसितप्राधान्ये चेति। तद्भेदानुद्दिशति—तस्याश्चेत्यादि।

क्रमेणोदाहरणानि।

---

१. भवति—अ०। २. °णान्तर्निगी°—नि०।

३. सिद्धत्वे त्वध्य°—अ० नि०।

४. अत्र—शा० ना० शा १।

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥६१॥

अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदः[१] । अभेदे भेदो यथा—

अण्णं लडहत्तणअं अण्णाविअकावि[२] वत्तणच्छाआ ।
[३]सामा सामण्णपआवइणो रेहच्चिअ[४] ण होइ ॥६२॥
[अन्यल्लटभत्वमन्यैव च कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥]

अत्र [५]लडहत्वादीनामभेदेऽप्यन्यत्वेन भेदः । यथा वा[६]—

विना पानी में कमल, कमल पर दो नील कमल, ये सब स्वर्णलता पर । और वह है सुकुमार तथा सुन्दर । कौन सी है यह उपद्रव की घटा ? ६१॥

यहाँ मुख आदि का कमलादि के साथ भेद होने पर भी अभेद (वर्णित) है । अभेद होने पर भेद का उदाहरण—

दूसरी है चातुरी और दूसरी है शील की कमनीयता ! यह श्यामा सबको रचने वाले ब्रह्मा की रचना हो ही नहीं सकती ॥६२॥

यहाँ 'लडहत्त्व' (चातुरी या प्रौढ़ि) आदि का अभेद होने पर भी 'दूसरी है' के रूप में भेद (बताया गया) है । अथवा जैसे—

कमलमनम्भसीति । अत्र मुखनयनदेहयष्टिलक्षणान् विषयान् निगीर्य कमलकुवलयकनकलतालक्षणाः विषयिणस्तदभेदेनाध्यवसिताः ।

भेदेऽभेदं विवृणोति—अत्र मुखादीनामित्यादि । अंणं लडहेति ।

अन्यल्लटहत्वमन्यैव कापि सुन्दरच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥

लटहत्वमुपौढत्वम् । अभेदे भेदं दर्शयति—अत्र लटहेत्यादि । अत्राभेदे भेदो धर्मनिष्ठ एकविषयतया च दर्शितः । धर्मिनिष्ठतया वा । भिन्नविषयतया च दर्शयितुमाह—यथा वेति । णाराअणोंतीति ।

---

१. अपि—अ० नि० पुस्तकयोर्नास्ति । २. अन्यापि च—छायान्तरम् । अन्या कापि—काव्यप्रकाशसंकेते छाया ।

३. सा मा शङ्के यदि वा श्यामा—छायान्तरम् ।

४. रेखा च न—छायान्तरम् । ५. लटभादीनाम्—शा० ना० शा १ ।

६. वा—शा० नास्ति ।

मग्गिअलद्धम्मि बलामोडिअचुंबिएँ अप्पणा अ उवणमिए ।
एक्कम्भि पिआहरए अण्णोण्णा होंति रसभेआ[१] ॥६३॥
[मार्गितलब्धे बलात्कारचुम्बिते आत्मना चोपनीते ।
एकस्मिन्नपि प्रियाधरे अन्येऽन्ये भवन्ति रसभेदाः ॥]

[२]अत्राप्यभिन्नस्यापि [३]प्रियाधररसस्य विषयविभागेन [४]भेदेनोपनिबन्धः संबन्धेऽसंबन्धो यथा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः
[५]स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः[६] ।
[७]एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥६४॥

प्रेयसी के एक ही अधर में, जिसे काफी खोजने के बाद पाया हो, जिसका बलात् चुम्बन लिया हो तथा जो स्वयं समर्पित हो, दूसरे-दूसरे रसों का आस्वाद मिलता है ।६३॥

यहाँ भी प्रेयसी का अधर रस भिन्न नहीं है पर उसका विषयविभाग के आधार पर भिन्नरूप में उल्लेख हुआ है । सम्बन्ध होने पर भी सम्बन्ध न होने का उदाहरण—

ब्रह्मा के मन में (इस) तन्वी की शरीर-रचना करते समय न जाने कौन सी बात सूझी थी कि उन्होंने सुन्दरता की सामग्री के खर्च की परवाह न की, स्वयं महान् कष्ट उठाया, चैन से स्वच्छन्द जीवन बिताते हुए मनुष्य के लिए चिन्ता की अग्नि जला दी और यह बिचारी भी खुद मारी गई क्योंकि अपने गुणों के अनुरूप पति का अभाव है ।६४॥

नारायण इति परिणतवयोभिः श्रीवल्लभ इति तरुणीभिः ।
बालाभिः पुनः कौतुकेन एवमेव दृष्टः ॥

इत्यत्र परिणतवयस्कानां श्रीवल्लभत्वाद्यभेदेऽपि नारायण इत्येव भेदेन

---

१. ना० सं० शा०पुस्तकेषु (?) 'नारायण इति ···' पद्यमुपलभ्यते ।
२. अपि— अ० नि० पुस्तकयोर्नास्ति ।
३. प्रियाधररसस्य–शा०, ना०, शा१ नास्ति । ४. भेदोपनिबन्धः–अ० ।
५. स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः—अ० नि० ।
६. चिन्ताज्वरो–शा१ । ७. एषापि स्वगुणानुरूपरमणा°–अ० नि० ।

अत्र लावण्यद्रविणस्य व्ययस्य[1] संबन्धेऽप्यसंबन्धस्तन्वीलावण्यप्रकर्ष-प्रतिपादनार्थं[2] निबद्धः। यथा वा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु[3] विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोतिगमिदं[4] रूपं पुराणो विधिः[5] ॥६५॥

अत्र पुराणप्रजापतिनिर्माणसंबन्धेऽप्यसंबन्ध उक्तः। असंबन्धे संबन्धो यथा—

यहाँ सुन्दरता की सामग्री का व्यय (ख़र्च) से सम्बन्ध होने पर भी सम्बन्ध का न होना, तन्वी के सौन्दर्य को उत्कृष्ट सिद्ध करने के लिए, बताया गया है। अथवा जैसे—

क्या इस (उर्वशी) की सृष्टि का प्रजापति बना था छवि देने वाला चंद्र, अथवा केवल शृंगार रस का स्वरूप स्वयं मदन अथवा वसन्त मास? क्योंकि वेदों का अभ्यास करने से कुंठित दिमाग वाला, विषयों से विमुख, बुड्ढा ब्रह्मा ऐसे सुन्दर रूप की रचना कैसे कर सकता है? ६५॥

यहाँ बुड्ढे ब्रह्मा का रचना से सम्बन्ध होने पर भी सम्बन्ध नहीं बताया गया है। सम्बन्ध न होने पर सम्बन्ध का उदाहरण—

दृष्टस्तथैवाभिरुचेः। तरुणीनां नारायणत्वाभेदेऽपि श्रीवल्लभ इत्येव, तथैवार्थित्वात्। बालानां तु यत् किञ्चिन्नूतनवस्तु द्रष्टव्यमित्येव, तथा व्युत्पत्तेः। यद्वा प्रत्येकं रुच्यर्थित्वव्युत्पत्तयो भेददृष्टौ निमित्तम्। प्रपञ्चितं चेदमुल्लेखप्रस्तावे। तदिदमभिसन्धायाह—अत्राभिन्नस्यापीति। अभिन्नस्य धर्मिण इति शेषः। विषयविभागेन परिणतवयस्कादि रूपेण।

लावण्येत्यत्र सम्बन्धेऽसम्बन्धः। अत्रैकनिर्मातृनिष्ठतया धर्मसम्बन्धेऽसम्बन्धः। अथ भिन्ननिर्मातृनिष्ठतयापि दर्शयितुमाह—यथा वेति। अस्याः सर्गेति। शृङ्गारैकरस इति प्रत्येकमभिसंबध्यते। पुराणो मुनिर्नरसखः। पुष्पं प्रवा-

---

1. व्ययसंबन्ध—नि०। व्ययस्य—अ० नास्ति।
2. °प्रदर्शनार्थम्—अ०। 3. स—अ०।
4. मनोहर°—अ० नि०।
5. मुनिः—अ० नि०।

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥६६॥

अत्र संभावनया संबन्धः । [1]यथा वा—

दाहोऽम्भःप्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपलतिकाः[2] पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां [3]त्वन्मार्गवातायने
हस्तच्छत्र-[4]निरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥६७॥

अत्र [5]दाहादीनामम्भःप्रसृत्याद्यैरसंबन्धेऽपि संबन्धः सिद्धत्वेनोक्तः ।

अगर फूल प्रवाल मणि पर रखा हो अथवा मौक्तिकमणि शुभ्र विद्रुम मणि पर स्थित हो तभी उस (पार्वती) के ताँवे के समान ओठों पर फैली हुई कान्ति वाले शुभ्र मन्दहास का अनुकरण हो सकेगा ।६६॥

यहाँ सम्भावना के द्वारा सम्बन्ध (बताया गया) है । अथवा जैसे—

(तुम्हारे वियोग में मालती के शरीर का) ताप पानी के प्रवाह को सुखा देता है, बढ़ते हुए आँसू नालियों मे वहने लायक हो गये हैं, और आहें काँपती हुई, जलने वाली लौ हैं, शरीर पीलेपन में डूबा हुआ है, और क्या कहूँ, सारी रात तुम्मारे मार्ग की ओर बने झरोखे में हाथ के छाते से चाँदनी को रोककर वह बैठी रहती है ।६७॥

यहाँ ताप आदि का पानी के प्रवाह आदि के साथ सम्बन्ध न होने पर भी सम्बन्ध का सिद्धरूप में वर्णन हुआ है ।

लेति । अत्र पुष्पप्रवालादिकयोः साक्षादसम्बन्धेऽपि यदीति सम्भावनया सम्बन्धः, पुष्पकाले प्रवालत्वापगमात् । न च मन्तव्यं सम्भावनायां व्यापारप्राधान्या-दुत्प्रेक्षैवेयमिति । ततोऽनुकुर्यादिति समन्वयवाक्ये अध्यवसितप्राधान्यात् । अत उत्प्रेक्षानुगृहीतेयमतिशयोक्तिः । तदिदमभिसन्धायाह—अत्र सम्भावनया सम्बन्ध इति ।

अथोत्प्रेक्षानुग्रहमन्तरेणाप्यसम्बन्धे सम्बन्धमुदाहरति—दाहोऽम्भः प्रसृति-मिति । अत्र दाहबाष्पश्वासवपुषामम्भःप्रसृतिम्पचत्वप्रणालोचितत्वदीप-

---

1. अथवा—शा० ना० ।
2. कलिका:—अ० नि० ।
3. त्वद्गत्स वातायने—शा० ।
4. निबद्ध—ना० ।
5. तापादी°—ना० ।

[1]कार्यकारणपौर्वापर्यविध्वंसः, पौर्वापर्यविपर्ययात्तुल्यकालत्वाद्वा। [2]विपर्ययो यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ लोचनविषयं [3]त्वया भजता ॥६८॥

तुल्यकालत्वं यथा—

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।
अयमायातः[4] कालो हन्त हताः पथिकगेहिन्यः ॥६९॥

एषु पञ्चसु भेदेषु [5]भेदेऽभेदादिवचनं लोकातिकान्तगोचरम्। [6]अत्र

कारण और काय के पूर्वापरभाव का विध्वंस, पूर्वापरभाव को उलट देने (विपर्यय) से अथवा एक समय में होने से, होता है। विपर्यय का उदाहरण—

मालती के हृदय में पहले कामदेव ने आसन जमा लिया और अरे माधव ! बाद में उसकी आँखों के आगे पड़कर तूने ।६८॥

एक समय में (कारण तथा कार्य का) होना जैसे—

मेघ घुमड़ते चले जा रहे हैं, जंगल का पवन कुटज, अर्जुन और नीप की सुरभि से भरा है। यह आ गया है समय। उफ ! पथिक की स्त्रियाँ मारी गईं ।६९॥

इन पाँच भेदों में भेद रहने पर अभेद आदि का वर्णन अलौकिक होता है।

कलिकाप्रेङ्खोलनपाण्डिममज्जनेषु सम्बन्धाभावेऽपि सिद्धत्वेनोक्तिः। तदेतदाह— अत्र दाहादीनामित्यादि। कार्यकारणपौर्वापर्यविध्वंसे द्वैविध्यमाह—कार्यकारणेत्यादि। विपर्ययः कार्यस्य पूर्वकालभाविता।

हृदयमिति। अत्र हृदयस्य दयिताधिष्ठानं कुसुमचापं बाणाधिष्ठानस्य कारणम्। कारणं च नियतपूर्वकालभावि। तदिहान्यथोपन्यस्तमिति पौर्वापर्यविपर्ययः।

अविरलेति। नीपः कदम्बः। प्रावृडायानं पथिकगेहिनीमृतिकारणम्। अत्र त्वायातो मृता इति निष्ठाभ्यां तयोः समकालता। ननु भेदेऽभेदादि-

[1] कार्यकारणयोः पौर्वापयविध्वंस—इति वि०, भा२, मा३ पाठानुसारम्।
[2] पौर्वापर्यविपर्ययो—अ०।
[3] पतता भवता—ना०। त्वया पतता—शा०।
[4] अयमागतश्च—अ०। [5] भेदे—ना० नास्ति।
[6] अत एव चात्रातिशयाख्यं—नि०।

चातिशयाख्यं यत्फलं प्रयोजकत्वान्निमित्तं तत्राभेदाध्यवसायः। तथा हि 'कमलमनम्भसि' इत्यादौ वदनादीनां [1]कमलाद्यैर्भेदेऽपि वास्तवं सौन्दर्यं, कविसमर्पितेन सौन्दर्येणाभेदेनाध्यवसितं, भेदेऽभेदवचनस्य निमित्तम्। [2]तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम्। न तु [3]वदनादीनां [4]कमलादिभिरभेदाध्यवसायो योजनीयः। अभेदे भेद [5]इत्यादिप्रकारेष्वव्याप्तेः। तत्र हि 'अण्णं लडहत्तणअं' इत्यादौ साति-

इसका (अत्र) जो अतिशय रूप फल है, साधक होने के नाते वही निमित्त है उसी के साथ अभेदाध्यवसाय होता है। उदाहरण के लिए 'विना पानी में कमल'··· (श्लोक ६१) इत्यादि में मुखादि का कमलादि से भेद होने पर भी वस्तुगत सौन्दर्य का कवि द्वारा निर्मित सौन्दर्य के साथ अभेदाध्यवसाय हुआ है, (वही) भेद होने पर भी अभेद-वर्णन का निमित्त है। और यहाँ अध्यवसाय सिद्ध है (साध्य नहीं है) अतः अध्यवसित की प्रधानता है। मुखादि का कमलादि के साथ अभेदाध्यवसाय नहीं मानना चाहिए क्योंकि इससे तो 'भेद न होने पर भी होना' इस प्रकार के भेदों में लक्षण नहीं घटेगा। उन भेदों में

कथनमसङ्गतमित्यत आह—एषु पञ्चस्विति। लोकातिक्रान्तगोचरं लोकातिशायित्वलक्षणं व्यङ्ग्यं गोचरयतीत्यर्थः। अतो भेदेऽभेदादिरूपो मुख्योऽर्थो न विवक्ष्यत इति यावत्। ननु भेदेऽभेदाध्यवसायो लक्षणमतिशयोक्तेः। तदभेदे भेद इत्यादावव्यापकमित्यत आह—अत्रातिशयाख्यमित्यादिना। यदिह भेदेऽभेदादिरूपाया अतिशयोक्तेर्निमित्तभूतं प्रयोजकमतिशयाख्यं फलं तत्राभेदाध्यवसायः, न तु फलिनोः। तदिदमुपदर्शयति—तथा हीत्यादि। वदनादीनां यद् वस्तुवृत्तासिद्धं सौन्दर्यं तत् कविसमर्पितेन कमलादिसौन्दर्येण सहाभेदेनाध्यवसितम्। तद् भेदेऽभेदादिवचनस्य निमित्तम्, न तु कमलमुखादिकयोरभेदाध्यवसायो योजयितुं शक्यः। तथात्वे सत्यव्याप्तिदोषः स्यादित्यत आह—अभेदे भेद इत्यादीति। आदिशब्दात् सम्बन्धेऽसम्बन्धपरिग्रहः। प्रकारेष्विति बहुवचनं तदवान्तरभेदपरम्। अभेदे वास्तवे यदा भेदकथनं न हि तदा फलिनोरभेदाध्यवसायः। फलं तु तत्राप्यभेदेनैवाध्यवसीयते इत्याह—अंणं लडहंतणअं इत्यादाविति। अंणं लडहंतणअं इत्यादौ हि यद् वस्तु-

---

१. कमलाद्यैर्भेदेऽपि—अ० पुस्तके नास्ति। २. अत्र—ना०।
३. कमलादीनां वदनादिभिरभेदा°—शा० ना०।
४. कमलादिभिरध्यवसायो—ना०। ५. इत्यादिषु प्र°—नि०।

शयं लडहत्वं[1] निमित्तभूतमभेदेनाध्यवसितम्। एवमन्यत्रापि[2] ज्ञेयम्। तदभिप्रायेणैवाध्यवसितप्राधान्यम्। प्रकारपञ्चकमध्यात्कार्यकारणभावेन यः प्रकारः स कार्यकारणताश्रयालंकारप्रस्तावे प्रपञ्चार्थं लक्षयिष्यते। [3]एवमध्यवसायाश्रयमलंकारद्वयमुक्त्वा गम्यमानौपम्याश्रया अलंकारा इदानीमुच्यन्ते। तत्रापि पदार्थवाक्यार्थगतत्वेन तेषां द्वैविध्येऽपि[4] पदार्थगतमलंकारद्वयमुच्यते[5]—

तो (तत्र हि) 'दूसरी है चातुरी…' (श्लोक ६२) आदि में अतिशय से युक्त 'चातुरी' निमित्तभूत है जिसका अभेदाध्यवसाय होता है। इसी प्रकार दूसरे उदाहरणों में भी समझ लेना चाहिये। इसी अभिप्राय को लेकर ही अध्यवसित की प्रधानता मानी गई है। पाँच भेदों में से कार्यकारणभाव के आधार पर जो भेद है उसका कार्यकारणभाव पर आश्रित अलंकारों के प्रकरण में विस्तार से विवेचन किया जाएगा।

इस प्रकार अध्यवसायमूलक (उत्प्रेक्षा तथा अतिशयोक्ति इन) दो अलंकारों को बताकर अब गम्यमान औपम्य (सादृश्य) पर आश्रित अलंकारों को बताया जा रहा है। इन अलंकारों के पदार्थगत और वाक्यार्थगत के रूप में दो भेद होते हैं। इनमें से पहले पदार्थगत अलंकारों का निरूपण किया जा रहा है।

वृत्तसिद्धं लटहत्वं यच्चान्यत्वेन कविसमर्पितं सातिशयं न खलु तयोर्भेदः कश्चित् किन्तु सामान्यप्रजापतिनिर्माणकविसमर्पितनिर्माणयोरेव फलिनोर्भेदः। अयं न्यायः सम्बन्धेऽसम्बन्ध इत्यत्रापि सम इत्याह—एवमन्यत्रेति। तत्रापि खलु लावण्यद्रविणेत्यादौ वेधसो लावण्यद्रविणसम्बन्धेऽप्यसम्बन्धः केवलं, न पुनस्तन्व्यां नैसर्गिकलावण्यकविसमर्पितवेधःसम्बन्धिलावण्ययोरसम्बन्धः। एवमस्याः सर्गविधावित्यत्रापि ज्ञेयम्। अतो लक्षणभूतमध्यवसितं प्राधान्यं फलाभिप्रायेणैवेत्याह—तदभिप्रायेणैवेत्यादि।

अथ कार्यकारणभावलक्षणे प्रकारे पुनर्विवेचयिष्यमाणे पौनरुक्त्यशङ्कां शमयितुमाह—प्रकारपञ्चकेत्यादि। कार्यताश्रयत्वात् तत्रापि सङ्गतिः, प्रपञ्चार्थत्वान्नानर्थक्यमिति सर्वमवदातम्।

अभेदाध्यवसायो हि फलेऽतिशयनामनि।
न पुनः फलिनोस्तत्राभेदे भेदो न सिध्यति॥

---

१. लटभात्वम्—ना० शा०। २. अपि—शा० ना० शा१ नास्ति।
३. °श्रयेणालं°—अ०। ४. अपि—नि० नास्ति। ५. °द्वयं क्रमेणो°—अ०

**औपम्यस्य[1] गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसंबन्धे तुल्ययोगिता ।।सू० २३।।**

इवाद्यप्रयोगे ह्यौपम्यस्य गम्यत्वम् । तत्र प्राकरणिकानामप्राकरणिकानां वार्थानां[2] समानगुणक्रियाभिसंबन्धे[3] अन्वितार्था[4] तुल्ययोगिता । यथा—

[5]सञ्जातपत्रप्रकराञ्चितानि समुद्वहन्ति स्फुटपाटलत्वम् ।
विकस्वराण्यर्ककरप्रभावाद्दिनानि पद्मानि च वृद्धिमीयुः ।।७०।।

औपम्य के प्रतीयमान होने पर पदार्थगत के रूप में प्रस्तुतों अथवा अप्रस्तुतों का समान धर्म से सम्बन्ध होने पर तुल्ययोगिता होती है ।सू० २३।।

'इव' आदि (उपमावाचक शब्दों) का प्रयोग न होने पर ही औपम्य प्रतीयमान (कहलाता) है । यहाँ प्रस्तुत अथवा अप्रस्तुत अर्थों के समान गुण तथा क्रिया के साथ होने से तुल्ययोगिता (शब्द) सार्थक है । उदाहरण—

(घाम से बचने के लिए) तने हुए छातों से सुशोभित प्रफुल्ल पाटल वृक्षों वाले, सूर्य की किरणों के प्रभाव से देदीप्यमान दिन, और सुन्दर नवीन पत्तों के

अथाध्यवसायमूलमलङ्कारद्वयं निगमयन् धर्मान्तरमधिचिकीर्षुराह—**एवमध्यवसायाश्रयेणेत्यादि** । गम्यमानौपम्याश्रयेष्वपि यन्न्यायात् प्राथम्यमर्हति तद् द्वयमधिकरोति—**तत्रापि पदार्थेत्यादिना** । तत्र तुल्ययोगितार्थं सूत्रम्—

"औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता" ।

औपम्यस्य गम्यत्वे, पदार्थगतत्वेनेत्यधिकारद्वयम् । अन्यत्तु लक्षणम् । व्याचष्टे—**इवाद्यप्रयोग इत्यादि** । प्राकरणिकानामप्राकरणिकानां वेति विषयद्वयम् । गुणः क्रिया चेति धर्मद्वयम् । अतश्चातुर्विध्यमनुसन्धेयम् । प्राकरणिकेषु गुणाभिसम्बन्धः क्रियाभिसम्बन्धश्च । अप्राकरणिकेष्वपि तथेति । समानगुणक्रियासम्बन्धो हि तुल्ययोगिता । तामिमां निरुक्तिमाविष्करोति—**अन्वितार्थेति** । अन्वितार्था अन्वर्था । **सञ्जेति** । दिनानि सञ्जानामात-

---

[1]. औपम्यगम्यत्वे—ना० शा१ ।
[2]. प्राकरणिकानामर्थानामप्राकरणिकानां वा समान°—शा० ना० । अर्थानाम्—शा१ नास्ति । [3]. °क्रियासम्बन्धे—नि० ।
[4]. अन्वितार्थापि—भा०, भा १ पाठानुसारम् ।
[5]. सञ्जात—अ० ।

अत्र ऋतुवर्णनस्य प्रक्रान्तत्वाद्दिनानां पद्मानां च प्रकृतत्वम्[1]। वृद्धिगमनं क्रिया। एवं गुणेऽपि। यथा—

योगपट्टो जटाजालं तारवी त्वङ् मृगाजिनम्।
उचितानि [2]तवाङ्गेषु यद्यमूनि तदुच्यताम् ॥७१॥

[3]अत्रोचितत्वं गुणः। अप्राकरणिकानां[4] यथा—

धावत्त्वदश्वपृतनापतितं मुखेऽस्य
निर्निद्रनीलनलिनच्छदकोमलाङ्ग्या।
भग्नस्य गूर्जरनृपस्य रजः कयापि
तन्व्या तवासिलतया च यशः प्रमृष्टम् ॥७२॥

समूह से व्याप्त, चटक लाल रंग वाले, सूर्य की किरणों के प्रवाह से विकसित कमल वृद्धि को प्राप्त हो गए ॥७०॥

यहाँ ग्रीष्म ऋतु के वर्णन का प्रकरण है अतः दिन तथा कमल दोनों प्रकृत हैं। 'वृद्धि को प्राप्त होना' (इन दोनों में समान) क्रिया है। इसी प्रकार गुण में भी (सम्बन्ध होता है) जैसे—

योग-पट्ट, जटा-समूह, वल्कल तथा मृग-चर्म ये यदि तुम्हारे अंगों के लिए उचित हो तो बताओ ।७१॥

यहाँ 'उचित होना' (समान) गुण है। अप्रस्तुतों का (समान धर्म अर्थात् क्रिया तथा गुण से सम्बन्ध के क्रमशः उदाहरण) जैसे—

(हे राजन्) तुम्हारी दौड़ती हुई अश्व सेना द्वारा गुजरात के उस पराजित नरेश के मुख पर डाली हुई धूल को विकसित नील कमल के पत्तों-जैसी कोमल अंगों वाली किसी नारी ने पोछा था और तुम्हारी खंगलता ने उसकी कीर्ति को ।७२॥

पत्राणां प्रकरैरञ्चितानि। पद्मानि तु सञ्जातानां सुजातानां पत्राणाम्। पाटलेत्येकत्र वर्णः। अन्यत्र पुष्पम्।

प्राकरणिकार्थविषयतां क्रियाभिसम्बन्धं च दर्शयति—अत्र ऋतुवर्णनेत्यादि। ऋतुर्ग्रीष्मः। प्राकरणिकेषु गुणाभिसम्बन्धायाह—एवं गुणेऽपीति। योगपट्ट इति। अत्र तपःप्रस्तावाद् योगपट्टादीनां प्रकृतत्वम्। उचितत्वं

---

१. प्रकृतत्वात्—नि०।
२. तवाङ्गस्य—अ०।
३. अत्र—नि० नास्ति।
४. अप्राकरणिकाणाम्—ना०।

अत्र गूर्जरं[1] प्रति नायिकासिलतयोरप्राकरणिकत्वम्[2]। अत्र[3] मार्जनं क्रिया। गुणो यथा—

त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥७३॥

[4]कठोरत्वं गुणः। एवमेषा[5] चतुर्विधा व्याख्याता।

प्रस्तुताप्रस्तुतयोर्व्यस्तत्वे[6] तुल्ययोगितां प्रतिपाद्य समस्तत्वे दीपकमुच्यते—

यहाँ गुर्जर-राजा के प्रति नायिका तथा खंग दोनों अप्रस्तुत हैं। उनकी (समान) क्रिया 'मार्जन' (पोछना) है। गुण जैसे—

(सुन्दरि) तुम्हारे अंगों की कोमलता देखने वाले किस (सहृदय) के हृदय में मालती, चन्द्रकला और कदली की कठोरता व्यक्त नहीं होने लग जाती है? ७३॥

(यहाँ) कठोरता (समान) गुण है। इस प्रकार चार भेदों वाली इस (तुल्ययोगिता) की व्याख्या समाप्त हुई।

गुणस्त्वभावाभिमानरूपतयाभिसम्बन्ध्यते। यद्युचितानि तदुच्यतामित्याक्षेपात्। अनेन गुणक्रिययोर्भावाभावाभिमानरूपं वैचित्र्यमप्यासूचितम्।

धावत्त्वदश्वेति। अश्वपृतनायाः सकाशात् गुर्जरनृपस्य भग्नस्य मुखे पतितं रजः कयापि सानुकम्पया तन्व्या प्रमृष्टम्, यशस्तु तवासिलतया। अप्राकरणिकविषयं क्रियाभिसम्बन्धं दर्शयति—अत्र गुर्जरं प्रतीत्यादि। गुर्जरापेक्षया हि कयापीति निर्देशात् तन्व्या अप्राकरणिकत्वम्। असिलतायास्तु वर्ण्यनायकविषयतया।

त्वदङ्गेति। त्वदङ्गमार्दवं पश्यतः सर्वस्यैव चित्ते मालत्यादीनां कठोरतावभासत इत्यर्थः। अत्र मालत्यादिष्वप्राकरणिकेषु कठोरत्वगुणाभिसम्बन्धः।

तुल्ययोगितां निगमयति—एवमेषेति।

प्रकृतेष्वथवान्येषु ज्ञातव्या तुल्ययोगिता।
गुणक्रियाभिसम्बन्धात् समानादन्वितार्थिका ॥

---

१. गूर्जरनृपं प्रति—अ० ना०।　　२. अप्राकरणिकत्वे—नि०।
३. अत्र—अ० नि० ना० नास्ति।
४. अत्र कठोरत्वं—अ०।　　५. एषा—ना० नास्ति।
६. व्यस्तत्वे—ना० नास्ति। तुल्ययोगितां व्यस्तत्वे—इति शा० पुस्तकस्य योजना।

[1]प्रस्तुताप्रस्तुतानां तु दीपकम् ।।सू० २४।।

[2]औपम्यस्य गम्यत्व इत्याद्यनुवर्तते। प्राकरणिकाप्राकरणिक[3]-मध्यादेकत्र निर्दिष्टः समानो धर्मः प्रसङ्गेनान्यत्रोपकाराद्दीपना[4]-द्दीपसादृश्येन दीपकाख्यालंकारोत्थापकः। तत्रेवाद्यप्रयोगादुपमानोपमेयभावो गम्यमानः। स च वास्तव एव। पूर्वत्र तु[5] शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा वैवक्षिकः, [6]प्राकरणिकत्वाप्राकरणिकत्व[7]-विवर्तित्वादुपमानोपमे-

प्रस्तुतों अथवा अप्रस्तुतों के अलग-अलग रहने पर तुल्ययोगिता अलंकार को बताकर, (उनके) एक साथ रहने पर दीपक (अलंकार) बताया जा रहा है।

प्रस्तुतों तथा अप्रस्तुतों का दीपक होता है। सू० २४।।

'औपम्य प्रतीयमान हो' आदि की अनुवृत्ति है। प्रस्तुत और अप्रस्तुत में से एक में निर्दिष्ट साधारण धर्म प्रसंगतः दूसरे में उपकारक होने से, दीपन करने से, दीपक से समानता के कारण दीपक नामक अलंकार का उत्थापक होता है। यहाँ इव आदि का प्रयोग न होने से उपमानोपमेयभाव प्रतीयमान रहता है और वह (प्रतीयमान उपमानोपमेयभाव) वास्तविक होता है। पहले (तुल्ययोगिता अलंकार) में शुद्ध प्रस्तुत अथवा शुद्ध अप्रस्तुत के रहने से (उपमानोपमेयभाव) विवक्षा पर निर्भर है। क्योंकि उपमानोपमेयभाव प्रस्तुत तथा अप्रस्तुत में (वस्तुतः) रहता है (जबकि तुल्ययोगिता में प्रस्तुत या अप्रस्तुत में से

अथ सङ्गतिपुरस्कारेण दीपकं प्रस्तौति—प्रस्तुताप्रस्तुतयोरित्यादि। अथ सूत्रम्—

"प्रस्तुताप्रस्तुतानां तु दीपकम्" ।।

समानधर्माभिसम्बन्ध इत्याद्यनुषज्यते। अधिकारमनुस्मारयन् व्याचष्टे—औपम्यस्येत्यादिना। इह प्राकरणिका अप्राकरणिकाश्चोपादीयन्ते तेष्वेकतरत्रोपात्तः साधारणो धर्मोऽन्यत्रोपकरोति अतो दीपनरूपादुपकाराद् दीपसदृशोऽयमिति कृत्वा दीपकालङ्कारः। तदिदमुक्तं प्राकरणिकाप्राकरणिकेत्यादिना।

---

१. प्रस्तुतानामप्रस्तुतानां च दीपकम्—अ०।

२. औपम्यगम्यत्वे ना० शा१। ३. °णिकवर्गस्य—अ०। °णिकयोर्मध्यात्—नि०। ४. दीपनाख्याद्—अ०। ५. तु—नि० नास्ति। ६. अत्र प्रा°—नि०। ७. प्रभावितत्वादुप°—अ०। ना० (?)

यभावस्य[1]। अनेकस्यैकक्रियाभिसंबन्धादौचित्यात्पदार्थत्वोक्तिः[2]। वस्तुतस्तु [3]वाक्यार्थत्वे [4]आदिमध्यान्तवाक्यगतत्वेन धर्मस्य [5]वृत्तावादिमध्यान्तदीपकाख्यास्त्रयोऽस्य भेदाः। क्रमेणोदाहरणम्—

[6]रेहइ मिहिरेण [7]णहं रसेण कव्वं[9] सरेण [10]जोव्वणअं।
अमएण धुणीधवओ[11] तुमए[12] णरणाह भुवणमिणं ॥७४॥

केवल एक होता है)। अनेक का एक क्रिया के साथ सम्बन्धरूप औचित्य को कर (दीपकालंकार को) पदार्थगत कहा गया है। वस्तुतः (उपमानोपमेयभाव) वाक्यार्थरूप ही होता है। (साधारण) धर्म के वाक्य के आदि, मध्य तथा अन्त में रहने से इस (दीपकालंकार) के आदिदीपक, मध्यदीपक तथा अंतदीपक इन नामों से तीन भेद हैं।

क्रमशः उदाहरण—

सूर्य से आकाश, रस से काव्य, काम से यौवन, सुधा से सागर और राजन्! तुमसे यह संसार सुशोभित है।७४॥

औपम्यस्य गम्यत्वं प्राग्वदेवेत्याह—तत्रैवाद्यप्रयोगादित्यादि। यश्चात्रोपमानोपमेयभावः स तुल्ययोगितातो विलक्षण इत्याह—स चेत्यादि। वास्तवः प्राकरणिकाप्राकरणिकनिष्ठत्वात्। पूर्वत्र तुल्ययोगितायां वैवक्षिकः, विवक्षया क्लृप्तः। वैवक्षिकत्वे हेतुः—शुद्धप्राकरणिकेत्यादि। शुद्धप्राकरणित्वे ह्युपमानत्वमवास्तवम्। शुद्धाप्राकरणिकत्वे तूपमेयत्वम्। तदिदं विशदीकरोति—प्राकरणिकेत्यादि।

ननु प्रतिस्वं क्रियाभिसम्बन्धे कथं पदार्थगतमित्याह—अनेकस्यैकक्रियेत्यादि। सम्बध्यमानस्य धर्मस्यैकत्वात् पदार्थत्वोपचरणमित्यर्थः। अतो वाक्यार्थगतत्वे वास्तवे त्रैविध्यमुपपद्यत इत्याह वस्तुतस्त्वित्यादि। रेहईति।

राजते मिहिरेण नभः रसेन काव्यं स्मरेण यौवनम्।
अमृतेन धुनीधवलस्त्वया नरनाथ भुवनमिदम्॥

---

१. °भावस्यानेक°—नि०। २. पदार्थगतत्वोक्तिः अ०
३. वाक्यार्थगतत्वम् अ०। ४. तत्रादि°—अ० ना०।
५. प्रवृत्तावादि° अ०। ६. त्वया च नाथ भुवनमिदम्—इत्युत्तरार्धान्ते छायान्तरम्। ७. नह, ८. रसेन—, ९. काव्यं—, १०. जोव्यानहम्—, ११. वलवो—
१२. तुमम्—इत्येतानि पाठान्तराणि शा०।

[राजते मिहिरेण नभो रसेन काव्यं स्मरेण यौवनम्।
अमृतेन धुनीधवस्त्वया नरनाथ भुवनमिदम्॥]
[1]संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मुनेश्च धेनुः[2] ।।७५।।
किवणाण धणं णाआणँ [3]फणमणी केसराइँ सीहाणं।
[4]कुलवालिआणँ [5]थणआ कुत्तो छेप्पंति अमुआणं ।।७६।।
[कृपणानां धनं नागानां फणामणिः केसराः सिंहानाम्।
कुलबालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥]

पल्लव के रंग-जैसी लाल सूर्य-प्रभा ने और (वसिष्ठ) ऋषि की गौ (नन्दिनी) ने दिशाओं को (अपने) संचरण से पवित्रकर दिवस के अवसान में घर की ओर प्रस्थान करना प्रारम्भ कर दिया।७५॥

कृपणों के धन, सर्पों के फणिरत्न, सिंहों के केसर और कुलीन स्त्रियों के स्तनों को उनके जीते जी कैसे छुआ जा सकता है ? ७६ ॥

धुनी सरित्, धवल इह पतिः सागर इत्यर्थः। इदं क्रियाया आदिवाक्यगतत्वादादिदीपकम्।

सञ्चारेति। निलयो गृहम्। अस्तमयश्चर्मपल्लवरागो माणिक्यविशेषः। यो गाढरागः। इदमप्यादिदीपकम्। क्रियायाः प्रथमपदत्वमतन्त्रमिति द्योतयितुं ज्याघातत इति। एतन्मध्यदीपकम्। विद्विषतां वक्त्रेन्दुष्विति मध्ये वाक्ये क्रियाविनिवेशात्।

किवणाणेति।

कृपणानां धनं नागानां फणमणिः केसराणि सिंहानाम्।
कुलपालिकानां च स्तनौ कुतः स्पृश्यन्ते अमृतानाम्॥

---

१. यथा वा—इत्यनन्तरं श्लोकारम्भः अ० पुस्तके।

२. एतच्छ्लोकानन्तरमन्योऽपि श्लोकः अ० पुस्तके उपलभ्यते। स चायम्—
विसमअओ च्चिअ काणवि काणवि वोलेइ अमअणिम्माओ।
काणावि अविसामअम (अ) ओ कालो॥
[विषमय एव केषामपि केषामप्यपक्रामत्यमृतनिर्माणः।
केषामपि विषामृतमयः केषामप्यविषामृतमयः कालः॥]

३. फणा°—अ०। फणामणयः—सं० छायान्तरम्।

४. कुलपालिकानां—सं०। ५. अ थणा—अ०।

एवमेकक्रियं[1] दीपकत्रयं[2] निर्णीतम्। अत्र च यथानेककारकगतत्वे-नैकक्रियं[3]दीपकं, तथानेकक्रियागतत्वेनैककारकमपि[4] दीपकम्। यथा—

साधुनामुपकर्तुं लक्ष्मीं [5]धर्तुं विहायसा गन्तुम्।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥७७॥

अत्रोपकरणाद्यनेकक्रियाकर्तृत्वेन कुतूहलविशिष्टं[6] मनो निर्दिष्टम्। [7]छायान्तरेण तु मालादीपकं [8]प्रस्तावान्तरे लक्षयिष्यते।

इस प्रकार एक क्रिया वाले (उपर्युक्त) तीन दीपकों का निरूपण कर दिया। जैसे यहाँ अनेक कारकों में (एक क्रिया के रहने से) एक क्रिया वाला दीपक होता है उसी प्रकार (एक कारक के) अनेक क्रियाओं में रहने पर एक-कारक दीपक भी होता है।

साधुओं का उपकार करने के लिए, लक्ष्मी को अपनी बनाने के लिए, आकाश में उड़ने के लिए और महात्माओं का चरित्र सुनने के लिए किसका मन उत्कंठित नहीं होता है? ७७॥

यहाँ 'उपकार करना' आदि अनेक क्रियाओं के कर्ता के रूप में कुतूहल भरे मन का निर्देश हुआ है।

(श्रृंखलारूप) दूसरी विच्छति से होने वाले मालादीपक का तो लक्षण दूसरे प्रकरण में किया जाएगा।

जीवितानां न स्पृश्यन्त इत्यर्थः। क्रियादीपकत्रयं निगमयति—एवमेकेति। अनयैव नीत्या कारकदीपकमुदाहर्तुमाह—अत्र च यथेत्यादि। साधूनामिति। कारकदीपकत्वं विवृणोति—अत्रोपकरणादीति। मालादीपकं तु प्रस्तावान्तरे भविष्यतीत्याह—छायान्तरेण त्विति।

दीपकं वास्तवौपम्यं प्रकृताप्रकृताश्रयम्।
आदिमध्यान्तवाक्येषु क्रियाकारकभेदतः॥

---

१. क्रियामयम्—अ०।　　२. दीपकं निर्णी°—अ०।
३. °क्रियादीपकं—अ० नि०।　　४. °नैकं कारकम्। यथा—अ०।
५. दृष्टुम्—अ०।
६. कुतूहलश्लिष्टम्—ना०। °विशिष्टमेकं—अ०।
७. शृङ्खलान्तरेण—इति पाठोऽपि ना० पुस्तके।
८. प्रस्तावान्तरेण—शा०।

**वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ॥सू० २५॥**

पदार्थारब्धो वाक्यार्थ इति पदार्थगतालंकारानन्तरं वाक्यार्थगतालंकारप्रस्तावः। तत्र [1]सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे [2]उपमा। वस्तुप्रतिवस्तुभावेनासकृन्निर्देशेऽपि सैव। इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते। असकृन्निर्देशे तु[3] शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वा[4]। आद्यः प्रकारः प्रतिवस्तूपमा।

वाक्यार्थगत के रूप में साधारण धर्म का दो वाक्यों में पृथग् निर्देश रहने पर प्रतिवस्तूपमा होती है ।सू० २५।।

पदार्थ से वाक्यार्थ का आरम्भ होता हैं अतः पदार्थगत अलंकारों के बाद वाक्यार्थगत अलंकारों का प्रकरण आता है। जहाँ सामान्य धर्म का एक बार निर्देश हो तथा इव आदि का उपादान हो वहाँ उपमा होती है। और वस्तु-प्रतिवस्तु भाव के रूप में सामान्य धर्म का एकाधिक बार निर्देश होने पर भी वही (अर्थात् उपमा) होती है। इव आदि का उपादान न हो, और (साधारण धर्म का) एक बार ही निर्देश हो तो दीपक तथा तुल्ययोगिता (अलंकार) होते हैं। पर (साधारण धर्म के) एकाधिक बार निर्देश की स्थिति में वस्तु-प्रतिवस्तु-भाव (शुद्ध सामान्यरूपता) अथवा बिम्बप्रतिबिम्बभाव होता है। पहला रूप (शुद्ध सामान्यरूप) प्रतिवस्तूपमा का है।

अथ वाक्यार्थगतत्वेन प्रतिवस्तूपमां सूत्रयति —

"वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा"। सङ्गतिमाह **पदार्थारब्धेति**। इह नानालङ्कारसन्निपातशङ्कामपनेतुं विषयं विभजति **तत्र सामान्यधर्मस्येत्यादि**। इवादिकमुपादाय सामान्यधर्मस्य सकृन्निर्देश उपमा। यथोदाहृतम् "प्रभामहत्या शिखयेव दीप" इति। इवादिकमुपादाय वस्तुप्रतिवस्तुभावेनासकृन्निर्देशेऽपि सैव। "यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभमिति"। इवादिकमनुपादाय यदा सकृ-

---

१. सामान्यस्य —ना०।

२. उपमा···इवाद्यनुपादाने सकृन्निर्देशे—इयानंशः शा१ पुस्तके न दृश्यते।

३. तु—शा० ना० पुस्तकयोर्नास्ति। ४. वा यथा—शा१।

[1]वस्तु-शब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात्। [2]केवलं काव्यसमयात्पर्यायान्तरेण पृथङ्निर्देशः। द्वितीयप्रकाराश्रयेण दृष्टान्तो वक्ष्यते। तदेवमौपम्याश्रयेणैव प्रतिवस्तूपमा। यथा—

चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि[3]।
आवन्त्य एव निपुणाः सुदृशो [4]रतनर्मणि ॥७८॥

वस्तु शब्द वाक्यार्थ का वाचक है अतः प्रत्यक वाक्यार्थ (प्रतिवस्तु) में उपमा अर्थात् साधर्म्य हो यह (प्रतिवस्तूपमा शब्द का) अनुगत अर्थ लिया जा सकता है। केवल काव्यसिद्धान्त (एक पद का दुबारा प्रयोग नहीं करना चाहिए) के कारण ही भिन्न पर्याय से (साधारण धर्म का) पृथग् निर्देश होता है। (बिम्बप्रतिबिम्बभावरूप) द्वितीय भेद का आधार लेकर दृष्टान्त (अलंकार) बताया जाएगा। अस्तु' (प्रतीयमान) सादृश्य को लेकर ही प्रतिवस्तूपमा होती हैं। जैसे—-

चांदनी का पान करने में चकोरियाँ ही चतुर होती हैं; अवन्ती देश की (सुन्दरियाँ ही) प्रणय-परिहास में निपुण होती हैं।७८॥

न्निर्देशः तदा प्रस्तुताप्रस्तुतानां समस्तत्वे दीपकम्। तथैव व्यस्तत्वे तुल्ययोगिता। तदुभयमपि समनन्तरमेव दर्शितम्। असकृन्निर्देशे तु द्वयी गतिः। शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वा। शुद्धसामान्यत्वं नाम सम्बन्धिभेदमात्राद्धर्मस्य पृथङ्निर्देशः। तथा इवाद्यनुपादाने प्रतिवस्तूपमा।

प्रतिवस्तूपमां निर्वक्ति—वस्तुशब्दस्येत्यादि। वस्तुशब्द इह वाक्यार्थपरः। उपमा तु साम्यम्। प्रतिवाक्यार्थमुपमा भवतीत्यन्वर्थाश्रियणात्।

ननु यदि धर्मस्यासकृन्निर्देशरूपं शुद्धसामान्यरूपत्वं तदा किं पर्यायान्तरेणेत्यत आह—केवलं काव्येत्यादि। उद्देशप्रतिनिर्देशभावाभावे यदा तस्यैव पुनरुपादानं तया पर्यायान्तराभावे अनवीकृतदोषः स्यात् अतः पर्यायान्तरेण पृथङ्निर्देश इति हि काव्यसमयः। सोऽयं प्रतिवस्तूपमाविषयः। अथ धर्म्यपेक्षो बिम्बप्रतिबिम्बभावो यदा तदा दृष्टान्तो वक्ष्यत इत्याह—द्वितीयप्रकारेत्यादि। सादृश्याधिकारमनुस्मारयति—तदेवमौपम्येत्यादि।

चकोर्य एवेति। आवन्त्यः अवन्तीप्रभवाः।

---

1. वस्तुतः—नि०। शा० ना०पुस्तकयोरपि 'तः' उपरिष्टात् निविष्टः।
2. नैकं पदं द्विष्प्रयोज्यं प्रायेणेति केवलं ना०।
3. पानक°—ना०। 4. रतकर्मणि—शा० ना०।

अत्र चतुरत्वं साधारणो धर्म उपमानवाक्ये, उपमेयवाक्ये[१] तु निपुणपदेन निर्दिष्टः। न केवलमियं साधर्म्येण यावद्वैधर्म्येणापि[२]। यथात्रैवोत्त[३]रार्धस्थाने 'विनावन्तीर्न[४] निपुणाः सुदृशो [५]रतनर्मणि' इति पाठे।

**तस्यापि बिम्बप्रतिबिम्बभावतया निर्देशे दृष्टान्तः ॥सू० २६॥**

तस्यापीति[६] न केवलमुपमानोपमेययोः। तच्छब्देन सामान्य[७]-शब्द लक्षितो धर्मः प्रत्यवमृष्टः। अयमपि साधर्म्यवैधर्म्याभ्यां द्विविधः।

यहाँ उपमान वाक्य के चतुरतारूप साधारण धर्म का उपमेय वाक्य म निपुण पद से निर्देश किया गया है। यह (प्रतिवस्तूपमा) केवल साधर्म्य से ही नहीं अपितु वैधर्म्य से भी होती है। जैसे इसी पद के उत्तरार्द्ध में "अवन्ती देश की सुन्दरियों को छोड़ कर (दूसरी) प्रणय-परिहास में निपुण नहीं होती हैं" यह पाठ कर देने पर (वैधर्म्य से प्रतिवस्तूपमा होगी)।

उस (साधारण धर्म) का भी बिम्बप्रतिबिम्बभावरूपता से निर्देश होने पर दृष्टान्त होता है ।सू० २६॥

उसका भी— का अभिप्राय है कि केवल उपमान और उपमेय का ही नहीं (अपितु साधारण धर्म का भी बिम्बप्रतिबिम्ब-भाव आवश्यक है)। 'उस' पद से साधारण धर्म का ग्रहण होता है। यह (दृष्टान्तालंकार) भी साधर्म्य और

धर्मस्य शुद्धसामान्यरूपतां पर्यायान्तरत्वं च दर्शयति—अत्र चतुरत्वमित्यादि। विक्षिप्त्यन्तरायाह न केवलमित्यादि। लाघवाय प्रागुदाहरणमेव वैधर्म्येण दर्शयति—विनावन्तीरिति।

असकृद्धर्मनिर्देश इवादेरनुपग्रहे।
प्रतिवस्तूपमा ज्ञेया प्रतिवाक्यार्थसाम्यतः ॥

अथ दृष्टान्तं सूत्रयति—

"तस्यापि बिम्बप्रतिबिम्बतया निर्देशे दृष्टान्तः" ॥

---

१. उपमानवाक्येन—शा१। उपमानवाक्ये—शा० ना०।
२. °पि दृश्यते—अ; वैयधिकरण्येनापीति—भा० पुस्तकानुसारी पाठः।
३. उत्तरस्थाने—नि०।
४. विनावन्तीस्त्वनिपुणाः—ना०।
५. रतकर्मणि—शा० ना०।
६. तस्यापि न—अ० शा१।
७. सामान्यधर्मः—नि०। सामान्यलक्षणः—अ०।

आद्यो यथा—

अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः।
दैवीं वाचमुपासते हि[1] बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ॥७९॥

अत्र यद्यपि ज्ञानाख्य [2]एको धर्मो निर्दिष्टस्तथापि[3] न [4]तन्निबन्धनमौपम्यं विवक्षितम्। यन्निबन्धनं च विवक्षितं तत्राब्धिलङ्घनादावस्त्येव दिव्यवागुपासनादिना प्रतिबिम्बनम्। द्वितीयो यथा—

वैधर्म्य से दो प्रकार का होता है। प्रथम जैसे—

वानर सैनिकों ने समुद्र को पार अवश्य कर लिया था पर इसकी गहराई को मन्दराचल ही जान पाया है जिसका विशाल शरीर पाताल तक डूबा हुआ है। सुरभारती की उपासना बहुत लोग करते हैं किन्तु सरस्वती का सार तो गुरुकुल में अनुशासित यह मुरारि कवि ही भली भांति समझता है ॥७९॥

यहाँ यद्यपि (जानाति, जानीते पदों से व्यक्त) ज्ञानरूप एक धर्म का निर्देश है किन्तु तन्मूलक सादृश्य विवक्षित नहीं है, जिसके आधार पर विवक्षित है उस 'समुद्र को पार करने' आदि (बिम्ब) में सरस्वती की उपासना आदि द्वारा प्रतिबिम्बिन है ही। दूसरा (वैधर्म्य से) जैसे—

**व्याचष्टे—तस्यापि न केवलमित्यादि। प्रतिवस्तूपमान्यायेन द्वैविध्यमाह—अयमपीति। अब्धिर्लङ्घित इति। गुरुकुलक्लिष्टः नित्योपासनेन तदेकशरणीभूतः। अत्र बहूनां वानरभटैः मुरारिकवेः मन्थाचलेन सह धर्म्यपेक्षो बिम्बप्रतिबिम्बभावः। दिव्यवागुपासनस्याब्धिलंघनेन गुरुकुलक्लिष्टत्वस्य त्वापातालनिमग्नत्वेन च धर्मापेक्षः। ननु जानाति जानीत इति च ज्ञानस्यापृथङ्निर्देशात् कथमिदं दृष्टान्तोदाहरणमित्यत आह—अत्र यद्यपीत्यादि। नैतन्निबन्धनमिति। नहि ज्ञाननिबन्धनमौपम्यं विवक्षितम्, अचले ज्ञानस्योपचारात्। यत्र तु विवक्षा तत्र न किञ्चन न्यूनमित्याह—यन्निबन्धनं चेत्यादि। इदं साधर्म्ये।**

---

१. तु—अ०। च—ना०।
२. ज्ञानाख्यो धर्मो—शा० ना०।
३. अपि—शा१ नास्ति।
४. नैतन्नि°—अ०।

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नोऽरयः[१]।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥८०॥

[२]अत्र निहतत्वादेः स्थानादिना वैधर्म्येण प्रतिबिम्बनम्।

**संभवतासंभवता वा वस्तुसंबन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना ॥सू० २७॥**

प्रतिबिम्बकरणप्रस्तावेनास्या[३] लक्षणम्। [४]तत्र क्वचित्संभवन्नेव वस्तुसंबन्धः स्वसामर्थ्याद्बिम्बप्रतिबिम्बभावं कल्पयति। क्वचित्पुनरन्वय-

आपने (अपना) मन अभिमान की ओर उन्मुख किया ही था कि अधिक क्या हमारे शत्रु नष्ट हो गए। अंधेरा तो तभी तक ठहरता है जब तक सूर्य उदयाचल की चोटी पर नहीं पहुंच जाता ।८०॥

यहाँ 'नष्ट हो जाना' (निहतत्व) आदि (बिम्ब) में (अंधेरे के) 'ठहरना' आदि के द्वारा वैधर्म्य से प्रतिबिम्बन है।

वस्तुओं के सम्भव अथवा असम्भव सम्बन्ध द्वारा प्रतीयमान प्रतिबिम्ब का विधान निदर्शना है ।सू० २७॥

प्रतिबिम्ब के विधान का प्रकरण होने से इस (अलकार) का लक्षण दिया गया है। कहीं पर वस्तुओं का सम्भव (अबाधित) सम्बन्ध ही अपनी सामर्थ्य

**कृतं चेत्यादि। त्वया मनसि गर्वाभिमुखे कृते तत्क्षणमेव द्विषो निहता इत्यर्थः। द्वौ चकारौ क्रिययोरेककालतामाहतुर्यतः। वैधर्म्येण प्रतिबिम्बनं निर्दर्शयति—अत्र निहतत्वादेरित्यादि। निहतत्वं गर्वाभिमुखीकरणं चान्वयमुखेनोक्तम्। तमःस्थानमुदयाद्रिः। मौलित्वं च व्यतिरेकमुखेन, न यावदित्युपन्यासात्। अतो वैधर्म्येण प्रतिबिम्बनम्।**

**बिम्बानुबिम्बन्यायेन निर्देशे धर्मधर्मिणाम्।**
**दृष्टान्तालङ्कृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया ॥**

**निदर्शनां सूत्रयति—**

**"सम्भवतासम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना" ॥**

**सङ्गतिमाह प्रतिबिम्बेति। व्याचष्टे—तत्र क्वचिदित्यादि। वस्तु-**

---

१. नो द्विषः अ०। २. अत्र हि—ना० शा०।
३. °करण°—अ० शा० पुस्तकयोर्नास्ति। ४. अत्र०—अ०।

बाधादसंभवता वस्तुसंबन्धेन प्रतिबिम्बनमाक्षिप्यते। [1]संभवद्वस्तुसंबन्धा[2] यथा—

चूडामणिपदे धत्ते यो देवं रविमागतम्।
सतां कार्यातिथेयीति बोधयन्गृहमेधिनः ॥८१॥

अत्र बोधयन्निति [3]णिचस्तत्समर्थाचरणे प्रयोगात्संभवति वस्तुसम्बन्धः। असंभवद्वस्तुसंबन्धा[4] यथा—

अव्यात्स वो यस्य निसर्गवक्रः स्पृशत्यधिज्यस्मरचापलीलाम्।
जटापिनद्धोरगराजरत्नमरीचिलीढोभयकोटिरिन्दुः ॥८२॥

से बिम्ब-प्रतिबिम्ब-भाव का आक्षेप कर लेता है। और कहीं पर अन्वय की बाधा के कारण वस्तुओं का (परस्पर) सम्बन्ध असम्भव (बाधित) होकर प्रतिबिम्बन का आक्षेप कर लेता है।

सम्भवद्वस्तु-सम्बन्धा (प्रतिवस्तूपमा) जैसे—

गृहस्थों को सज्जनों का अतिथिसत्कार करना चाहिए यह जताते हुए जो (उदयाचल) अभ्यागत सूर्य-देव को मौलिमणि पर धारण करता है।८१॥

यहाँ 'बोधयन्' (जताता हुआ) में णिच् (प्रत्यय) का प्रयोग अनुकूल आचरण करने (के अर्थ) में हुआ है अतः वाक्यार्थों का सम्बन्ध अबाधित है।

असम्भवद्वस्तु-सम्बन्धा (निदर्शना) जैसे—

वह तुम लोगों की रक्षा करें जिसका निसर्ग-कुटिल चन्द्रमा, जिसके दोनों कोने (शिव की) जटा में बंधे हुए सर्पराज की रत्न किरणों से मण्डित हैं, कामदेव के प्रत्यंचा पर चढ़े हुए धनुष की लीला का स्पर्श करता है।८२॥

**सम्बन्धो वाक्यार्थसम्बन्धः। इत्थं चेयं द्विधा—सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा चेति। चूडामणीति। यो गिरिरागतमभ्यागतं रविं सतामातिथेयी अतिथिसत्कृतिः कार्येति बोधयन् धत्ते।**

**योजयति अत्र बोधयन्नितीति। अत्र बोधयन् धत्त इति बोधनसमर्थस्याचारो गिरौ प्रयुक्तः। तस्याचेतनत्वेऽपि कारीषोऽग्निरध्यापयतीतिवत् गिरिर्गृहमेधिनो बोधक्रियासमर्थान् करोतीति तत्समर्थाचरणे णिचः प्रयोगात् सम्भवति वस्तुसम्बन्धः।**

---

१. तत्र संभ°—केवलं नि०। २. °सम्बन्धे—शा०। °सम्बन्धो—ना०।
३. णिचः—अ० नास्ति। ४. °सम्बन्धे—शा०। °सम्बन्धो—ना०।

अत्र[1] स्मरचापसंबन्धिन्या लीलाया वस्त्वन्तरभूतेनेन्दुना स्पर्शनमसंभवल्लीलासदृशीं[2] लीलामवगमयतीत्य-[3]दूरविप्रकर्षात् [4]प्रतिबिम्बकल्पनमुक्तम् । एषापि पदार्थवाक्यार्थवृत्तिभेदाद्द्विविधा[5] । पदार्थवृत्तिः समनन्तरमुदाहृता । वाक्यार्थवृत्तिर्यथा—

त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन [6]पाण्डुरीकरणं विधोः ॥८३॥

यहाँ वस्त्वन्तरभूत चन्द्रमा के द्वारा कामदेव के धनुष से सम्बन्धित लीला का स्पर्श वाधित (असम्भव) होकर कामदेव की लीला के समान लीला का बोध कराता है। (दोनों लीलाओं में धर्म की दृष्टि से) अधिक दूरी न होने से प्रतिबिम्ब की कल्पना की गई है।

यह (असम्भवद्वस्तुसम्बन्धा निदर्शना) भी पदार्थगत और वाक्यार्थगत के भेद से दो प्रकार की है। पदार्थगत (प्रतिवस्तूपमा) का अभी उदाहरण (श्लोक ८२) दिया जा चुका है।

वाक्यार्थगत (असम्भवद्वस्तुसम्बन्धा निदर्शना) जैसे—

तुम्हारे चरण के नखरत्नों को यह जो महावर लगाना है वह चंद्रमा को चंदन से धवल बनाना है।८३॥

**अव्यात् स इति। स शिवोऽव्यादित्यर्थः। यस्येषुः स्मरचापलीलां स्पृशति। अत्रान्यसंबधिन्या लीलाया अन्येन स्पर्शासम्भवात् इयमसम्भवद्वस्तुसम्बन्धा। ननु तर्हि असङ्गतिरेव स्यादित्यत आह—लीलासदृशीं लीलामित्यादि। लक्षणाश्रयणाणाददूररविप्रकर्षः। वैचित्र्यान्तरायाह—एषापीत्यादि। समनन्तरमुदाहृतायामेकक्रियाभिसम्बन्धात् पदार्थवृत्तिता। त्वत्पादेति। नखरत्नानां निसर्गशोणत्वादलक्तकमार्जनं विधोः पाण्डरीकरणवदप्रयोजकमित्यर्थः। इयमसम्भवद्वस्तुसम्बत्धा वाक्यार्थवृत्तिः, मार्जनमेव पाण्डरीकरणं न भवति यतः।**

---

१. अत्र च—अ०।
२. °तल्लीला° ना।
३ °तिदूर—ना।
४. बिम्बप्रतिबिम्बनमुक्तम्—अ०।
५. द्विधा—अ०।
६. पाण्डरी°—ना०।

केचित्तु दृष्टान्तालंकारोऽयमित्याहुः[1]। तदसत्। निरपेक्षयोर्वाक्यार्थयोर्हि[2] बिम्बप्रतिबिम्बभावे[3] दृष्टान्तः। [4]यत्र तु[5] प्रकृते वाक्यार्थे वाक्यार्थान्तरमारोप्यते[6] सामानाधिकरण्येन तत्र संबन्धानुपपत्तिमूला निदर्शनैव युक्ता, न दृष्टान्तः। एवं च—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥८४॥

इत्यत्र दृष्टान्तबुद्धिर्न कार्या। उक्तन्यायेन निदर्शनाप्राप्तेः। इयं

कुछ (आचार्य) कहते हैं कि यह दृष्टान्तालंकार है। किन्तु यह गलत है। दो निरपेक्ष (स्वतन्त्र) वाक्यार्थों का ही बिम्बप्रतिबिम्बभाव दृष्टान्त होता है। पर जहाँ प्रकृत वाक्यार्थ में दूसरे वाक्यार्थ का समानाधिकरण से आरोप होता है वहाँ संबन्ध की अनुपपत्ति से होनेवाली निदर्शना को ही, न कि दृष्टान्त को मानना उचित है और इस प्रकार—

यदि आश्रम में रहने वाले व्यक्ति का ऐसा रूप है जो रनिवासों में भी दुर्लभ है तो वनलताओं ने उद्यान की लताओं को सचमुच मात दे दी है।८४॥

इस उदाहरण में दृष्टान्त (अलंकार) नहीं समझना चाहिए। क्योंकि उपर्युक्त न्याय (अर्थात् जहाँ समानाधिकरण से प्रकृत वाक्यार्थ पर दूसरे वाक्यार्थ का आरोप होता है वहाँ सम्बन्ध की अनुपपत्ति से निदर्शना होती है) से निदर्शना

अत्र येषां दृष्टान्तधीस्ते मन्दा इत्याह—केचिदित्यादि। वाक्यार्थयोर्नैरपेक्ष्ये दृष्टान्तः, सापेक्षत्वे तु निदर्शनेत्याह—यत्र तु प्रकृत इत्यादि। सामानाधिकरण्येनाध्यारोप्यत इति। वाक्यैकवाक्यताश्रयणेनैकक्रियासमन्वयात् प्रकृतान्तःपातित्वं नीयत इत्यर्थः। तत्र वाक्ये प्रकृताप्रकृतवाक्ययोः सम्बन्धानुपपत्तिमूला निदर्शनैवेत्यर्थः। यत्राप्यनतिस्फुटं सापेक्षत्वं तत्रापि दृष्टान्तधीर्माभूदित्युदाहरणेन दर्शयति—एवं च शुद्धान्तेत्यादि। आश्रमवासिनो जनस्य शुद्धान्तदुर्लभं वपुर्यदीति यच्छब्द उत्तरवाक्ये तर्हि दूरीकृता इति तच्छब्दमुत्थापयतीति वाक्यार्थयोः सापेक्षत्वान्निदर्शनैवेयम्। तदेतदाह—उक्तन्यायेनेति।

---

१. °मित्यूचुः—अ० २. हि—शा० ना० नास्ति।
३. °भावो—नि०। ४. यत्र तु···रोप्यते—शा१ पुस्तके भग्नः।
५. च°—नि०। ६. °मध्यारोप्यते—अ०।

[१]चोपमेय उपमानवृत्तस्यासंभवात्प्रतिपादिता पूर्वैः[२]। वस्तुतस्तूपमेयवृत्तस्योपमानेऽसंभवादपि [३]भवति, उभयत्रापि संबन्धविघटनस्य विद्यमानत्वात्। तद्यथा—

वियोगे[४] गौडनारीणां यो गण्डतलपाण्डिमा।
अलक्ष्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥८५॥

अत्र गण्डतलं प्रकृतम्। तद्धर्मस्य पाण्डिम्नः खर्जूरीरेणुष्वसंभवादौपम्यप्रतीतिः। एष च प्रकारः शृङ्खलान्यायेनापि भवति[५]। [६]यथा—

हो जाएगी। प्राचीन (आचार्यों) ने इस (निदर्शना) का प्रतिपादन, उपमेय में उपमान का वृत्त (धर्म) असम्भव (बाधित या अनुपपन्न) होने के आधार पर, किया है। पर वस्तुतः उपमेय के वृत्त (धर्म) के उपमान में असम्भव होने से भी (यह अलंकार) होता है क्योंकि दोनों ही स्थितियों में सम्बन्ध का विघटन पाया जाता है। इसका उदाहरण है—

विरह में गौड़ देश की स्त्रियों के कपोल-तलों पर जो पीलापन था वह खर्जूरी-लता के पराग में दिखाई दिया था।८५॥

यहाँ कपोलतल प्रकृत है। उसके धर्म पीलापन के खजूर के पराग में सम्भव न होने से औपम्य की (कपोलतल का पीलापन खर्जूर-पराग के समान है यह) प्रतीति होती है। यह भेद श्रृंखलान्याय से भी होता है। जैसे—

**अथ वैचित्र्यान्तरायाह इयं च सामान्येनैवेत्यादि। सामान्येन वाक्यार्थयोरसंबन्धात् प्रतिपादनम्। वैचित्र्यान्तरोपोद्घातः। वैचित्र्यान्तरं विवेचयति—उपमेयवृत्तस्येत्यादि। शुद्धान्तदुर्लभमित्यादौ ह्युपमेयवृत्तेऽध्यारोपितस्योमेयमवृत्तस्यासम्भवः। अथैतद्विपर्ययोऽपि। वियोग इति। वियोगेन निमित्तेन गौरीणामापाण्डुरीभूतानां नारीणां गण्डतले यः पाण्डिमा स खर्जूरीमञ्जरीणां गर्भरेणुष्वलक्ष्यतेत्यत्र उपमेयवृत्तस्य गण्डपाण्डिम्नो मञ्जरीगर्भरेणुरूप**

---

१. इयं च सामान्येनै (न ?)वा सम्भवात् प्रतिपादिता—शा०। इयं च सामान्येनोपमानवृत्तस्योपमेये सम्भवात् प्रतिपादिता—ना०। इयं च सामान्येनैवासंभवात्प्रतिपादिता—शा१।

२. पूर्वैः वस्तुतः—ना० शा० शा१ नास्ति।

३. सम्भवति—अ०।

४. गौर°—ना० शा१।

५. सम्भवति—अ०।

६. यथा–शा० ना० पुस्तकयोर्नास्ति।

मुण्डसिरे बोरफलं बोरोवरि[1] बोरअं थिरं धरसि[2] ।
विग्गुच्छाअइ अप्पा णालिअछेआ छलिज्जन्ति[3] ॥८६॥
[मुण्डशिरसि बदरफलं बदरोपरि बदरं स्थिरं धारयसि ।
जुगुप्सयसि चात्मानं नागरिकच्छेकाश्छलयन्ते ॥]

इयमपि क्वचिन्मालयापि भवन्ती दृश्यते । यथा —

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥८७॥

मुण्डित सिर पर बेर का फल, बेर पर (एक और) बेर स्थिर धारण किए हो; अपने को उपहास का पात्र बना रहे हो और चतुर नागरिक छले जा रहे हैं ।८६॥

यह (निदर्शना) भी कहीं माला (–रूप) से भी होती हुई दिखाई देती है । जैसे—

जिसने मूर्ख व्यक्ति की सेवा की है उसने अरण्यरोदन किया है, मुर्दे के शरीर में उबटन किया है, जमीन पर कमल को लगाया है, ऊसर जमीन में बड़ी देर तक वर्षा की है, कुत्ते की पूंछ को सीधा किया है, बहिरे के कान में आवाज लगाई है, अंधे के आगे दर्पण रक्खा है ।८७॥

उपमानवृत्ते लक्ष्यत्वासम्भवादुपमा प्रतीयते । तदेतदाह—अत्र गण्डतलमित्यादि । अस्यैव प्रकारस्य वैचित्र्यान्तरायाह एष चेति । एष प्रकार उपमेयवृत्तस्य उपमानवृत्तेऽन्वयासंभवलक्षणः । मुण्डसिरे इति ।

मुण्डशिरसि बदरफलं बदरोपरि बदरं स्थिरं धारयसि ।
द्विगुच्छायसे आत्मा मूढच्छेकाश्छल्यन्ते ।

---

1. वदरे वदरं—ना० पुस्तकस्य छाया । 2. धिरसि—शा० ।

3. विडम्ब्यत आत्मा धूर्तच्छेकाश् सं० नि० छाया ।

4. यद्यपि शा० ना० शा१ पुस्तकेषु 'इयमपि क्वचिन्मालयापि…यदबुधो जनः सेवितः' इयानंशो नोपलब्धः, जयरथोऽपि स्वटीकायां एतन्मूलग्रन्थस्य किमप्यंशं प्रतीकत्वेन नोपादत्ते, न च मालानिदर्शनां स्वतो लक्षयत्युदाहरति वा तथापि अ० नि० पुस्तकयोरनुरोधाद् ग्रन्थकृन्मताविरोधित्वाच्च मालानिदर्शनाग्रन्थोऽत्र स्वीकृतः ।

क्वचित्पुनर्निषेधसामर्थ्यादाक्षिप्तायाः प्राप्तेः संबन्धानुपपत्त्यापि[1] भवति। यथा—

उत्कोपे त्वयि किंचिदेव चलति द्राग्गूर्जरक्ष्माभृता
मुक्ता भूर्न परं भयान्मरुजुषां यावत्तदेणीदृशाम्।
पद्भ्यां हंसगतिर्मुखेन शशिनः कान्तिः कुचाभ्यामपि
क्षामाभ्यां सहसैव वन्यकरिणां [2]गण्डस्थलीविभ्रमः॥८८॥

कहीं निषेध के सामर्थ्य से आक्षेप की हुई प्राप्ति के साथ सम्बन्ध की अनुपपत्ति से भी (निदर्शना) होती है। जैसे—

गुस्सा में भरे हुए आपके थोड़ा-सा चलने पर (आक्रमण के लिये उन्मुख होने पर आपके प्रतिपक्षी) गुर्जर-नरेश ने तुरत राज्य (भू) ही नहीं छोड़ दिया अपितु डरकर मरुस्थल में भाग जाने वाली उसकी हिरनियों-जैसी आंखोंवाली स्त्रियों के पैरों ने हंसों की चाल, मुख ने चन्द्रमा की आभा, और कृश स्तनों ने जंगल के हाथियों के गण्डस्थल का विलास भी सहसा छोड़ दिया।८८॥

छेका विदग्धाः। छल्यन्ते छलं नीयन्ते। अत्र छेकछलनहेतोर्निष्फलदुःसंघट्टमूढकार्यपरम्परालक्षणस्य प्रतीयमानस्योपमेयवृत्तस्य बदरधारणादुपमानवृत्तेऽन्वयासंभवः। स च परस्परव्यपेक्षतया पङ्क्त्यवस्थानात् शृङ्खलान्यायेन स्थितः मिथोऽनपेक्षपङ्क्त्यवस्थानलक्षणा या माला तद्रूपेणापि सम्भवतीत्याह—इयमपीति। अपिशब्दो भिन्नक्रमः, मालयापि भवन्तीत्यर्थः।

अरण्येति। अरण्यरुदितं कृतं, तादृशो दुःखातिभारस्य दुःखसंविभागिजनमन्तरेणानुभूतत्वात्। शवशरीरमुद्वर्तितम् अगरुचन्दनादिनानुलिप्तम्। तथाविधस्य संस्कारस्य तस्य वा स्वस्यान्येषां वा भोगायोगात्। स्थलेऽब्जमवरोपितम् उप्तम्। भुवनलालनीयस्य वस्तुनोऽपात्रपतितत्वात्। सुचिरमिति प्रतिवाक्यमन्वीयते। ऊषरे वर्षितं नैरर्थक्यनैष्फल्ययोरुद्वेलत्वात्। श्वपुच्छमवनामितं, चिरसंस्काराधानेऽप्यनाहितसंस्कारत्वात्। बधिरकर्णजापः कृतः। जाप उपांशु रहस्योक्तिः। अपात्रमिति ज्ञात्वैव दुरुत्कण्ठया समारम्भात्। अन्धमुखमण्डना कृता, तस्यानुपयोगादन्येषां विडम्बनास्पदत्वात्। अबुधो जनःसेवितो, यदिति वाक्यार्थेन विशेषितो यच्छब्दः प्रधानवाक्यार्थभूतां क्रियामुपगृह्णाति।

---

[1] निदर्शना भवति—अ०। [2] कुम्भस्थली—अ० ना०।

अत्र मुक्तेति निषेधपदम्। तदन्यथानुपपत्त्या पादयोर्हंसगतिप्राप्तिरा[1]-क्षिप्यते। सा च तयोरनुपपन्ना[2] सादृश्यं [3]गमयतीति [4]असंभवद्वस्तुसंबन्धनिबन्धना निदर्शना।

**भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः ॥सू० २८॥**

यहाँ 'छोड़ दिया'—'मुक्ता'— यह पद निषेधार्थक है। इसकी अन्यथानुपपत्ति से पैरों में हंसों की चाल के होने का आक्षेप हो जाता है। इस (गति) का उन (पैरों) में होना (वस्तुदृष्टि से) उपपन्न नहीं है अतः सादृश्य का बोध कराती है इस प्रकार असम्भव वस्तुसम्बन्ध के आधार से निदर्शना हुई।

भेद की प्रधानता रहने पर, उपमान के उपमेय से आधिक्य अथवा विपर्यय में व्यतिरेक होता है। सू० २८॥

यदबुधजनसेवनं तदरण्यरुदितादिकरणमित्युपमेयवृत्तस्योपमानवृत्तेऽध्यारोपितस्यान्वयासम्भवो मालयावतिष्ठते।

अथ शब्दोपादानं विनाप्यर्थोपक्षेपादेव निदर्शना-वैचित्र्यं भवतीत्याह—क्वचित् पुनरित्यादि। निषेधो हि प्राप्तिपूर्वक एवेति प्राप्तिमाक्षिपति। निषेधाक्षिप्तायाः प्राप्तेः सम्बन्धानुपपत्तिरपि क्वचिन्निदर्शनाबीजमित्यर्थः। तदानीमियमार्थीति भावः।

उत्कोप इति। अत्र पद्भ्यां हंसगतिर्मुक्तेति त्यागरूपनिषेधबलात् पादयोर्हंसगतिप्राप्तिराक्षिप्ता सा साक्षात् सम्बद्धुमशक्ता सादृश्यमवगमयति। तदेतदाह—अत्र मुक्तेत्यादि।

सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वावबोधयेत्।
प्रतिबिम्बं यदि तदा निर्ज्ञातव्या निदर्शना॥
बिम्बानुबिम्बार्थतया वाक्ययोः प्रकृतान्ययोः।
स्यान्नैरपेक्ष्ये दृष्टान्तः सापेक्षत्वे निदर्शना॥

इत्थमभेदप्राधान्याधिकारनिपातिनोऽलङ्कारा विवेचिताः। अथ भेदप्राधान्येन। तत्र व्यतिरेकं सूत्रयति—

---

१. प्राप्ति—ना० ना१ नास्ति।

२. °रनुपपन्ना सती—अ०। ३. अवगमयतीति—अ०।

४. असम्भवत्सम्बन्ध°—ना० शा१।

अधुना भेदप्राधान्येनालंकारकथनम्। भेदो वैलक्षण्यम्। स च द्विधा भवति। उपमानादुपमेयस्याधिकगुणत्वे [1]विपर्यये वा भावात्। विपर्ययो न्यूनगुणत्वम्। क्रमेणोदाहरणम्—

दिदृक्षवः पक्ष्यलताविलासमक्ष्णां सहस्रस्य मनोहरं ते।
वापीषु नीलोत्पलिनीविकासरम्यासु[2] नन्दन्ति न षट्पदौघाः॥८९॥
क्षीणः क्षीणोऽपि शशी भूयो भूयो [3]विवर्धते सत्यम्।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु॥९०॥

अब भेद की प्रधानता (—के आधार) से अलंकारों को बताया जाएगा। भेद विलक्षणता है। वह दो प्रकार से होता है। उपमान उपमेय से अधिक-गुण हो या (इसके) विपरीत हो। न्यूनगुण होना विपर्यय (—का अर्थ) है। क्रमशः उदाहरण—

तुम्हारे हजार नयनों के पक्ष्मलता के मनोहर विलास को देखने की चाह रखने वाले भ्रमर-गण नील नलिनी के विकास से रमणीय बाउलियों में आनन्द नहीं पाते हैं।८९॥

क्षीण, क्षीण होकर भी चन्द्रमा फिर-फिर सचमुच बढ़ जाता है। पर यौवन चला गया तो फिर लौट कर नहीं आता। सुन्दरि! मान जाओ। प्रसन्न हो जाओ।९०॥

"भेदप्राधान्य उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः"॥

भेदप्राधान्ये साधर्म्ये इत्यनुषज्यते। व्याचिख्यासुर्भेदप्राधान्यं व्यतिरेकस्योक्तचरमनुस्मारयन्नधिकरोति—अधुनेत्यादि। भेदे संभवद्वैचित्र्यद्वयं प्रभेद-बीजत्वेनोद्घाटयति—भेदो वैलक्षण्यमित्यादि। विपर्ययशब्दान्मिथ्याज्ञान-भ्रमो मा भूदित्याह—विपर्ययो न्यूनगुणत्वमिति।

दिदृक्षव इति। अत्र नीलोत्पलिनीविकासापेक्षया अक्षिसहस्रपक्ष्मलताया अधिकगुणत्वम्। क्षीणः क्षीणोऽपीति। अत्रानिर्वातिनो यौवनस्य क्षैण्येऽपि भूयोऽभिवर्धितशश्यपेक्षया न्यूनगुणत्वम्। तदेतदुभयं योजयति—अत्र विकस्वरे-त्यादिना।

---

१. न्यूनगुणत्वं वा—अ० (विपर्यये—इतिस्थाने)।
२. विलास°—ना० शा१।
३. भूयोऽपि वर्धते—ना०। वर्धतेतराम्—शा१।

अत्र[1] विकस्वरनीलोत्पलिन्यपेक्षया अक्षिसहस्रस्य पक्ष्मलताया [2]अधिकगुणत्वम्। [3]चन्द्रापेक्षया च यौवनस्य न्यूनगुणत्वम्। शशिवैलक्षण्येन[4] गतस्यापुनरागमात्।

**उपमानोपमेययोरेकस्य प्राधान्यनिर्देशेऽपरस्य सहार्थसंबन्धे सहोक्तिः ॥सू० २९॥**

**भेदप्राधान्य इत्येव। गुणप्रधानभावनिमित्तकमत्र[5] भेदप्राधान्यम्। सहार्थप्रयुक्तश्च गुणप्रधानभावः। उपमानोपमेयत्वं चात्र वैवक्षिकम्।**

यहाँ (पहले उदाहरण में) खिली हुई नील नलिनी की अपेक्षा हजार नयनों की पक्ष्मलता अधिक गुण वाली है। पर (दूसरे उदाहरण में) चन्द्रमा की अपेक्षा यौवन न्यून गुण वाला है क्योंकि गया हुआ (यौवन) लौटकर नहीं आता है; (यह उसकी) चन्द्रमा से विलक्षणता (भिन्नता) है।

उपमान और उपमेय में से एक की प्रधानता का निर्देश होने पर, दूसरे का सहार्थ से सम्बन्ध होने पर सहोक्ति होती है। सू० २९॥

'भेद की प्रधानता होने पर' इस पाद की अनुवृत्ति है (इत्येव)। इस अलंकार में भेद की प्रधानता गुण-भाव और प्रधानभाव के निमित्त से होती है। और गुण-प्रधान-भाव का प्रयोजक सहार्थ होता है। यहाँ उपमानोपमेयभाव

भेदप्रधाने साधर्म्ये व्यतिरेको विधीयते।
आधिक्यादुपमेयस्य न्यूनत्वाद् वोपमानतः॥

सहोक्तिं सूत्रयति—

"उपमानोपमेययोरेकस्य प्राधान्यनिर्देशे परस्य सहार्थाभिसम्बन्धे सहोक्तिः"॥

अधिकारमनुस्मारयन् सामग्रीमस्या विविनक्ति—भेदप्राधान्य एवेत्यादिना। ननु सहार्थतया तुल्यकक्ष्ययोः कथं भेदप्रधानतेत्यत आह—गुणप्रधानभावेत्यादि। सत्यम्। सहार्थसामर्थ्यात् साधर्म्यमेवात्र। भेदप्राधान्यं तु व्यतिरेकनयेन साधर्म्यभित्तिकमिह न भवति। अपि तु गुणप्रधानभावभित्तिकमिति यावत्। ननु समानयोगत्वे गुणप्रधानभावोऽपि कीदृगित्यत आह—सहार्थयुक्त इति। सहार्थो हि तृतीयान्तं गुणत्वेन प्रयोजयति। ननु सहार्थत्वे क

---

1. अत्राद्योदाहरणे—ना०।
2. वैलक्षण्यमधिकगुणत्वम्—अ०।
3. द्वितीयोदाहरणे चन्द्रा°—ना०।
4. °नैतस्या°—शा० ना०। °ण्येन तस्य—नि०।
5. निमित्तमत्र—शा० ना०।

द्वयोरपि प्राकरणिकत्वादप्राकरणिकत्वाद्वा[1]। सहार्थसामर्थ्याद्धि तयोस्तुल्यकक्षत्वम्[2]। तत्र तृतीयान्तस्य नियमेन गुणभावादुपमानत्वम्[3]। अर्थाच्च परिशिष्टस्य प्रधानत्वादुपमेयत्वम्। शाब्दश्चात्र गुणप्रधानभावः। वस्तुतस्तु विपर्ययोऽपि स्यात्। तत्र[4] नियमेनातिशयोक्तिमूलत्वमस्याः। सा च[5] कार्यकारणप्रतिनियमविपर्ययरूपा अभेदाध्यवसायरूपा च।

विवक्षा पर होता है क्योंकि दोनों ही (अर्थ) प्रकृत अथवा अप्रकृत होते हैं। सहार्थ के सामर्थ्य से ही वे दो (अर्थ) समानवर्गीय बनते हैं। इनमें से तृतीया (विभक्ति) में आया हुआ पद, नियमतः गौण होने से, उपमान बनता है। अर्थात जो शेष बचा वह प्रधान होने से उपमेय बनता है। यहाँ गुण-प्रधान-भाव शाब्द होता है। वस्तुदृष्टि से स्थिति भिन्न भी हो सकती है (कहीं तृतीया विभक्ति से निर्देश होने पर प्रधान-भाव हो सकता है और प्रधान विभक्ति से निर्देश रहने पर भी गुण-भाव हो सकता है)। ऐसी स्थिति में (तत्र) इस (सहोक्ति) के मूल में नियमतः अतिशयोक्ति रहती है। और यह (अतिशयोक्तिमूलक सहोक्ति) कार्यकारण के पूर्वापरभाव की विपर्ययरूप तथा अभेदाध्यवसायरूप होती है।

उपमानोपमेयभाव इत्यत आह—उपमानोपमेयत्वं चेत्यादि। तद्धि तृतीयान्तस्य विशेषणत्वादुपमानत्वं विवक्ष्यते। इतरस्य तु विशेष्यत्वादुपमेयत्वम्। अतो वैवक्षिकमेव न तु वास्तविकमिति भावः। अवास्तवत्वे हेतुमाह—द्वयोरपीत्यादि। ननु द्वयोः प्राकरणिकत्वमेवाप्राकरणिकत्वमेवेति वा (इत्यत्र) किं नियामकमित्यत आह—सहार्थसामर्थ्यादिति। ननु तर्हि वैवक्षिकत्वे कतरत् केन रूपेण विवक्ष्यतामित्यत आह—तृतीयान्तस्येत्यादि। ननु प्रधानमपि तृतीयान्तत्वेन निर्देशमर्हतीत्यत आह—शाब्दश्चेति। सहशब्दो हि नियमेन तृतीयान्तस्य शाब्दं गुणत्वं कल्पयति, इतरस्य तु प्रधानत्वम्। तर्ह्यर्थापेक्षया का स्थितिरित्यत आह—वस्तुतस्त्विति। गुणस्यापि प्राधान्यं, प्रधानस्यापि गुणत्वं विपर्ययः। अपिशब्दाद् यथावद् स्थितिरपि। एवं न्यायक्रमे स्थितेऽपि

---

१. अप्राकरणिकत्वाद्वा—अ० नास्ति।

२. प्राकरणिकाप्राकरणिकभावित्वादुपमानोपमेयभावस्य—अयमंशः अ० पुस्तकेऽधिकः।

३. गुणत्वादुप°—नि०।

४. तत्रापि—अ०।

५. तु—अ०।

**अभेदाध्यवसायश्च श्लेषभित्तिकोऽन्यथा वा। साहित्यं चात्र [1]कर्त्रादि-नानाभेदं ज्ञेयम्। [2]तत्र कार्यकारणप्रतिनियमविपर्ययरूपा यथा—**

**भवदपराधैः सार्धं संतापो वर्धतेतरामस्याः[3]।**

**अत्रापराधानां संतापं प्रति हेतुत्वेऽपि तुल्यकालत्वेनोपनिबन्धः।**

अभेदाध्यवसाय श्लेषमूलक होता है अथवा अन्यथा (अर्थात् अश्लेषमूलक)। इस अलंकार में सहभाव भी कर्ता आदि (कारकों) के भेद से अनेक प्रकार का होता है। इनमें से कार्यकारण के पूर्वापरभाव के विपर्ययरूप (सहोक्ति) का उदाहरण है—

तुम्हारे अपराधों के साथ इस (सुन्दरी) का सन्ताप बढ़ता ही चला जा रहा है।

यहाँ अपराधों के सन्ताप (बढ़ाने) का कारण होने पर भी उनका एक काल में वर्णन किया गया है।

विशेषोऽन्योऽस्याः प्रयोजक इत्याह—तत्रापीत्यादि। अतिशयोक्तिरपि न साकल्येनास्याः मूलमित्याह—सा चेत्यादि। कार्यकारणप्रतिनियमविपर्ययोऽत्र तुल्यकालता, न तु कार्यस्य पूर्वकालभाविता, सहार्थत्वात्। अभेदाध्यवसायस्तु द्विधा भवतीत्याह—अभेदाध्यवसायश्चेत्यादि। तेनेयं त्रिधोपक्षिप्ता। वैचित्र्यान्तरमप्युपक्षिपति—साहित्यं चात्रेत्यादि। कर्तृकर्मादिसाहित्यनिबन्धनेनापि प्रभेदेन प्रथत इति यावत्। क्रमेणोदाहरणानि।

भवदपराधैरिति। अत्रापराधानां तृतीयान्तत्वाद् गुणत्वम्। सन्तापस्य प्रथमान्तत्वात् प्रधानत्वम्। अतो गुणप्रधानभावनिबन्धनैवात्र भेदप्रधानता। न पुनर्वृद्धिक्रियासाधर्म्यनिबन्धना। स च गुणप्रधानभावः सहार्थप्रयुक्तः। द्वयोश्च प्राकरणिकत्वादुपमानोपमेयभावो वैवक्षिकः। अपराधानां च तृतीयान्तत्वाद् विशेषणानामुपमानत्वं नियतम्। अपराधा यथा वर्धन्त इति। सन्तापस्य तु प्रधानत्वादुपमेयत्वम्। सन्तापस्तथा वर्धत इति। स चायं गुणप्रधानभावः शाब्दः, अर्थं व्यपेक्ष्य तु सन्ताप इवापराधा वर्धन्त इत्यपि प्राप्तेः। न्यायक्रमोऽयमुदाहरणान्तरेष्वपि योजनीयः। अत्र कार्यकारणसमकालत्वलक्षणातिशयोक्तिर्मूलमिति दर्शयति—अत्रापराधानामित्यादि।

---

1. कर्त्रादीनां भेदात् ज्ञेयम्—अ०। 2. तत्र च—नि०।
3. तस्याः—अ० ('अस्याः' स्थाने)।

श्लेषभित्तिकाभेदाध्यवसायरूपा[1] यथा—

अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि।

[2]अत्रास्तगमनं श्लिष्टम्। अस्तमित्यस्योभयार्थत्वात्।

तदन्यथारूपा यथा—

कुमुदवनैः[3] सह संप्रति विघटन्ते चक्रवाकमिथुनानि।

अत्र विघटनं संबन्धिभेदाद्भिन्नं न तु श्लिष्टम्। एतद्विशेषपरिहारेण[4] [5]सहोक्तिमात्रं नालंकारः। यथा[6]—

श्लेषमूलक अभेदाध्यवसाय (-रूपा सहोक्ति) जैसे—

शत्रुओं के साथ यह सूर्य अस्तंगत हो गया है। सेनाओं को वापिस हटा लो।

यहाँ 'अस्तंगत' में श्लेष है। अस्त के दो अर्थ होते हैं (डूबना और पराजित होना)।

इससे भिन्न स्वरूप वाली (अश्लेषमूलक सहोक्ति) जैसे—

कुमुदवनों के साथ अब चकवा-चकवी के जोड़े विलग हो रहे हैं।

यहां 'विलग होने' (विघटन) का अर्थ, सम्बन्धी (कुमुदवन तथा चकवा चकवी के जोड़े) के भेद से, भिन्न है पर उसमें श्लेष नहीं है।

इस भेद (अतिशयोक्तिमूलक द्विविध भेद) को छोड़कर सहोक्तिमात्र अलंकार नहीं है। जैसे—

अस्तं भास्वानिति। संह्रियन्तामिति विप्रकीर्णान्येकीक्रियन्तामित्यर्थः। अत्र श्लेषभित्तिका भेदाध्यवसायरूपा मूलमिति दर्शयति। अत्रास्तंगमनमित्यादि। अस्तम् एकदा गिरिः, अन्यदा त्ववसाद इत्युभयार्थत्वम्।

कुमुददलैरिति। अत्र पुनरश्लेषभित्तिकाभेदाध्यवसायरूपा मूलमिति दर्शयति अत्र विघटनमित्यादि। एवमतिशयोक्तिमूलत्वादिलक्षणो यो विशेषः तदभावे सहोक्तिमात्रं नालङ्कार इति व्युत्पादयति—एतद्विशेषेत्यादि।

---

1. अभेद°— शा० ना० शा १ नास्ति।
2. इत्यत्रा°—ना०।
3. दलैः—अ०।
4. °विशेषण°—नि०।
5. तु सहोक्तिमात्रं—ना०।
6. यथा—शा१ नास्ति।

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु[1]। इत्यादौ। एतान्येव[2] कर्तृसाहित्ये उदाहरणानि। कर्मसाहित्ये यथा—

द्युजनो मृत्युना सार्धं यस्याजौ तारकामये।
चक्रे चक्राभिधानेन प्रेष्येणाप्तमनोरथः॥९१॥

अत्र करोतिक्रियापेक्षया द्युजनस्य मृत्योश्च कर्मत्वम्। एषा[3] मालयापि भवन्ती दृश्यते। यथा[4]—

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं [5]मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेह्या मनसा समं [6]च सहसाकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं [7]तद्भग्नमैशं धनुः॥९२॥

ताड़ के जंगलों से मर्मर समुद्र-तटों पर इसके साथ विहार करो। इस प्रकार के उदाहरणों में (सहोक्तिमात्र है, अलंकार नहीं है)। ये ही उदाहरण कर्ता के साथ सहभाव के हैं। कर्म (कारक) के सहभाव का उदाहरण है—

जिसके तारकासुर-रूपी रोग वाले युद्ध में चक्र नामक दूत ने मृत्यु के साथ देवगण के मनोरथों को पूरा किया॥९१॥

यह (सहोक्ति) मालारूप भी दिखाई देती है। जैसे—

कौशिकमुनि के रोमांचों के साथ राम ने शिवधनुष को उठाया, राजाओं के मुख के साथ नवाया, जनक की संशय में पड़ी बुद्धि के साथ हिलाया-डुलाया, जानकी के मन के साथ झट से खींचा और परशुराम के प्रौढ़ गर्वांकुर के साथ उस (शिवधनुष) को तोड़ डाला॥९२॥

अत्र प्रत्युदाहरति—अनेन सार्धमिति। कर्तृसाहित्यलक्षणं वैचित्र्यमेष्वेव दर्शितमित्याह—एतान्येवेति। एषु हि सन्तापापराधादिकर्तृसाहित्यम्।

द्युजन इति। द्युजनो देवः। द्युजनस्य मृत्युना सह मनोरथावाप्तिर्दैत्य-बलक्षयः। अत्र कर्मसाहित्यं दर्शयति—अत्र करोति क्रियेत्यादि। द्युजन-

---

१. द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः।—इति द्वितीयार्धमपि अ० पुस्तकेऽस्ति। २. एव—ना० नास्ति।
३. इयञ्च—अ०। एषा च—नि०। ४. यथा—शा० ना० शा१ नास्ति।
५. मुखं—अ०। ६. तदधुनाकृष्टं—शा० ना० शा१।
७. भग्नं तदैशम्—अ० शा० शा१।

[1]सहोक्तिप्रतिभटभूतां[2] विनोक्तिं [3]दर्शयति—

**विना [4]कश्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः ॥सू० ३०॥**

सत्त्वस्य शोभनत्वस्या-[5]भावोऽशोभनत्वम् । एवमसत्त्वस्याशोभ-

सहोक्ति की प्रतिपक्षिभूत विनोक्ति को बताते हैं--

एक के बिना दूसरे का अशोभन (सदभाव) या शोभन (असदभाव) होना विनोक्ति है ॥सू० ३०॥

सत्त्व —शोभनत्व —का अभाव अशोभनत्व होता है । इसी प्रकार असत्व-

मृत्योराप्तिक्रियापेक्षया कर्तृत्वेऽपि तस्योपसर्जनत्वान्नेह कर्तृसाहित्यम् । या तु चक्रकर्तृका प्रधानभूता करोतिक्रिया तदपेक्षयानयोः कर्मत्वात् कर्मसाहित्यमेतदिति यावत् । एवं करणादिसाहित्यवैचित्र्यमुन्नेयम् ।

अथ पुनर्वैचित्र्यायाह —इयं चेति । उत्क्षिप्तमिति । धनुष उत्क्षेपः प्रेक्षः ज्याबन्धसंघट्टनम् । आस्फालनम् आकर्षः । शिलीमुखमोक्ष इत्यादीनि क्रमिकाणि धानुष्ककर्माणि । अत्राकर्षणमात्रान्तपरिपणनात् तावन्त्येवोपवर्णितानि । तत्रातिवत्सलस्य कौशिकस्य पुलकानां धनुरुत्क्षेपसमसमयमुत्क्षेपः मत्सरग्रस्तत्वादुत्क्षेपमात्रापरितोषितानां भूपानां धनुर्नतिसमसमयं मुखनतिः परिपणिताकर्षणस्य जनकस्य नत्यन्तं संशयानुवृत्तेः । ज्यास्फालनसमसमयं संशयबुद्ध्यास्फालनम् । वैदेह्याः पुनः परिपणनसिद्ध्यन्तमनाकृष्टमनसः समाकर्षसमसमयं मनसः समाकर्षः । भार्गवाहङ्कृतिकन्दलस्य तु धनुर्भङ्गान्तमभग्नस्य भङ्गसमसमयं भङ्गः श्रीमता रामभद्रेणाकारीति समन्वयात् कर्मसाहित्यमिह मालात्वेनावतिष्ठते । एवमन्यदपि मालात्वेन ज्ञेयम् ।

गुणप्रधानभावो यः शाब्दस्तेन भिदोत्कटा ।
संश्रितातिशयोक्तिं च सहोक्तिः समयोर्मता ॥

अथ विनोक्तौ सङ्गतिमाह—सहोक्तिप्रतिभटेत्यादि । प्रतिभटभूता प्रतियोगिभूता । तत्र सूत्रम्—

"विना किञ्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः" ॥

---

१. सहोक्तेः प्र°—शा० । २. °प्रतिपक्ष°—ना० ।
३. लक्षयति—नि० ।
४. °किंचित्—भाष्यपाठानुसारम् । अ० शा० पुस्तक- योश्च ।
५. शोभनत्वस्य भावः शोभनत्वम्—नि० ।

[1]नत्वस्याभावोऽशोभनत्वम्। ते द्वे[2] यत्र कस्यचिदसंनिधानान्निबध्येते सा द्विधा विनोक्तिः। अत्र च[3] [4]शोभनत्वाशोभनत्वसत्तायामेव वक्तव्यायामसत्तामुखेनाभिधानमन्यनिवृत्तिप्रयुक्ता तन्निवृत्तिरिति ख्यापनार्थम्। एवं च [5]तदन्यानिवृत्तौ विधिरेव प्रकाशितो भवति। आद्या यथा—

अशोभनत्व-का अभाव शोभनत्व होता है। जहाँ इन दोनों का निबन्धन किसी के न रहने से होता है वह दो प्रकार की विनोक्ति होती है। यहाँ शोभन और अशोभन को विधिरूप में ही बताना चाहिए था। अभाव के द्वारा अभिधान दूसरे (पदार्थ) की निवृत्ति से होने वाली निवृत्ति को बताने के लिए किया गया है। और इस प्रकार दूसरे की स्थिति होने पर विधिरूप ही निखर आता है। प्रथम प्रकार की (सहोक्ति) जैसे—

व्याचष्टे--सत्त्वस्येत्यादि। त्वप्रत्ययभावशब्दौ प्रत्येकमभिसंबध्येते। शोभनत्वाभावोऽशोभनत्वं, तत्त्वाभावः शोभनत्वमिति। विना यत्र शोभनत्वं नास्ति सैका विनोक्तिः। यत्र तु अशोभनत्वं नास्ति सान्येति द्विरूपेयमित्यर्थः। ननु कस्मिंश्चित् सति सत्त्वासत्त्व इत्येतावतैव पर्याप्तेन किं निषेधद्वयाश्रयणगौरवेणेत्यत आह—अत्र चेत्यादि। अन्यनिवृत्तिप्रयुक्तेति। अन्यनिवृत्तिश्चेत् सदसत्त्वनिवृत्तिं न प्रयोजयति तदा न विनोक्त्यलङ्कारः। न ह्यस्मिन् सति सत्त्वमसत्त्वं वेत्युक्तौ विच्छित्तिः काचित्। अतोऽन्यनिवृत्तिप्रयुक्ता सदसत्त्वनिवृत्तिरेव विनोक्त्यलङ्कार इति भावः। अस्मिन् सति सत्त्वमसत्त्वं चेति। यस्तु विधिः स त्वलङ्कारफलत्वेन प्रान्ते प्रकाश्यत इत्याह—एवं चान्यनिवृत्तावि-

---

१. अशोभनत्वस्य—ना० नास्ति। °अशोभनत्वस्य भावोऽशोभनत्वम्—नि०। °स्याभावः शोभनत्वम् पुरोपि रागाद् गलितं न लक्षितम्—इत्येतावत्पर्यन्तं शा१ पुस्तके पाठो नोपलभ्यते।

२. द्वे सत्त्वासत्त्वे यत्र—अ० नि०।

३. च—अ० नास्ति।

४. अशोभनशोभनत्व°—अ०। शोभनाशोभनत्वविवक्षायामेवासत्त्वमुखेनाभि°—वा।

५. तदनिवृत्तौ–शा० ना० शा१। चान्यानिवृतौ–अ०। तदन्यनिवृत्तौ—नि०।

विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥९३॥

अत्र विनयाद्यसंनिधिप्रयुक्तश्रीविरहाद्यभिमानमुखेनाशोभनत्वमुक्तम्[1] । अत्र विनाशब्द[2]प्रयोगमन्तरेणापि[3] विनार्थविवक्षा यथाकथंचि-[4]न्निमित्तीभवति । यथा सहोक्तौ सहार्थविवक्षा । एवं च —

विनय के विना लक्ष्मी कैसी ? चन्द्रमा के विना रात कैसी ? सत्कविता से रहित वाणी की चातुरी कैसी ? ॥९३॥

यहाँ विनय आदि के न रहने से होने वाला लक्ष्मी का विरह आदि सम्भावना के द्वारा अशोभन बताया गया है । इस अलङ्कार में (अत्र) विना शब्द का प्रयोग न होने पर भी 'विना' अर्थ का अभीष्ट होना किसी प्रकार (इस अलंकार का) निमित्त बन जाता है, जैसे कि सहोक्ति में सहार्थ की विवक्षा । और इस प्रकार—

त्यादि । द्विरूपाया अपि परिपाट्योदाहरणम् विनयेनेति । अत्र विनयशशिसत्कवित्वनिवृत्त्या श्रीनिशाविदग्धतानिवृत्तिरिति सत्त्वाभावोदाहरणम् । विनयादिषु च सत्सु श्रीप्रभृतिसद्भावः फलत्वेन प्रकाश्यते । तदिदमभिसन्धायाह— अत्र विनयादीत्यादि । बिनादिशब्दाभावेऽपि तदर्थसद्भावे विनोक्तिरेवेति व्युत्पादयितुमाह—अत्र विनाशब्देत्यादि । यथा सहोक्ताविति । सहोक्तावप्ययं न्याय इति यावत् ।

---

१. °मुक्तम्—इत्यनन्तरमयं पाठः अ० पुस्तकेऽधिकः । "यथा वा—
प्रत्यक्ता मधुनेव काननमही मौर्वीव चापच्युता,
शुक्तिर्मौक्तिकवर्जितेव कविता माधुर्यहीनेव च ।
येनेकेन विना तदा न शुशुभे चालुक्यराजस्थितिः,
सामर्थ्यं शुभजन्मनां कथयितुं कस्यास्ति वाग्विस्तरः ॥"
—पद्यमिदमुदाहरणान्तरत्वेन दाक्षिणात्यपुस्तकेषु केनापि लिपिकेन निवेशितम् । नेदं काश्मीरिकस्य कवेः सम्भवति । समुद्रबन्धव्याख्याप्रभावजन्मायं पाठः प्रतिभाति ।

२. °शब्दमन्तरे°—नि० ।

३. अपि—अ० नास्ति ।

४. °चिदपि—अ० ।

निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
[1]उत्पत्तिरिन्दोरपि निष्फलैव [2]दृष्टा [3]प्रबुद्धा नलिनी न येन ॥९४॥

इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः । इयं च परस्परविनोक्तिभङ्ग्या चमत्कारातिशयकृत् । यथोदाहृते विषये । द्वितीया[4] यथा—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥९५॥

अत्राशोभनत्वाभावः शोभनपदार्थप्रक्षेपभङ्ग्योक्तः । सैषा द्विधा विनोक्तिः ।

जिस कमलिनी ने चन्द्र-बिम्ब नहीं देखा उसका जन्म बेकार बीत गया । उस चन्द्र का भी जन्म लेना बेकार है जिसने कभी विकसित कमलिनी नहीं देखी ॥९४॥

इस प्रकार के उदाहरणों में (इत्यादौ) विनोक्ति ही होती है क्योंकि चन्द्रमा के दर्शन के विना कमलिनी का जन्म अशोभन है यह प्रतीति हो जाती है । और यह (अलंकार) परस्पर विनोक्ति की भंगिमा से अत्यधिक चमत्कार पैदा करता है । दूसरी (विनोक्ति) का उदाहरण—

यह राजकुमार मृगलोचना के विना नाना प्रकार की व्यवहार-प्रतिभा से प्रकाशित रहता है और उस (नीच) मित्र के विना चन्द्रमा के समान शुद्ध हृदय हो जाता है ॥९५॥

यहाँ अशोभनता का अभाव शोभन पदार्थ (मृगलोचना तथा मित्र) का प्रक्षेप करते हुए बताया गया है । (इस प्रकार) यह विनोक्ति दो प्रकार की है ।

अत्रोदाहरति—निरर्थकं जन्मेति । अत्र हि तुहिनांशुदर्शनं विना नलिनीजन्म न शोभनमिति प्रतीयते । अतो विनोक्तिरियं (शाब्दी) विनाशब्दानुपादाने त्वार्थीति विशेषः । तदिदमभिसन्धायाह—इत्यादौ विनोक्तिरेवेत्यादि । अत्र च हेतुहेतुमद्भावव्यत्ययो विनोक्तेरेव विच्छित्तिविशेषाधायकः, न पुनरलङ्कारान्तरमित्याह—इयं च परस्परेत्यादि । उदाहृतो(ते) विषय इति । निरर्थकं जन्म इत्ययमुदाहृतोऽपि विषयः । मृगलोचनयेति । लोके हि मृगलोचनां विना चित्रव्यवहारप्रतिभाप्रागल्भ्यं नास्ति, सुहृदा विना च सुन्दराशयत्वम् । अस्य तु

---

1. प्रवृत्ति--शा० ना० ।　　2. न येन दृष्टा नलिनी प्रबुद्धा—नि० ।
3. विबुद्धा—अ० ।　　4. द्वितीयभेदो—ना० ।

अधुना विशेषणविच्छित्त्याश्रयेणालंकारद्वयमुच्यते। तत्रादौ विशेषणसाम्यावष्टम्भेन समासोक्तिमाह—

[१]विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः॥सू० ३१॥

इह प्रस्तुताप्रस्तुतानां क्वचिद्वाच्यत्वं, क्वचिद्गम्यत्वमिति [२]द्वैविध्यम्। वाच्यत्वं च श्लेषनिर्देशभङ्ग्या पृथगुपादानेन वेत्यपि[३] द्वैविध्यम्[४]। एतद्-

अब विशेषण-विच्छित्ति पर आश्रित दो अलंकारों को बताया जा रहा है। इन दो में से (तत्र) पहले विशेषणसाम्य के आधार से समासोक्ति को बताते हैं।

विशेषण-साम्य से अप्रस्तुत के गम्य होने पर समासोक्ति होती है॥सू० ३१॥

यहाँ प्रस्तुत और अप्रस्तुत कहीं तो वाच्य होते हैं और कहीं गम्य। इस प्रकार दो प्रकार की स्थिति है। वाच्य भी दो प्रकार से हो सकता है—श्लेष-निर्देश के द्वारा अथवा पृथक् उपादान से। ये दोनों भेद श्लेषालङ्कार

नरेन्द्रस्य न तथेति श्लोकार्थः। असत्त्वाभावं दर्शयति--अत्र शोभनत्वाभावादित्यादि। प्रतिभाप्रागल्भ्यं सुन्दराशयत्वं च शोभनपदार्थौ। निगमयति—सैषा द्विधेति।

सदसत्त्वनिवृत्तिश्चेन्निवृत्त्यान्यस्य वर्ण्यते।
तदा द्विधा विनोक्तिः स्याद् विधिरत्र फलं भवेत्॥

अथ विशेषणविच्छित्तिमूलौ समासोक्तिपरिकरौ प्रस्तौति—अधुना विशेषणेति। विशेषणविच्छित्तिश्च द्विरूपा। साम्यं साभिप्रायता च। साम्ये समासोक्तिमधिकरोति—तत्रादावित्यादि। तत्र सूत्रम्—

"विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः"।

यत्र विशेष्यादौ प्रकृतमात्रपरता विशेषणसाम्यात् पुनरप्रकृतोऽवगम्यते सा समासेन संक्षेपेणाभिधानात् समासोक्तिः। तदेतद् व्याचिख्यासुर्विषयविभागामाह—इह प्रस्तुतेत्यादि। क्वचिद् वाच्यत्वमुभयेषामपीति शेषः। क्वचिद् गम्यत्वमेकतरेषामिति शेषः। श्लेषनिर्देशभङ्ग्येति। विशेषणविशेष्यांशयोः श्लेषोपनिबन्धनेनेत्यर्थः। पृथगुपादानेन वेति। विशेषणांशे श्लेषमुपनिबध्य विशेष्यांशे पृथक् शब्दोपादानेनेत्यर्थः। एतद् द्विभेदमपि वाच्यत्वं श्लेषालङ्का-

---

१. विशेषणानां साम्या°—नि
२. द्वैतम्—अ०।
३. अपि—ना० नास्ति।
४. °द्वैतम्—अ०। द्वैधम्—शा० ना०।

**द्विभेदमपि श्लेषालंकारस्य विषयः। गम्यत्वं तु प्रस्तुतनिष्ठमप्रस्तुतप्रशंसाविषयः। अप्रस्तुतनिष्ठं तु समासोक्तिविषयः[1]। तत्र च निमित्तं विशेषणसाम्यम्। विशेष्यस्यापि साम्ये श्लेषप्राप्तेः। विशेषणसाम्याद्धि[2]**

के विषय हैं। गम्यता (प्रतीयमानता) प्रस्तुतनिष्ठ होने पर अप्रस्तुतप्रशंसा का विषय होती है पर अप्रस्तुतनिष्ठ होने पर समासोक्ति का विषय होती है। इस (प्रतीयमानता) का निमित्त विशेषण-साम्य होता है। जहाँ विशेष्य में भी साम्य हो वहाँ श्लेष होगा। विशेषण-साम्य के कारण प्रतीयमान अप्रस्तुत

रस्य विषयः। यदा पुनर्गम्यत्वं प्रस्तुतविषयं विशेषणसाम्यात् तदानीमप्रस्तुतप्रशंसा। यदा त्वप्रस्तुतविषयं तदा समासोक्तिरिति विषयविवेकः। अप्रस्तुतस्य गम्यत्वे यदि विशेष्यस्यापि साम्यं तदा किं स्यादित्यत आह—विशेष्यस्यापि साम्ये श्लेषप्राप्तेरिति। श्लेषमूलध्वनिप्राप्तेरिति यावत्। ननु श्लेषालङ्कारप्राप्तिः किं न स्यात्? उच्यते।

अत्रायं चर्चः, समासोक्त्यलङ्कारः, श्लेषालङ्कारः, शब्दशक्तिमूलो ध्वनिश्चेति त्रिषु विषयेष्वस्ति तावत् श्लिष्टः पदोपनिबन्धः। तत्र यदा श्लेषः तदार्थद्वयस्य नियमेन वाच्यता। वाच्यत्वं चैवं सम्भवति। यदार्थौ द्वावपि प्राकरणिकौ स्तः, अप्राकरणिकौ वा तदा विशेषणविशेष्यांशयोर्द्वयोरपि श्लिष्टपदोपनिबन्धात् श्लेषालङ्कारः। अभिधाया अनियन्त्रणाद् द्वावप्यर्थौ वाच्यौ यतः। यदैकस्य प्राकरणिकत्वमितरस्याप्राकरणिकत्वं तदा विशेष्यांशे पृथक्शब्दोपादानबलादेव श्लेषालङ्कारः। यदि विशेष्यांशेऽपि श्लिष्टपदोपनिबन्धस्तदा प्रकरणनियन्त्रिताया अभिधायाः प्राकरणिकार्थ एवोपक्षयादप्राकरणिकार्थावगतिर्व्यंजनस्यैव विषयः स्यात्। अथ यदा समासोक्तिस्तदा विशेषणांशे अर्थद्वयप्रतिपादकशब्दोपनिबन्धः विशेष्यांशे तु प्राकरणिकार्थमात्रपरता, तदा विशेषणसाम्यादप्रस्तुतस्य गम्यत्वादुक्तलक्षणा समासोक्तिः। यदा पुनः प्राकरणिकाप्राकरणिकयोर्विशेषणविशेष्यांशेऽपि श्लिष्टता तदा तावन्न समासोक्तिः, विशेषणमात्रसाम्यलक्षणा यतः। श्लेषालङ्कारत्वप्राप्तिरपि कथं तत्रार्थद्वयस्य वाच्यतैव लक्षणं यतः। नह्यत्र द्वयोर्वाच्यतोपपत्तिः। प्रकरणपक्षपातिन्या अभिधाया अप्राकरणिकार्थस्पर्शाभावात्। अप्राकरणिकस्य च समन्वयसमनन्तरप्रतीतत्वात्। शब्दशक्तिमूलस्य ध्वनेः श्लेषेण विषयग्रासप्रसङ्गाच्च। विविक्तोऽयं घण्टापथो ध्वनिदर्शनरहस्यविदामित्यलम्।

१. °क्तेर्गोचरः—अ०।
२. °साम्यवशाद्धि—अ०।

**प्रतीयमानमप्रस्तुतं [1]प्रस्तुतावच्छेदकत्वेन प्रतीयते। [2]अवच्छेदकत्वाच्च व्यवहारसमारोपो न तु रूपसमारोपः। रूपसमारोपे [3]त्ववच्छादितत्वेन प्रकृतस्य तद्रूपरूपित्वाद्रूपकमेव। [4]तच्च विशेषणसाम्यं श्लिष्टतया, साधारण्येनौपम्यगर्भत्वेन च [5]भावात्त्रिधा भवति। तत्र श्लिष्टतया यथा—**

प्रस्तुत के अवच्छेदक रूप में प्रतीत होता है। इस अवच्छेदकता के कारण ही (समासोक्ति में) व्यवहार का समारोप माना जाता है; रूप का समारोप नहीं। रूप का समारोप होने पर तो अवच्छादित हो जाने से प्रस्तुत अप्रस्तुत के रूप से सर्वथा रूपित (आच्छादित) हो जाएगा अतः रूपक ही होगा। उपर्युक्त विशेषण-साम्य श्लेष से, साधारण रूप से तथा सादृश्य के गर्भीकार से तीन प्रकार का है। इनमें से (तत्र) श्लिष्ट (विशेषणसाम्य) का उदाहरण है—

अथ समासोक्तिरूपकयोर्वैधर्म्यं विवेचयति विशेषणसाम्यवशादित्यादिना। हिर्हेतौ। यतो विशेषणसाम्यादप्रस्तुतोऽर्थः प्रतीयते अतो विशेष्यांशे संस्पर्शाभावाद् विशेष्यं प्रकृतार्थं न स्वेन रूपेण रूपवन्तं कर्तुमीष्टे किन्तु विशेषणांशप्रतीतं स्वव्यवहारं विशेष्यांशप्रतीते प्रकृतार्थव्यवहारे परिच्छेदकत्वेन समारोपयति। तदिदमाह प्रस्तुतावच्छेदकत्वेन प्रतीयत इति। अवच्छेदकत्वेन विशेषकत्वेन। यत इत्थमवच्छेदकत्वमतोऽस्ति रूपकाद् वैधर्म्यमित्याह—अवच्छेदकत्वाच्चेत्यादि। व्यवहारसमारोपः, न तु रूपसमारोपः। ननु यदा रूपसमारोपः तदा किं स्यादित्यत आह—रूपसमारोपे त्वित्यादि। अवच्छादितत्वेन क्रोडीकृतत्वेनाप्रकृतरूपरूपितत्वादप्रकृतरूपेणोपरञ्जितत्वाद् रूपकत्वमेव। विवेचितं चैतद् यथोपयोगं परिणामालङ्कृतौ। अत्रावान्तरश्लोकाः—

अप्रस्तुतं प्रतीतं चेद् भेदकांशैकसाम्यतः।
व्यवहारं स्वमारोप्य प्रस्तुते न्यग्भवत्यथ॥
तेनाप्रस्तुतवृत्तान्तारोपेण प्रस्तुतं स्वयम्।
संक्षेपेणोच्यते तस्मात् समासोक्तिरियं मता॥
स्याद् विशेष्यांशसाम्यं चेत् प्रस्तुताकाररूपितम्।
भवेदप्रस्तुतं भेद्यं रूपकालङ्कृतिस्तदा॥

---

1. प्रस्तुतस्या°—भा२। 2. अवच्छेदकत्वं च—नि०।
3. त्वाच्छा° अ० नि०। 4. ततश्च—नि०।
5. °भवत्°—शा०। भावात्—अ० नास्ति।

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥९६॥

अत्र निशाशशिनोः श्लिष्टविशेषणमहिम्ना नायकव्यवहारप्रतिपत्तिः[1] । [2]अपरित्यक्तस्वरूपयोर्निशाशशिनोर्नायक-[3]नायिकाख्यधर्मविशिष्टयोः प्रतीतेः । साधारण्येन यथा

राग भरे चन्द्र ने निशा के मुख को यों पकड़ा कि सारा तिमिरवसन सामने खिसक जाने पर भी वह जान ही न पाई ॥९६॥

यहाँ श्लिष्ट विशेषणों की महिमा से निशा और चन्द्रमा में नायक तथा नायिका का व्यवहार मालूम पड़ता है। निशा में नायिका के धर्म तथा चन्द्रमा में नायक के धर्म से युक्त होने की जो प्रतीति यहाँ होती है उसमें इन दोनों को अपने स्वरूप का परित्याग नहीं करना पड़ता है।

साधारणरूप से (विशेषण-साम्य) जैसे—

अस्या विशेषप्रपञ्चनार्थमाह—तच्च विशेषणसाम्यमित्यादि । साधारण्यमुभयत्र प्रवृत्तिनिवृत्तिसम्भवः । औपम्यगर्भत्वं तद्गर्भसमासाश्रयणात् । इत्थं भवद् विशेषणसाम्यं त्रिधा भवतीत्यर्थः । अतः समासोक्तिरपि त्रिधा । क्रमेणोदाहरणानि—उपोढरागेणेति । रागः सन्ध्यारुणिमा कामश्च । तारकेत्यतो नक्षत्रदृगन्तर्मण्डलयोः प्रतिपत्तिः । मुखं प्रारम्भो वक्त्रं च । तिमिरमंशुकमिव तिमिरसदृशमंशुकं च । लक्षणं योजयितुमाह—अत्र निशाशशिनोरित्यादि । नायकश्च नायिका च नायकौ, "पुमान् स्त्रिया" इत्येकशेषः । उपोढरागत्वादिश्लिष्टविशेषणमहिम्ना खल्वत्र निशाशशिनौ नायकव्यवहारविशिष्टौ प्रतीयेते । ननु कथमत्र निर्ज्ञायते व्यवहारसमारोपो न रूपसमारोप इत्यत आह—अपरित्यक्तेत्यादि । यदि रूपसमारोपस्तदा प्रकृतो रूपकन्यायेन स्वं स्वरूपमवच्छादितत्वेन परित्यज्य यदवच्छादकमुपमानरूपं ताद्रूप्यमुपगृह्णाति । इह पुनर्विशेष्यांशो निष्प्रतियोगिकतया ज्ञातयोरत एवापरित्यक्तस्वरूपयोर्निशाशशिनोर्विशेषणसाम्यावगमितेन नायकत्वधर्मेण विशिष्टतया प्रतीतेः । अतो व्यवहारसमारोप एव ।

---

1. °प्रतीतिः—अ० । 2. परित्यक्त°—ना० शा१ ।
3. नायकताख्य°—अ० शा० ना० ।

**तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी ।**
**विकासमेति सुभग भवद्दर्शनमात्रतः ॥९७॥**

**अत्र [१]तन्वीत्यादिविशेषणसाम्याल्लोलाक्ष्या लताव्यवहारप्रतीतिः । [२]अत्र च लतैकगामिविकासाख्यधर्मसमारोपः कारणम् । अन्यथा विशेषणसाम्यमात्रेण [३]नियतस्य लताव्यवहारस्याप्रतीतेः । विकासश्च[४] प्रकृते [५]उपचरितो ज्ञेयः । [६]एवं कार्यसमारोपेऽपि ज्ञेया । इयं च [७]समासोक्तिः पूर्वापेक्षया [८]अस्पष्टा । औपम्यगर्भत्वेन यथा—**

अयि सुन्दर तुम्हारे दर्शन से ही वह तन्वी, मनोरमा, तरलनयना, पुष्पहासिनी बाला खिल उठती है ॥९७॥

यहां तन्वी आदि विशेषणों की समानता से तरलनयना (कामिनी) में लता के व्यवहार की प्रतीति होती है । इसका कारण, एकमात्र लता में रहने वाले खिल उठना नामक धर्म का (प्रस्तुत नायिका में) आरोप है । अन्यथा विशेषणों की समानता मात्र से लता के विशिष्ट व्यवहार की प्रतीति नहीं होती । प्रकृत (नायिका) में विकास — खिल उठना—उपचरित अर्थ में ग्रहण करना चाहिए । इसी प्रकार (अर्थात् व्यवहार-समारोप की तरह) कार्य का समारोप होने पर भी (समासोक्ति) समझ लेनी चाहिए । (साधारण विशेषणमूलक) यह समासोक्ति (श्लिष्ट विशेषणमूलक) पहली की अपेक्षा कम स्पष्ट होती है ।

सादृश्यगर्भित (समासोक्ति) जैसे—

**तन्वीति । पुष्पमार्तवं रजः, प्रसूनं च । इह तनुत्वादीनां विशेषणानामुभयत्रैकार्थता साम्यं न तु श्लिष्टता ।**

**तदेतदाह—अत्र तनुत्वेत्यादि । तनुत्वादिधर्मसाम्यात् कथं लताव्यवहारप्रतीतिरित्यत आह—तत्र च लतेत्यादि । विकासो हि लताया एव धर्मः । तत्समारोपो लोलाक्ष्यां लताव्यवहारप्रतीतेः कारणम् । ननु विकासस्य लतैकगामित्वात् कथं साधारण्यमित्यत आह—विकासस्त्वित्यादि । यथैवं विशेषणसाधारण्यं धर्मसमारोपश्च व्यवहारसमारोपस्य कारणं तथा कार्यसमारोपोऽपीति व्युत्पादयितुमाह—एवं च कार्येत्यादि । कार्यसमारोपनिबन्धनो हि भेद इह**

---

१. तनुत्वादि°—शा० । २. तत्र—नि० । ३. नियतलता°—नि० ।
४. च—अ० नास्ति । ५. तूप°—अ० । ६. एवञ्च—नि० ।
७. समासोक्तिः—अ० नास्ति । ८. अस्फुटा—अ० ।

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन[1] सुवेषा हरिणेक्षणा ॥९८॥

अत्र दन्तप्रभा पुष्पाणीवेति [2]सुवेषत्ववशादुपमागर्भत्वेन [3]च कृते समासे पश्चाद्दन्तप्रभासदृशैः पुष्पैश्चितेति समासान्तराश्रयणेन समान-विशेषणमाहात्म्याल्लताव्यवहारप्रतीतिः । अत्रैव 'परीता हरिणेक्षणा'

फूलों-जैसी दन्त-प्रभावाली, पल्लव-से करों से सुशोभित, केश-पाश की भ्रमरावली से सुन्दरवेष वाली यह मृगनयनी है ॥९८॥

यहाँ सुन्दरवेष के कारण 'फूलों के समान दन्तप्रभा' यह उपमागर्भ समास कर लेने के बाद दन्तप्रभा के समान फूलों से लदी हुई इस दूसरे समास के द्वारा विशेषणसाम्य की महिमा से (नायिका में) लता-व्यवहार की प्रतीति होती है। इसी जगह (अर्थात् सुवेषा हरिणेक्षणा के स्थान पर) 'परीता हरिणेक्षणा' पाठ

धर्मसमारोपरीत्या सुज्ञानः । उपरि च शुद्धत्वेन पृथग् राशीकरिष्यति । अत इह नोदाहृतः । एवमादौ हि धर्मकार्ययोरन्यतरारोपमन्तरेणाप्रकृतोऽर्थो नाव-गम्यते प्रकरणनियन्त्रिताया अभिधायाः प्राकरणिकार्थ एवोपक्षयात् । अतो धर्मकार्ययोरन्यतरारोप एव व्यञ्जनव्यापारोत्थापनेनाप्रकृतार्थावगतिहेतुः । अतो विशेषणसाधारण्यनिबन्धना समासोक्तिः न्यायविदामेव विभक्तविषया, अस्फुट-त्वात् । तदिदमभिसन्धायाह—इयं चेत्यादि । पूर्वापेक्षया श्लिष्टविशेषण-निबन्धना पूर्वा तदपेक्षयेत्यर्थः ।

दन्तप्रभापुष्पचितेति । अत्रानपेक्षिताख्यातके वाक्ये श्रवणसमनन्तरमेव दन्तप्रभापुष्पचितत्वाविना हेतुना हरिणेक्षणायाः सुवेषता प्रतीयते । अतस्तदा सुवेषत्वलक्षणकार्यवशाद् विशेषणानां दन्तप्रभाः पुष्पाणीवेत्युपमासमासपरत्वम् । अथ दन्तप्रभासदृशैः पुष्पैरिति मध्यमपदलोपिसमासान्तरप्रत्यायितैः पुष्पपल्लवा-दिभिर्विशेषणसाम्यदशायां लताव्यवहारप्रतीतिः । तदेतदवबोधयति—अत्र दन्तप्रभा इत्यादिना । लताव्यवहारप्रतीतिरिति वदता रूपकसमासस्याप्राप्ति-रासूचिता । व्यवहारसमारोपे समासोक्तिः रूपसमारोपे तु रूपकमिति प्रति-पादितं यतः, अतः प्रतीतोऽपि रूपकसमास इह न्यायतो न प्राप्नोति । नन्वेवमादौ प्रागुपमासमाससमाश्रयणनिमित्तं यदि सुवेषत्वादि नोपात्तं तदा किं स्यादित्यत आह—अत्रैव परीतेत्यादिना । परीता केशपाशालिवृन्देन परिगता । इह

१. °वृन्देव—नि० । २. °दुपमानग°—शा० ना० ।
३. च—अ० शा० ना० नास्ति ।

इति पाठे उपमारूपकसाधक[1]-बाधकाभावात्संकरसमाश्रयेण कृते [2]योजने पश्चात्पूर्ववत्समासान्तरमहिम्ना लताप्रतीतिर्ज्ञेया। रूपकगर्भत्वेन तु समासान्तराश्रयणात्समानविशेषणत्वं भवदपि न समासोक्तेः प्रयोजकम्। एकदेशविवर्तिरूपकमुखेनैवार्थान्तरप्रतीतेस्तस्या [3]वैयर्थ्यात्। न च [4]पूर्वनिदर्शितोपमासंकरविषये एष न्यायः। उपमासंकरयोरेकदेशविवर्तिनोरभावात्।

होने पर उपमा या रूपक का साधक या बाधक (प्रमाण) न होने से संकर (समास) का आधार लेकर योजना कर लेने पर पुनः पहले की भाँति समासान्तर की महिमा से लता की प्रतीति हो जाएगी।[5] यद्यपि रूपक-गर्भ समासान्तर का आश्रय लेकर समान-विशेषणता हो सकती है पर वह समासोक्ति का प्रयोजक नहीं बन सकती है। क्योंकि एकदेश-विवर्ति रूपक के माध्यम से ही अर्थान्तर की प्रतीति हो जाने से यह (समासोक्ति) व्यर्थ हो जाएगी। किन्तु यह बात पूर्वोक्त उपमा तथा संकर के विषय में लागू नहीं होती है क्योंकि उपमा तथा संकर एकदेशविवर्ति नहीं होते हैं।

दन्तप्रभा पुष्पाणीवेत्यादिना किमुपमासमासः उत दन्तप्रभा एव पुष्पाणीत्यादिको रूपकसमास इति सन्देहः। उपमारूपकयोः साधकबाधकाभावात्। अतः सन्देहरूपकसमासाश्रयेण पूर्वं योजना। न च मन्तव्यं समासःसन्देहादुपप्लव इति सन्देहस्य कविप्रतिभोत्थापितस्य विच्छित्तिरूपत्वात्। अतः सङ्करसमासाश्रयेणादौ योजना। अथ सन्देहोपशमसमये दन्तप्रभासदृशैः पुष्पैरित्यादिना

१. रूपकसाधकाभावात्—अ०।
२. कृते योजने—शा० नास्ति।
३. वैयर्थ्यम्—शा० (?)।
४. प्राङ्°—अ०। पूर्वद° नि०।
५. उपर्युक्त श्लोक (९८) में 'सुवेषा हरिणेक्षणा' पाठ उपमासमास का साधक है। अतः उपमा-समास के बाद ही दूसरे समास—दन्तप्रभासदृशैः पुष्पैश्चिता—से नायिका में लता की प्रतीति हो पाती है। 'परीता हरिणेक्षणा' पाठ उपमा या रूपक का साधक या बाधक नहीं है। अतः दोनों समास—उपमा-समास तथा रूपक-समास—कर लेने के बाद पहले की भांति 'दन्तप्रभासदृशैः पुष्पैश्चिता' इस समासान्तर से ही लता की प्रतीति होगी। क्योकि रूपक-समास द्वारा प्राप्त विशेषण-साम्य समासोक्ति का प्रयोजक न होकर एकदेशविवर्ति रूपक की ही प्रतीति कराता है।

तच्चैकदेशविवर्तिरूपकमश्लेषेण श्लेषेण च भवतीति द्विविधम्। अश्लिष्टं यथा—

निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं[1] ररास ॥९९॥

अत्र निरीक्षणानुगुण्याद्विद्युन्नयनैरिति [2]रूपके सिद्धे पयोदस्य द्रष्टृ-[3]पुरुषरूपणमार्ततरं ररासेत्यत्र प्रतीयमानोत्प्रेक्षाया निमित्तत्वं[4] भजते।

वह एकदेशविवर्ति रूपक श्लेष के विना तथा श्लेष से होता है, इस प्रकार दो प्रकार का है।

श्लेष के विना (एकदेशविवर्तिरूपक) जैसे—

विद्युत-नयनों से रात में अभिसारिका का मुख देखकर 'कहीं धारावृष्टि के साथ इस चन्द्रमा को तो नहीं उगल दिया है' यह सोचकर मेघ अत्यन्त आर्त होकर चिल्लाने लगा ॥९९॥

यहाँ 'देखने' की समानता को लेकर 'विद्युन्नयनों से' इस (पद) में रूपक की सिद्धि हो जाने पर, मेघ का दृष्टा पुरुष के रूप में रूपण, 'अत्यन्त आर्त होकर चिल्लाने लगा' इस प्रतीयमान उत्प्रेक्षा का निमित्त बन गया है।

पूर्ववदेव मध्यमपदलोपिसमासेन लताव्यवहारप्रतीतौ समासोक्तावेव विश्रान्तिः। इत्थं च सति उपमासमासगर्भतया सङ्करसमासगर्भतया च समासोक्तिभेदोऽयं द्विधा दर्शितो मन्तव्यः।

ननु केवलरूपकसमासाश्रयेऽपि समासोक्तिभेदोऽयं किं नेष्यत इत्यत आह—रूपकगर्भत्वेन त्विति। प्राग् रूपकसमासे। अथ तद्गर्भतयोपमा-समासाश्रये यद्यपि विशेषणसाम्यं भवत्येव अथापि न तत् समासोक्तेः प्रयोजकम्। कुतः? एकदेशविवर्तिरूपकमुखेनैव लताव्यवहारप्रतीतौ समासोक्तेर्वैयर्थ्यात्। ननूपमासमासे सङ्करसमासे च समासोक्तिवैयर्थ्यं किं न स्यादित्यत आह—न च प्राङ्निदर्शितेत्यादि। एष न्यायः समासोक्तिवैयर्थ्यापत्तिलक्षणः। तत्र हेतुमाह—उपमासङ्करयोरेकदेशविवर्तिनोरभावादिति। न ह्युपमा-लङ्कारः सङ्करालङ्कारश्चैकदेशविवर्तित्वेन केनचिदनुशिष्टौ अतः स्वतन्त्रा-लङ्कारत्वसंशयान्नान्यवाधक्षमौ। रूपकं त्वेकदेशविवर्तित्तयानुशिष्टमन्यबाध-

---

१. इति—शा० ना० पुस्तकयोर्नास्ति।
२. रूपकम्—ना० शा१। रूपके पयोदस्य—नि०।
३. °षनिरूपण°—नि०। ४. निमित्तताम्—अ०।

श्लिष्टं यथा–

मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चय-
[1]न्निव किल बृहत्पत्रन्यस्तद्विरेफमषीलवैः ।
कुटिललिपिभिः [1]कं कायस्थं न नाम विसूत्रय-
न्व्यधित विरहिप्राणेष्वायव्ययावधिकं मधुः ॥१००॥

अत्र हि पत्रलिपिकायस्थशब्देषु श्लेषगर्भं रूपकं द्विरेफमषीलवैरि-त्येतद्रूपकनिमित्तम् । अस्य च प्रचुरः प्रयोगविषय इति न[2] समासो-क्तिबुद्धिः कार्या ।

श्लिष्ट जैसे—

वसन्त ने विशाल पत्र (तथा बहीखातों) में डाली हुई भ्रमररूपी स्याही की बूंदों से कामदेव के गणनास्थान में लेख-जोख (प्रविष्ठिओं) को मानो बिगाड़ते हुए, कुटिल तरीकों (तथा लिपियों) से किस कायस्थ (प्राणी तथा गणक) को कष्ट नहीं दिया । उसने विरही जनों के प्राणों का आय-व्यय अधिक बढ़ा दिया ॥१००॥

यहाँ पर पत्र (पता तथा बहीखाता) लिपि (तरीका तथा लिपि-लिखावट) तथा कायस्थ (प्राणी तथा गणक) शब्दों में श्लेषगर्भित रूपक, 'भ्रमररूपी स्याही की बूंदों से' (द्विरेफमषीलवैः) इस रूपक का निमित्त है । इस (एकदेशविवर्ति) के प्रयोग का क्षेत्र अत्यधिक है अतः (इसे) समासोक्ति नहीं समझना चाहिए ।

क्षममेव । अत एवंविधे विषये रूपकप्राप्तौ समासोक्तेरप्राप्तिरिति सोदाहरणं दर्शयितुमाह—तच्चैकदेशविवर्तीत्यादि ।

निरीक्ष्य विद्युन्नयनैरिति । पयोदो विद्युन्नयनैर्निशायामभिसारिकाया मुखं निरीक्ष्य धारानिपातैः सह चन्द्रो मया वान्त इति धियेवार्ततरं ररासेत्यर्थः । अत्राश्लिष्टमेकदेशविर्वात रूपकं समासोक्तेर्नावकाशं दिशतीति दर्शयति—अत्र निरीक्षणेत्यादि । निरीक्षणं हि पुरुषधर्मो न पयोदधर्मः अतः पुरुषानुसारेण योजनेन विद्युत एव नयनानीति रूपकमेव न पुनरुपमा सङ्करो वा । अतः पयोदे द्रष्टपुरुषरूपणमर्थादित्येकदेशविर्वातता । तच्चेदमार्ततरं ररासेति प्रतीयमानोत्प्रेक्षाया एव निमित्तम् । समासोक्तेस्त्वप्राप्तिरेवेति भावः ।

मदनगणनेति । पत्राणि दलानि, तान्येव पत्राणि तालदलानि । लिपयो रीतयस्ता एव लिपयोऽक्षरविनिवेशाः ।

१. °विचकिल°—अ० ।  २. नात्र—अ० ।

**तदेवं श्लिष्टविशेषणसमुत्थापितैका। साधारणविशेषणसमुत्थापिता [1]तु धर्मकार्यसमारोपाभ्यां[2] द्विभेदा। औपम्यगर्भविशेषणसमुत्थापितोपमा-संकरसमासाभ्यां द्विभेदा। रूपकसमासाश्रयेण[3] तु भेदद्वयमस्या न विषयः। तदेवं पञ्चप्रकारा समासोक्तिः।**

इस प्रकार श्लिष्ट विशेषणों से उत्थापित (समासोक्ति) एक (प्रकार की) है। साधारण विशेषणों से उत्थापित (समासोक्ति) धर्मसमारोप और कार्यसमारोप से दो प्रकार की है। सादृश्यगर्भित विशेषणों से उत्थापित (समासोक्ति) उपमासमास तथा संकरसमास से दो तरह की होती है। पर रूपकसमास का आश्रय लेकर दो भेद (श्लिष्ट तथा अश्लिष्ट) इस (अलंकार) के विषय नहीं हैं। इस प्रकार समासोक्ति पांच प्रकार की है।[4]

कायस्थो देही स एव कायस्थो गणकः। एषु रूपणसामर्थ्यान्मदनो महाराजतया मधु च श्रीकरणाग्रणीत्वेन रूपितः प्रतीयते। तदेतदुपदर्शयति—अत्र हि पत्रलिपीत्यादि। ननु पत्राणि पत्राणीवेत्यादिरुपमा किं न स्यादित्यत आह—द्विरेफमषीत्यादि। मषीयोगो हि मधावसम्भवन्नुपमासमासं बाधित्वा गणकवृत्ते सम्भवंस्तदनुसारेण रूपकसमासं साधयतीति यावत्। ननु समासोक्ति-प्रस्तावे सोदाहरणं किं रूपकभेदप्रदर्शनेनेत्यत आह—अस्य च प्रचुर इत्यादि। अस्य एकदेशविवर्तिरूपकस्य। अत्रावान्तरश्लोकौ—

स्यादौपम्यसमासेन समासोक्तिर्विनिश्चये।
स्यात् सङ्करसमासेन समासस्य तु संशये॥

---

१. तु—ना० शा० शा१ नास्ति। २. धर्मकार्यसमारोपाभ्याम्—ना० नास्ति। ३. रूपकासमाश्रयेण—नि०।

४.



इयं च शुद्धकार्यसमारोपेण, विशेषणसाम्येनोभयमयत्वेन [१]प्रथमं त्रिधा समासोक्तिः। विशेषणसाम्यं च[२] पञ्चप्रकारं निर्णीतम्। सर्वत्र चात्र व्यवहारसमारोप एव जीवितम्। स च लौकिके [३]वस्तुनि लौकिकवस्तुव्यवहारसमारोपः। शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः। लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः। शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा भवति। तदेवं [४]बहुप्रकारा समासोक्तिः।

प्रथमतः यह (समासोक्ति), शुद्ध कार्य के समारोप से, विशेषणसाम्य से तथा उभयरूपता (कार्यसमारोप तथा विशेषण-साम्य) से तीन प्रकार की है। यह निश्चित किया जा चुका है कि विशेषण-साम्य पांच प्रकार का होता है।[५] यहाँ सर्वत्र व्यवहार-समारोप ही प्रधान है। यह (व्यवहार-समारोप) चार तरह से होता है : लौकिक वस्तु में लौकिक वस्तु के व्यवहार का समारोप, शास्त्रीय वस्तु में शास्त्रीय वस्तु के व्यवहार का समारोप, इसके विपरीत लौकिक (वस्तु) में शास्त्रीय वस्तु के व्यवहार का समारोप तथा शास्त्रीय (वस्तु) में लौकिक वस्तु के व्यवहार का समारोप। इस प्रकार समासोक्ति के अनेक भेद हैं।

न रूपकसमासस्य प्राप्तावस्याः प्रवर्तनम्।
रूपकादर्थसंसिद्धेरेकदेशविवर्तिनः॥

अथ प्रभेदान्तरप्रथनायोक्तभेदान् संचष्टे—तदेवमित्यादिना। इयं च खलु श्लिष्टात्, साधारणादौपम्यगर्भाच्चेति विशेषणवैचित्र्यत्रयात् त्रिधोद्दिष्टा तत्रश्लिष्टाद् विशेषणादेकविधा, साधारणात् पुनर्धर्मसमारोपकार्यसमारोपाभ्यां द्विधा। श्लिष्टाश्लिष्टतया तु रूपकसमासद्वयमस्या न विषयः। अतः पञ्च प्रकाराः। इत्थं विशेषणसाम्यात् पञ्चप्रकारत्वसिद्धाववान्तरविशेषसहितामिमां पुनस्त्रिराशिकतया च संचष्टे—इत्थं शुद्धकार्येत्यादिना। कार्यस्य शुद्धत्वं नाम

---

१. च प्रथमं—अ०। २. च—अ० नास्ति।

३. वस्तुनि—ना० नास्ति।

४. बहुप्रपञ्चा°—भा० भा१ अ१ पाठानुसारम्।

५. श्लिष्ट विशेषण-साम्य, धर्मसमारोप द्वारा साधारण (अर्थात् अश्लिष्ट) विशेषणसाम्य, कार्यसमारोप द्वारा साधारण विशेषणसाम्य, उपमासमास के द्वारा सादृश्यगर्भित विशेषणसाम्य तथा संकरसमास द्वारा सादृश्यगर्भित विशेषणसाम्य।

तत्र शुद्धकार्यसमारोपेण यथा—

विलिखति [1]कुचावुच्चैर्गाढं करोति कचग्रहं
लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसाम्।
क्षितिप खदिरः श्रोणीबिम्बाद्विकर्षति चांशुकं
मरुभुवि हठात्त्रस्यन्तीनां तवारिमृगीदृशाम् ॥१०१॥

अत्र पत्रावलीविलेखनादिशुद्धकार्यसमारोपात्खदिरस्य हठकामुक-

इनमें से शुद्ध कार्यसमारोप से (समासोक्ति) जैसे—

राजन् ! मरुस्थल में डरती हुई तुम्हारी शत्रुरमणियों के स्तनों को खदिर (वृक्ष) जोर से खरौंच रहा है, बालों को घसीट रहा है, सुन्दर मुख पर बेतुकी पत्र रचना बनाए डाल रहा है और कटितट से जबर्दस्ती साड़ी खींचे जा रहा है ॥१०१॥

यहाँ पत्ररचना बनाना आदि शुद्ध (जो केवल नायक ही कर सकता है

निरूपितचरविशेषणसाम्यात् सङ्कीर्णता। प्रथमं विशेषणसाम्यनिबन्धनभेदोदयादर्वागित्यर्थः। अत्रैतदाकूतम्—विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे हि समासोक्तिः। तच्च विशेषणसाम्यं शुद्धकार्यसमारोपे सत्युपचरितं यथा विलिखतीत्यादावुदाहरिष्यमाणे, स एको राशिः। यदा पुनरिदमनुपचरितं तदा पञ्चधोदाहृतं प्राक्, स द्वितीयः। उभयमयत्वेन तृतीयो राशिः। अनुपचरितविशेषणसाम्यनिबन्धनस्य न्यायनिर्भरत्वेन प्राक् प्रदर्शनं पञ्चविधत्वेन कृतमिति। अथ तदेव प्राक् प्रदर्शनमनुस्मारयति—विशेषणसाम्यं चेति। ननु शुद्धकार्यसमारोपे विशेषणसाम्यमुपचरितम्, अन्यदा त्वनुपचरितम्। अनुगतमेकरूपं तु प्रयोजकं नानुपश्याम इत्यत आह—सर्वत्र चात्रेत्यादि। एवकारेण तदेकप्राणतां समासोक्तेरभिप्रैति। तस्य चातुर्विध्यं दर्शयति—स च लौकि॰ इत्यादि। वस्तु जातिगुणादि। अनेन च व्यवहारसमारोपचातुर्विध्येन राशित्रयमपि प्रत्येकं चतुर्धा प्रथते। अतः समासोक्तिः प्रपञ्चवतीत्याह—तदेवं बहुप्रकारेति। तत्राद्यं राशिमुदाजिहीर्षुराह—तत्र शुद्धकार्येति।

विलिखतीति। उच्चैर्विलेखः, गाढं कुचग्रहः, पत्रावल्या असामञ्जस्यम्, अंशुकविकर्षश्चेति हठकामुककार्यम्। हठादिति विकर्षणविशेषणम्। अत्रोपचरितत्वादप्रस्तुतावगतौ विशेषणसाम्यं नातिबद्धभरम्। अपि तु शुद्धकार्य-

[1]. कुचानु°—ना०।

[1]व्यवहारप्राप्तिः । विशेषणसाम्येनोदाहृता[2] । उभयमयत्वेन यथा—

निर्लूनान्यलकानि पाटितमुरः कृत्स्नोऽधरः खण्डितः
कर्णे रुग्जनिता कृतं च नयने नीलाब्जकान्ते क्षतम् ।
यान्तीनामतिसंभ्रमाकुलपदन्यासं मरौ[3]नीरसैः
किं किं कण्टकिभिः कृतं न तरुभिस्त्वद्वैरिवामभ्रुवाम् ॥१०२॥

उन) कार्यों का समारोप होने से खदिर (वृक्ष) में हठी कामुक का व्यवहार प्रतीत होता है। विशेषणसाम्य से (समासोक्ति का) उदाहरण दिया जा चुका है[4]। उभयरूपता (कार्यसमारोप तथा विशेषणसाम्य दोनों के आधार) से जैसे—

मरुस्थल में घबड़ाहट से लड़खड़ाती चाल से भागने वाली तुम्हारी शत्रु कान्ताओं के केश नोच लिए वक्षःस्थल फाड़ डाला, सारा अधर विक्षत कर डाला, कानों में पीडा पैदा कर दी, नील कमल-सी सुन्दर आँखों को चोट पहुंचाई, रसहीन कण्टकी पेड़ों ने क्या-क्या नहीं किया ॥१०२॥

**समारोप एवेत्याह—अत्र पत्रावलीत्यादि । खदिरेऽत्यसम्भवात् पत्रावलीग्रहः । व्युत्क्रमोक्तानां क्रमभावस्वारस्यायानुस्मारयति—विशेषणसाम्येनेति । विशेषणसाम्ये हि यदा श्लिष्टता तदोभयार्थता, यदा साधारण्यं तदोभयत्र प्रवृत्तिनिमित्तसम्भवः, यदौपम्यगर्भविशेषणता तदापि समासभेद इति विशेषणसाम्यवशादेवाप्रस्तुतावगतिरिति ज्ञेयम् ।**

**अथोभयमयत्वेनोदाहरति—निर्लूनानीति । नीरसैः शुष्कैरहृदयैश्च । कण्ट-**

---

१. °कामुकत्वप्रतीतिः—नि० । कामुकव्यवहारप्रतीतिः—अ० ।
२. °हृतम्—ना० ।
३. नीरसे—ना० ।
४. यहाँ विशेषण-साम्य से ग्रन्थकार का अभिप्राय स्पष्ट या विवक्षित कार्यसमारोप के न रहने पर श्लिष्ट, अश्लिष्ट तथा सादृश्यगर्भित विशेषणसाम्य से है, जिनका विवेचन एवं उदाहरण श्लोक सं० ९६, ९७ तथा ९८ में दिए जा चुके हैं। श्लोक सं० ९७ में ग्रन्थकार ने धर्मसमारोप का भी उल्लेख किया है अतः कार्यसमारोप को छोड़कर विशेषणसाम्य यहाँ अभिप्रेत है।

अत्र नीरसैः कण्टकिभिरिति विशेषणसाम्यम्। निर्लूनान्यलका[1]नीत्यादिषु च कार्यसमारोपः। व्यवहारसमारोपप्रकारचतुष्टये क्रमेणोदाहरणम्। यथा—

द्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब
रुद्धाम्बरां[2] शशिकलामलिखत्कराग्रैः।
अन्तर्निमग्नचरपुष्पशरोऽतितापा-
त्किं किं चकार तरुणो न यदीक्षणाग्निः ॥१०३॥

लौकिकं च वस्तु रसादिभेदान्नानाभेदं[3] स्वयमेवोत्प्रेक्ष्यम्[4]।

यहाँ 'रसहीन कण्टकी' में विशेषणों का साम्य है। और 'केश नोच लिए' आदि में कार्य का समारोप है। व्यवहारसमारोप के चार भेदों के क्रमशः उदाहरण जैसे--(लौकिक वस्तु में लौकिक वस्तु का व्यवहार समारोप)

उस (शंकर) की तरुण नेत्राग्नि ने जिसके अन्दर कामदेव डूबा बैठा हुआ था अत्यन्त ताप के कारण क्या क्या नहीं किया; आकाश का आलिंगन कर डाला, दिशाओं का मुंह चूम लिया, अम्बर में फैली हुई चांदनी को कराग्र से लिख डाला ॥१०३॥

लौकिक वस्तु के रसादि के भेद से अनेक भेद होते हैं जिनकी स्वयमेव कल्पना कर लेनी चाहिए।

किभिः क्षुद्रशङ्कुमद्भिः घातकजनयोगिभिश्च। उभयत्वं योजयति—अत्र कण्टकिभिरितीति। एषु त्रिषु राशिषु व्यवहारसमारोपवैचित्र्यनिबन्धनान् भेदानुपदर्शयितुकाम आह—व्यवहारसमारोपेत्यादि। द्यामालिलिङ्गेति। अम्बरं नभो वासश्च। अन्तर्निमग्नचरपुष्पशरत्वांरन्दाहेन। तरुणः प्रबलो युवा च। अत्राम्बरकरतरुणेषु विशेषणसाम्यम्। अन्यत्र कार्यसमारोषः। अत्र लौकिकवस्तुनि लौकिकवस्तुव्यवहारसमारोपः प्रदर्शितोदाहरणेषु च। तत्र लौकिकं वस्तु विविधमित्याह—लौकिकं चेति। यैरिति। एकरूपम् अविकृतम्। वृत्तिषु

---

१. नीत्यादीषु का°—अ० नि०।
२. °रम्—शा०। °रः—अ०।
३. °रूपं—अ०।
४. एव—अ० शा० नास्ति।

यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् ।
लोपः कृतः [1]किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥१०४॥

[2]अत्रागमशास्त्रप्रसिद्धे वस्तुनि [3]व्याकरणप्रसिद्धवस्तुसमारोपः ।

(शास्त्रीय वस्तु में शास्त्रीय वस्तु का व्यवहार-समारोप जैसे—)

जो लोग तुम्हें समग्र वृत्तियों में एकरूप, अव्यय और असंख्यरूप में प्रवृत्त समझ कर किसी दूसरे को परम नहीं मानते हैं वे ही तुम्हारा स्वरूप सचमुच समझ पाते हैं ॥१०३॥

यहाँ आगम शास्त्र में प्रसिद्ध वस्तु पर व्याकरण (शास्त्र) में प्रसिद्ध वस्तु का समारोप है ।[4]

जागरितादिषु । अव्ययं सौषुप्तादिष्वस्थगितम् । अत एवासंख्यतया प्रवृत्तम् । जागरे विश्वः प्रथमः, स्वप्ने तैजसो द्वितीयः, सौषुप्ते प्राज्ञस्तृतीयः इति संख्यया वस्तुतो रहितम् । तुरीयस्य सर्वानुस्यूतत्वात् । उक्तं हि श्रीमद्गौडपादैः—'माया संख्या तुरीयमिति । यैरीदृशं त्वां पश्यद्भिः, परत्वजुषो विभक्तेर्लोपः कृतः अस्मात् परमस्तीति विभागो लुप्तस्तैस्तव लक्षणं कृतं मन्ये । परमेश्वरस्य हि सर्ववृत्तिष्वेकरूपत्वम् अव्ययत्वमसङ्कुचतया न कुतश्चिद्देशकालादेर्भेद इतीदमेव लक्षणम् । इदमागमशास्त्रप्रसिद्धं वस्तु । अथ सर्वासु कारकादि-

---

१. खलु—अ० ।

२. अत्रागम°—इत्यतः पूर्वम् "एवं तर्कायुर्वेदज्योतिःशास्त्रप्रसिद्धवस्तुसमारोपो बोद्धव्यः" इति पाठः शा१ पुस्तके ।

३. व्याकरणशास्त्र°—अ० ना०

४. आगमशास्त्र में शिव का स्वरूप अविकृत, अव्यय एवं जाग्रतादि की संख्या से परे बताया गया है। शिव ही परम है उससे उत्तर या परम कोई दूसरा तत्त्व नहीं है । श्लोक में आए वृत्ति (कारकादि), संख्यारहित अव्यय, प्रथमादि विभक्ति आदि प्रयोग व्याकरण के पारिभाषिक शब्द हैं जिनका शिव के आगमोक्त स्वरूप-वर्णन में उपयोग किया गया है ।

सीमानं न जगाम यन्नयनयोर्नान्येन यत्संगतं
न स्पृष्टं वचसा कदाचिदपि यद्दृष्टोपमानं न यत् ।
अर्थादापतितं न यन्न च न यत्तत्किंचिदेणीदृशां[1]
लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारकृत्[2] ॥१०५॥

अत्र लावण्ये लौकिके [3]वस्तुनि मीमांसाशास्त्रप्रसिद्धवस्तुसमारोपः[4] । [5]एवं तर्कायुर्वेदज्योतिःशास्त्रप्रसिद्धवस्तुसमारोपो बोद्धव्यः ।

जो नयन की सीमा से परे है (प्रत्यक्ष), जिसका किसी दूसरे से साहचर्य नहीं है (अनुमान), जो वाणी द्वारा अछूता है (शब्द), जिसका कभी उपमान दिखाई नहीं देता है (उपमान), जो अर्थबल से आक्षिप्त नहीं होता है (अर्थापत्ति), जो अभाव नहीं है (अनुपलब्धि); (छह) प्रमाणों से परे हिरण-नयनी का वह लावण्य सर्वश्रेष्ठ है ॥१०५॥

यहाँ लौकिक वस्तु लावण्य में मीमांसा-शास्त्र में प्रसिद्ध वस्तु (प्रत्यक्षादि छह प्रमाण) का समारोप है । इसीप्रकार तर्कशास्त्र, आयुर्वेद एवं ज्योतिःशास्त्र में प्रसिद्ध वस्तु का (लौकिक वस्तु में) समारोप समझ लेना चाहिए ।

वृत्तिष्वेकरूपम् एकत्वादिसंख्यारहितम् । अव्यये हि द्व्यादिप्रतियोग्येकत्वं नास्ति किन्तु अभेदैकत्वमेव । ईदृशमव्ययं पश्यद्भिः परत्वजुषः प्रकृतेः परत्वलक्षणाया विभक्तेः प्रथमादेर्लोपः कृतः । इदमव्ययलक्षणं "सदृशं त्रिषु लिङ्गेषु" इत्यादिना प्रतिपादितम् । इदं व्याकरणप्रसिद्धं वस्तु । अत्र विशेषणसाम्यमेव ।

सीमानमिति । अत्र नयनसीमालङ्घनेन प्रत्यक्षप्रमाणस्याविषयता । अन्येनासङ्गत्या नियतसम्बन्धाभावादनास्पदमनुमानस्य । वचःस्पर्शाभावाच्छब्दस्य लौकिकस्य । अदृष्टोपमानतयोपमानस्य । अर्थादनापातादर्थापत्तेः । न च न यदिति प्रमाणातिवृत्तावपि वस्तुत ईदृशि लावण्ये मीमांसादिदृष्टादृष्टादिवस्तुसमारोपः, चोदनैकलक्षणस्य तस्य प्रमाणान्तरासन्निकर्षादत्र विशेषणसाधारण्यम् । शास्त्रीयस्य वस्तुनो वैविध्यं दर्शयति एवं तर्केत्यादि ।

---

१. °दृशः—अ० शा० । २. चमत्कारकम् अ० नि० ना० ।
३. वस्तुनि शा० ना० शा१ नास्ति ।
४. °पः बोद्धव्यः—अ० ।
५. एवं…बोद्धव्यः—शा१ नास्ति ।

[1]स्वपक्षलीलाललितैरुपोढहेतौ स्मरे दर्शयतो विशेषम् ।
मानं निराकर्तुमशेषयूनां पिकस्य [2]पाण्डित्यमखण्डमासीत् ॥१०६॥

[3]अत्र तर्कशास्त्रप्रसिद्धवस्तुसमारोपः। पाण्डित्यशब्दः प्रकृते लक्षणया व्याख्येयः।

मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः।
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधौ ॥१०७॥

[4]अत्रायुर्वेदशास्त्रप्रसिद्धवस्तुसमारोपः।

अपने पंखों (पक्ष) की विलासमयी चेष्टाओं द्वारा शस्त्र से सज्जित (उपोढहेतौ) कामदेव में विशेषता पैदा करने वाले कोयल की पण्डिताई सारे नवयुवकों का मान खण्डित करने के लिए अखण्डित थी ॥१०६॥

यहाँ तर्कशास्त्र में प्रसिद्ध वस्तु (पक्ष-जिसमें साध्य की सिद्धि की जाती है, हेतु तथा मान-प्रमाण) का समारोप है। पण्डिताई शब्द की व्याख्या (प्रस्तुत) प्रसंग में लक्षणा द्वारा करनी चाहिए।

औषधिपति (चन्द्रमा तथा वैद्य के न रहने पर सूर्य की किरणों ने अग्नि को मन्द बना दिया। अन्धकार बढ़ गया (आँख का रोग—तिमिर—फूल आया), और आंखों में तिमिर से उत्पन्न दोष आ गए ॥१०७॥

यहाँ आयुर्वेदशास्त्र में प्रसिद्ध वस्तु (मन्दाग्नि, श्वयथु—शोफरोग—, तिमिर—आंख का रोग, तथा औषधिपति—वैद्य) का समारोप है।

**स्वपक्षेति।** पक्षो गरुत् साध्यधर्मविशिष्टो धर्मी च। हेतिरायुधं हेतुर्लिङ्गं च। विशेषोऽतिशयः पदार्थविशेषश्च। मानं रोषः प्रमाणं च।

**मदमग्निमिति।** अत्र मन्दाग्निश्च यथा (श्वयुथ) तिमिरदोषाविर्भाव ओषधिपतेः भिषजोऽसन्निधाविति। अत्र विशेष्यांशेऽपि साम्यमित्युदाहरणान्तरं यद्वा चन्द्रमस इति विशेष्याध्याहारादोषधिपतेरित्येतद् विशेषणतया विवक्षणीयम्।

---

१. 'स्वपक्षे'त्यादिपद्यात्पूर्वमयमधिकः श्लोकः अ० पुस्तके दृश्यते—
"दशवक्त्रविवादेऽस्मिन्नुत्खातखरदूषणः।
स्वपक्षकक्ष्यां वीरोऽयं दूरमारोपयिष्यति" ॥

२. °मशेषमा°—ना०। ३. अत्र लौकिके वस्तुनि—अ०।

४. °शास्त्र°—नि० नास्ति।

गण्डान्ते मददन्तिनां[1] प्रहरतः क्ष्मामण्डले वैधृते
रक्षामाचरतः[2] [3]सदा विदधतो लाटेषु [4]यात्रोत्सवम् ।
[5]पूर्वामत्यजतः [6]स्थितिं शुभकरीमासेवमानस्य[7] ते
वर्धन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम् ॥१०८॥

अत्र ज्योतिःशास्त्रप्रसिद्धवस्तुसमारोपः ।

प्रसर्पत्तात्पर्यैरपि सदनुमानैकरसिकै-
रपि ज्ञेयो [8]नो यः परिमितगतित्वं परिजहत् ।
अपूर्वव्यापारो गुरुवर बुधैरित्यवसितो[9]
न वाच्यो नो लक्ष्यस्तव सहृदयस्थो गुणगणः ॥१०९॥

मतवाले हाथियों के गण्डस्थल में प्रहार करने वाले, जीते हुए भूभाग की रक्षा करने वाले लाट देश में सदा यात्रोत्सव मनाने वाले, मंगलमयी प्राची दिशा का (विजयहेतु प्रस्थान के लिए) सेवन करने वाले तुम्हारी विजयश्री बढ़ती जा रही है । कल्याणी पुरषों के लिये कौन मंगलमय नहीं हो जाता है ॥१०८॥

यहाँ ज्योतिःशास्त्र में प्रसिद्ध वस्तु (गण्ड—नक्षत्र-विशेष की सन्धि, वैधृत—राशियों का योगविशेष, तथा पूर्वा—पूर्वा फाल्गुनी नामक नक्षत्र) का समारोप है ।

गुरुवर ! तात्पर्य (तात्पर्य नामक शब्दशक्ति) का प्रसार करने वाले (मीमांसक), सत् अनुमान के एकमात्र रसिक (नैयायिक) भी जिसे जान नहीं पाते हैं, (अभिधा और लक्षणा की) परिमित गति को छोड़ने वाला, (व्यंजनारूप) अपूर्वव्यापार वाला, सहृदय में स्थित आपका वह गुणगण न तो वाच्य है और न लक्ष्य, यही विद्वानों की धारणा है ॥१०९॥

**प्रसर्पत्तात्पर्यैरिति । ये तात्पर्यविदो ये चानुमानरसिकास्तैरपि(अ)ज्ञेयश्चासौ पारिमित्यं जहाति । न च वक्तुं शक्यः, न च लक्षयितुम् किन्तु । गुरुवर तव स हृदयस्थो गुणगणो बुधैरपूर्वव्यापारः गुणगणान्तरव्यापारातिशायिव्यापार**

---

१. °दन्तिनः—ना० शा१ ।
२. °माददतः—अ० ।
३. क्रुधा—अ० । तदा—शा० ।
४. यत्र°—ना० शा१ ।
५. °माश्रयतः—अ० ।
६. गतिम्—अ० ।
७. °सेव्य°—नि० ।
८. यो नो—शा० ना० शा१ ।
९. °रध्यवसितो—अ० ।

अत्र भरतादिशास्त्रप्रसिद्धवस्तुसमारोपः। तथा ह्यत्र गुणगणगतत्वेन शृङ्गारादिरसव्यवहारः प्रतीयते। यतो रसो न तात्पर्यशक्ति[1]ज्ञेयः। नाप्यनुमानविषयः। न शब्दैरभिधाव्यापारेण [2]वाच्यीकृतः। न लक्षणागोचरः। किं तु विगलितवेद्यान्तरत्वेन परिहृतपारिमित्यो व्यञ्जनलक्षणापूर्वव्यापारविषयतो[3]ऽनुकार्यानुकर्तृगतत्वपरिहारेण सहृदयगत इति प्रसर्पत्तात्पर्यैरित्यादिपदै रस एव प्रतीयते। एवमन्यदपि ज्ञेयम्।

यहाँ भरत से प्रवर्तित शास्त्र (भरतादिशास्त्र) में प्रसिद्ध वस्तु का समारोप है। उदाहरण के लिये यहाँ गुणगण (माधुर्य ओज आदि) में रहने से शृंगारादि रस के व्यवहार की प्रतीति होती है। क्योंकि रस तात्पर्य शक्ति द्वारा नहीं जाना जा सकता है। वह अनुमान का भी विषय नहीं है। शब्दों द्वारा अभिधाव्यापार से वाच्य नहीं बनाया जा सकता है। न लक्षणा का विषय है किन्तु (रस) वेद्यान्तर के विगलित होने से परमितावस्था को छोड़ देने वाला है। व्यंजन नामक अपूर्व व्यापार का विषय होने से अनुकार्य (रामादि) तथा अनुकर्ता (नट) में विद्यमानता को छोड़कर सहृदय में रहता है अतः 'तात्पर्य का प्रसार करने वाले' (प्रसर्पत्तात्पर्यैः) इत्यादि पदों से रस की ही प्रतीति होती है। इसी प्रकार दूसरे (शास्त्रों में प्रसिद्ध वस्तु का समारोप) भी समझ लेना चाहिए।

इत्यवसितः। अत्र गुणगणे शृङ्गारादिरसव्यवहारः समारोपित इत्याह—अत्र भरतेत्यादि। रसं हि भरतोपज्ञमामनन्ति। विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरित्याम्नातम्। तद्व्यवहारमुपपादयति—तथा ह्यत्रेत्यादिना। न तात्पर्याशक्तिज्ञेय इति। तात्पर्यं हि नामाभिहितान्वयमते समन्वयशक्तिरभिधोत्तीर्णा। समन्वयमात्रश्रान्तयानया समन्वयसमनन्तरप्रतीतिको रसो न ज्ञायते। विभावानुभावव्यभिचारिभिः सह नियतसंबन्धाभावादनुमानस्यापि न विषयः। साक्षात् सङ्केताविषयत्वान्न वाच्यः। मुख्यार्थबाधाद्यभावात् नापि लक्ष्यः। अपि तु वेद्यान्तरविगलनादपरिमितः सन्नभिधालक्षणातात्पर्योत्तीर्णेन व्यञ्जनाख्येन

---

१. °शक्ति°—शा० ना० पुस्तकयोर्नास्ति।
२. शक्तिवाच्यी°—शा१।
३. विषयीकृतोऽनु°—अ०।

पश्यन्ती त्रपयेव यत्र तिरयत्यात्मानमाभ्यन्तरी[1]
यत्र श्राम्यति मध्यमापि मधुरध्वन्युज्जिगासारसात्[2] ।
चाटूच्चारणचापलं [3]वितनुतां वाक्तत्र बाह्या कथं
देव्या ते परया प्रभो सह रहःक्रीडा-[4]दृढालिङ्गने ॥११०॥

प्रभो ! जहाँ आभ्यन्तर पश्यन्ती (वाक्) मानो लज्जा से अपने को छुपा लेती है, जहाँ मध्यमा (वाक्) भी मधुर ध्वनि के कौतुक से विश्रान्त हो जाती है, परा देवी के साथ तुम्हारे उस एकान्त विहार के दृढ़ आलिंगन में बाह्य वाणी (वैखरी) भला कैसे मुखरता दिखा सकती है ! ॥११०॥

काव्यैकगामिना शास्त्रान्तरापूर्वण व्यापारेण विषयीक्रियमाणोऽलौकिकत्वादनुकार्यमभिनयप्रयासनिघ्नत्वादनुकर्तारं च परिहृत्य सहृदयैकगत इति तत एवावधार्य इत्यलम् ।

ज्योतिःशास्त्रादिवस्तुसमारोपोऽनया रीत्या ज्ञेय इत्याह — एवमन्यदिति ।

पश्यन्तीति । अत्रैतदुपह्वरम् — वाग्देवता हि परा, पश्यन्ती, मध्यमा, वैखरीति च चतुष्पदपरिमिता । तत्र नामरूपात्मकं प्रपञ्चं स्वात्मन्युपसंहृत्य स्वरूपज्योतीरूपिणी जागरितादिधामत्रयोल्लंघिनी परा, नामरूपप्रपञ्चोल्लासनाय प्राथमिकप्राणपरिस्पन्दाभिमानिनी कन्दमन्दिरान्मणिपूरकावधि प्रसरन्ती-बीजभावापन्ननिर्विभागवर्णमयी विश्वाभिमुखीभवन्ती सौषुप्तवृत्तिः पश्यन्ती । परायाः सकाशादुदिता, मणिपूरकादनाहतावधि प्राणपरिस्पन्दोत्क्षुभितबुद्धिवृत्त्यभिमानिनी वर्णपदाविपरिग्रहावन्तःसंजल्पात्मिका पश्यन्तीप्रभवा स्वप्नवृत्तिर्मध्यमा । अनाहतान्मुख्यकन्दरावधि प्रसृता बहिः संजल्पात्मिका स्थूला मध्यमोद्भवा जागरितवृत्तिर्वैखरी । आसां नामनिरुक्त्यादिविशेषः प्रथमश्लोकविवरणे प्रपञ्चितः । अथ संहारावसरे जागरितलयपुरस्कारेण वैखरी मध्यमायां प्रलीयते । मध्यमा स्वप्नलयपुरस्कारेण पश्यन्त्यां, सा च सौषुप्तलयपुरस्कारेण परायां, परा तुरीयपर्वात्मिका समाधिवृत्तिरुच्यते । इत्थं च सति शक्तिमानात्मा परायां तुरीयः, पश्यन्त्यां प्राज्ञः, मध्यमायां तैजसः, वैखर्यां विश्वः इत्यागमार्थदिक् ।

अथ शब्दसङ्गत्या व्याकुर्मः । प्रभो ! वश्येन्द्रियतया प्रभवनशील, तव

---

१. °रे—नि० शा० । २. °ज्जिघासा—नि१ ।
३. विदधताम्—नि० । ४. व्रीडा—शा१ ।

अत्रागमप्रसिद्धे वस्तुनि लौकिकवस्तुव्यवहारसमारोपः। लौकिकवस्तुव्यवहारश्च रसादिभेदाद्बहुभेद इत्युक्तं प्राक्। तत्र शुद्धकार्यसमारोपे कार्यस्य विशेषणत्वमौपचारिकमाश्रित्य विशेषणसाम्यादिति लक्षणं पूर्वशास्त्रानुसारेण विहितं यथाकथंचिद्योज्यम्। इह तु—

यहाँ आगम (शास्त्र) में प्रसिद्ध वस्तु (वाक् के चार भेद परा, पश्यन्ती, मध्यमा तथा वैखरी) पर लौकिक वस्तु के व्यवहार का समारोप है। लौकिक वस्तु का व्यवहार रसादि के भेद से अनेक प्रकार का है, यह पहले बताया जा चुका है।

जहाँ शुद्ध कार्य का समारोप होता है वहाँ कार्य की औपचारिक विशेषणता को लेकर 'विशेषण-साम्य से' (समासोक्ति होती है) पूर्वशास्त्र के अनुसार बनाया हुआ यह लक्षण कथमपि बैठा लेना चाहिए। किन्तु निम्नलिखित—

परया देव्या सह क्रीडादृढालिङ्गने अप्रयासेन तादृशि समाधिसामरस्ये प्रवृत्ते बाह्या वाक् कथं चाटूच्चारणचापलं स्फुटताल्वोष्ठपुटव्यापारमुखरतां कथं नाम वितनुताम्। चापलकथैव नास्तीत्यर्थः। कुतो नास्तीत्यत आह—आभ्यन्तरी पश्यन्ती त्रपयेवात्मानं यत्र तिरयति मध्यमापेक्षयाभ्यन्तरतमा स्वात्मानं न प्रकाशयितुमीष्टे। तुरीयपर्वणि प्राणानुदयात् यत्र मध्यमापि मधुरध्वन्युज्जिगासारसात् त्रुट्यति। अन्तःसंजल्परूपं मधुरमपि ध्वनिं नोन्मीलयतीत्यर्थः। यत्र परासमाधौ पश्यन्तीमध्यमयोरनुदयः तत्र वैखरी कथं नाम प्रवर्ततामिति तात्पर्यार्थः। अत्रागमसिद्धे वस्तुनि लौकिकवस्तुव्यवहारः शृङ्गारात्मकः समारोपितः। यथा परया देव्या पट्टमहिष्या सह तव क्रीडादृढालिङ्गने प्रवर्तमाने अन्या काचिदाभ्यन्तरी आभ्यन्तरत्वादेव युवयोरालिङ्गनं पश्यन्ती त्रपयेवात्मानं यत्र तिरयति गोपायति। मध्यमापि नाभ्यन्तरी न च बाह्या मध्यमवृत्तिः मधुरध्वनिर्यथा भवति तथा उज्जिगासारसात् त्रुट्यति। उद्गातुकामनाकौतुकादुपरमति। तत्र बाह्या परिग्रहवेश्या चाटूच्चारणचापलं कथं वितनुतामिति। अत्र लक्षणयोजनामाह—अत्रागमेति। लौकिके च वस्तुनि काव्योपयोगिवैविध्यमुक्तचरमनुस्मारयति - लौकिवस्त्विति।

ननु विशेषणसाम्यं समासोक्तिलक्षणमुक्तं शुद्धकार्यसमारोपे तु तदव्यापकमित्यत आह—तत्र शुद्धकार्येत्यादि। शुद्धकार्यसमारोपे हि विलिखति कुचावित्यादौ यत् कुचविलेखनादिहठकार्मुककार्यं तस्य यद्यपि न मुख्यतया खदिरादिविशेषणत्वमथाप्युपचारेण विशेषणीकरणं तद् यथाकथञ्चिल्लक्षणयोजना कार्या। ननु किमुपचाराश्रयणेनेत्यत आह—पूर्वशास्त्रानुसारेणेत्यादि।

ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥१११॥

[1]इत्यत्रास्ति तावद्रविशशिनोर्नायकत्वप्रतीतिः । न चात्र विशेषणसाम्यमिति सा कुतस्त्या । प्रसादयन्ती [2]सकलङ्कमिति विशेषणसाम्याच्छरदो नायिकात्वप्रतीतौ तदानुगुण्यात्तयोः समासोक्त्या नायकत्वप्रतीतिरिति चेत्, आर्द्रनखक्षताभमैन्द्रं धनुर्दधानेत्येतद्विशेषणं कथं साम्येन निर्दिष्टम् । न चैकदेशविवर्तिन्युपमोक्ता यत्सामर्थ्यान्नायकत्वप्रतीतिः स्यात् । तत्कथमत्र व्यवस्था । [3]अत्रोच्यते—एकदेशविवर्तिन्युपमा

पाण्डु पयोधर पर इन्द्रधनुष को नवीन नखक्षत की तरह धारण की हुई शरद् (ऋतु) कलंकी चन्द्रमा को प्रसन्न करती हुई सूर्य का ताप और भी अधिक बढ़ा दे रही थी ॥१११॥

इस उदाहरण में सूर्य तथा चन्द्रमा के नायक होने की प्रतीति होती ही है । यहाँ विशेषणसाम्य नहीं है फिर यह (समासोक्ति) कहाँ से हो गई ? 'कलंकी···को प्रसन्न करती हुई' इस विशेषणसाम्य से शरद् के नायिका होने की प्रतीति हो जाने पर इसकी अनुरूपता के कारण उन (सूर्य तथा चन्द्रमा) में समासोक्ति से नायक होने की प्रतीति होती है यदि यह कहें तो प्रश्न होगा कि 'नवीन नखक्षत के समान इन्द्रधनुष को धारण किए हुई' यह विशेषण साम्य के द्वारा क्यों दिया गया है ? (नवीन नखक्षत के समान इस अंश में विशेषण के औपम्य को लेकर) यहाँ एकदेशविवर्तिनी उपमा भी नहीं मानी जाएगी जिसके सामर्थ्य से नायक होने की प्रतीति हो सके । अतः यहाँ (समासोक्ति) किस प्रकार मानी जाएगी ? इस सम्बन्ध में कथन है – यद्यपि

अथ यत्र समासोक्तेरसामञ्जस्यं तत्र न्यायसञ्चारेण समञ्जसीकर्तुमाह—इह त्वित्यादिना । ऐन्द्रं धनुरिति । आर्द्रनखक्षताभमैन्द्रधनुः पाण्डुपयोधरेण दधाना सकलङ्कमिन्दुं प्रसादयन्ती शरद् रवेस्तापमभ्यधिकं चकार । पयोधरो मेघः कुचश्च । प्रसादातिशये कलङ्कोद्धुरीभावात् सकलङ्कत्वोक्तिर्जारत्वाविष्करणाय । प्रावृडपेक्षया शरदि रवेस्तापाधिक्यम् । अत्र चर्चः—अस्ति तावदित्यादि । नायकत्वप्रतीतिरस्तीति प्रतिज्ञाय तदाक्षिपति—न चात्रेति । सा कुतस्त्या नायकत्वप्रतीतौ नास्ति हेतुरित्यर्थः । हेतुसद्भावमाशङ्क्य निरा-

---

1. इत्यत्र—अ० नास्ति ।　　2. सकलङ्कमिन्दुमिति—अ० नि० ।
3. अत्र—ना० शा१ नास्ति ।

यदि प्रतिपदं नोक्ता [१]तत् सा केन प्रतिषिद्धा। सामान्यलक्षणद्वारेणा-यातायास्तस्या अत्रापि संभवात्। [२]अथात्र नोपमानत्वेन [३]नायकः स्व-स्वरूपेण प्रतीयते अपि तु रविशशिनोरेव [४]नायकत्वव्यवहारप्रतीतिः। तयोरत्र नायकत्वात्। [५]तदत्रार्द्रनखक्षताभमित्यत्र स्थितमपि श्रुत्योप-मानत्वं वस्तुपर्यालोचनया ऐन्द्रे धनुषि संचारणीयम्। इन्द्रचापाभं [६]नख-क्षतं दधानेति प्रतीतेः। यथा 'दध्ना जुहोति' इत्यादौ दध्नि संचार्यते विधिः। एवमियमुपमानुप्राणिता[७] समासोक्तिरेव। इह [८]तु पुनः

एकदेशविवर्तिनी उपमा का साक्षात् प्रतिपादन नहीं हुआ है पर उसका प्रतिषेध किसने किया है? सामान्य लक्षण के द्वारा प्राप्त यह (एकदेशविवर्तिनी उपमा) यहाँ भी सम्भव है। साथ ही यहाँ नायक की प्रतीति उपमान के रूप में नहीं अपितु सूर्य तथा चन्द्रमा में नायक की व्यवहार-प्रतीति स्वरूपतः होती है। क्योंकि वे दोनों (अर्थात् सूर्य और चन्द्र) यहाँ नायक हैं। अतः इस प्रकरण में (अत्र) 'नवीन नखक्षत के समान' इस अंश में सुनने में उपमानता रहने पर भी वस्तु-विवेचन के द्वारा (उस उपमानता को) इन्द्र-धनुष से सम्बद्ध कर लेना चाहिए क्योंकि 'इन्द्रधनुष के समान नखक्षत धारण किए हुई' यह प्रतीति (यहाँ) होती है। जैसे कि 'दधि से हवन करता है' इत्यादि में विधि दधि के साथ सम्बद्ध कर दी जाती है। अतः इसमें उपमा से अनुप्राणित समासोक्ति ही है। पर निम्नलिखित—

चष्टे—प्रसादयन्तीत्यादि। सकलङ्कप्रसादनलक्षणविशषणसाम्यात् शरद-स्तावदस्ति नायिकात्वप्रतीतिस्तदनुगुणत्वेनेन्दुरव्योर्नायकत्वप्रतीतिरिति चेन्मन्यसे नैतद् घटते। कुतः? आर्द्रनखक्षताभमैन्द्रं धनुरिति विशेषणस्यासाम्यात्। ऐन्द्रं हि धनुः शरद एव विशेषणं न नायिकायाः। नन्वार्द्रनखक्षताभमिति विशेषणौपम्या-देकदेशविवर्तिन्युपमा शरदि तत्समर्थादिन्दुरव्योर्नायकत्वप्रतीतिरस्त्वित्यत आह—न चैकदेशेति। यद्येकदेशविवर्तिन्युपमा न केनचिदुक्ता तदा तत्सामर्थ्याद-नयोर्नायकत्वप्रतीतिः स्यात्। न चेयमुक्ता केनचिद् अतस्तत्सामर्थ्यात् कथमनयो-

---

१. तदा—नि०। २. तथात्र—नि०।
३. नायकत्वं स्वरूपेण—नि०। नायकत्वं प्रतीयते—अ०।
४. नायकव्यवहार°—नि०। नायकत्वप्रतीतिः—शा०।
५. अत्र—अ० शा० नास्ति। ६. °भमार्द्रनख°—अ०।
७. °माप्राणिता—ना०। ८. तु—अ० नास्ति।

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥११२॥

इत्यत्र सरःश्रियां नायिकात्वप्रतीतिर्न समासोक्त्या, विशेषणसाम्याभावात्। तस्मान्नायिकात्रोपमानत्वेन प्रतीयते न तु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिरित्येकदेशविवर्तिन्युपमैवाभ्युपगम्या[1] । गत्यन्तरासंभ-[2]

तडागश्री नयनों के समान नीलकमलों से, मुखों के समान कमलों से, स्तनों के समान चकवा चकई से सुशोभित हो रहीं थीं ॥११२॥

इस उदाहरण में तड़ाग-श्री में नायिका होने की प्रतीति समासोक्ति से नहीं होती है क्योंकि (यहाँ) विशेषणसाम्य का अभाव है। चूंकि नायिका की प्रतीति यहाँ उपमान के रूप में होती है, तड़ाग-श्री के धर्म के रूप में नायिका की प्रतीति नहीं होती है अतः यहाँ एकदेशविवर्तिनी उपमा ही मानी

र्नायकत्वप्रतीतिव्यवस्थेति । अत्र समाधित्सुराह—उच्यते । एकदेशविवर्तिनीत्यादि । यद्यपि साक्षान्नोक्ता अथापि नास्याः प्रतिषेधोऽस्ति । ननूक्तिप्रतिषेधयोरप्यभावे कथं सम्भव इत्यत आह—सामान्यलक्षणेति । नन्वेकदेशविवर्त्युपमाया इह संभवः तर्ह्युपमालङ्कारस्यैव प्राप्तिर्न तु समासोक्तेरित्यत आह—अथात्रेत्यादि । अथेत्यधिकारे । यद्युपमानत्वेन नायकोऽधिकारी कश्चित् प्रतीयते, भवेत् प्राप्तिरुपमालङ्कारस्य, न हि प्रतीयते नायकोऽत्र कश्चिदधिकारी अपि तु रविशशिनोरेव नायकत्वव्यवहारप्रतीतिः । तयोरेवास्यां शरदि नायकत्वोपचारात् । इत्थं समासोक्तिप्राप्तौ तदनुसारेण शब्दविन्यासोऽसौ न्याय्य इत्याह—तदत्रेत्यादि । आर्द्रनखक्षते श्रुत्या स्थितमप्युपमानत्वमिन्द्रधनुषि संचारणीयम् । कुतः ? वस्तुपर्यालोचनया । तामेव वस्तुपर्यालोचनां स्फुटयति—इन्द्रचापमित्यादि । प्रतीतिः पदार्थान्तरसमभिव्याहारादित्थमेव यतः । अन्यनिष्ठस्य धर्मस्यान्यत्र सञ्चारणम् कुत्र दृष्टमित्यत आह—यथा दध्नेत्यादि । दध्ना जुहोतीत्यत्र हि हवनगतत्वेन विधिः प्रतीतः स त्वग्निहोत्रं जुहोतीत्यत एव सिद्ध इति वस्तुपर्यालोचनया यथा दध्नि सञ्चार्यते तथेहाप्यनुसन्धेयमिति यावत् । अतः समासोक्तिरेवेयमिति निगमयति—एवमुपमानुप्राणितेति । ऐन्द्रधनुष उपमेयस्य उपमानत्वक्लृप्तेर्वैवक्षिकोपमानुप्राणितत्वम् । अथ यत्र न्यायः समासोक्तिमपोह्यैकदेशविवर्तिन्युपमैव

---

१. °न्युपमैव गम्या—शा० शा१ । °तिन्यैवोपमोपास्या—ना० ।
२. °राभावात्—अ० शा० ।

वात्। यैस्तु नोक्ता तेषामप्युपसंख्येयैव। यत्र तु 'केशपाशालिवृन्देन' इत्यादौ 'समासोक्तायामुपमायां समासान्तरेण विशेषणसाम्यं योजयितुं शक्यं, तत्रौपम्यगर्भविशेषणप्रभाविता समासोक्तिर्युक्तेति[2] न विरोधः कश्चित्।

सा च समासोक्तिरर्थान्तरन्यासे[3] क्वचित्समर्थ्यगतत्वेन क्वचित्समर्थकगतत्वेन च भवति। [4]क्रमेण यथा—

जानी चाहिए। क्योंकि दूसरी कोई गति नहीं है। जिन्होंने नहीं माना है उन्हें भी (इसका) उपसंख्यान करना चाहिए। किन्तु जिस जगह जैसेकि 'केशपाश के भ्रमरसमूह से' इत्यादि में समास से उपमा बता दी जाने पर समासान्तर से विशेषण-साम्य बन सकता है वहाँ सादृश्यगर्भित विशेषणों से प्रभावित समासोक्ति मानना ठीक है। इस प्रकार (एकदेशविवर्तिनी उपमा तथा समासोक्ति में) कोई विरोध नहीं है।

और यह समासोक्ति अर्थान्तर का न्यास होने पर कभी समर्थ्य (वाक्य) में रहती है और कभी समर्थक वाक्य में। क्रमशः उदाहरण—

प्रथते तं विषयं दर्शयितुमाह—इह पुनरिति। नेत्रैरिवेति। अत्र सरःश्रियां नायिकात्वप्रतीतौ निमित्तं विवेचयति—सरःश्रियामित्यादि। विशेषणसाम्यान्नायिकात्वप्रतीतिर्न समासोक्त्या। अत एव व्यवहारसमारोपोऽपि न भवतीत्याह— तस्मान्नायिकेति। नायिका ह्यत्र सरःश्रियामुपमानतया न तु व्यवहारसमारोपेण सरःश्रीधर्मतया। अत एवंविधे विषये गत्यन्तराभावादेकदेशविवर्तिन्युपमैवोपास्या। अनुक्ता कथमुपास्येत्यत आह— यैस्त्विति। अस्माभिस्तावदुपपत्तिभिरुक्ता। यैस्तु नोक्ता तैरपि गत्यन्तराभावादुपसंख्यायामुपसंख्यातव्यैवेत्यर्थः। ननु पूर्वमेकदेशविवर्तिन्युपमा निराकृता सम्प्रति साधितव्येति व्याघात इत्यत आह—यत्र तु केशपाशेत्यादि। दन्तप्रभाः पुष्पाणीवेत्यादि समासेनोक्तायामुपमायां सत्यामपि दन्तप्रभासदृशैः पुष्पैरिवेत्यादिसमासान्तरमहिम्ना विशेषणसाम्यमुपपद्यते तत्रौपम्यगर्भविशेषणोत्थापिता समासोक्तिरेवोक्ता। सम्प्रति तु नेत्रैरिवेत्यत्र गत्यन्तराभावादेकदेशविवर्तिन्युपमैव व्यवस्थापितेति व्याघाताभावात् सर्वमवदातम्। अथार्थान्तरप्रभावितायामस्यां वैचित्र्यान्तरमस्तीत्याह—सा चेत्यादि। समर्थः प्रकृतोऽर्थः समर्थकस्त्वप्रकृतोऽर्थः।

---

१. °क्तावुपमायां–नि१ पाठानुसारम्।
२. °क्तिरेवेति—नि०।
३. °सेन—नि० शा०।
४. °णोदाहरणं—अ०।

**अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा।**
**कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥११३॥**
**असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।**
**अनाक्रम्य जगत्सर्वं नो सन्ध्यां भजते रविः ॥११४॥**

**अत्रोपगूढत्वेन शान्ततडित्कटाक्षत्वेन च शशाङ्कशरदोः [1]प्रावृषश्च [2]नायकव्यवहारप्रतीतौ समासोक्त्यालिङ्गित एवार्थो विशेषरूपः सामान्याश्रयेणार्थान्तरन्यासेन समर्थ्यते। सामान्यस्य चात्र श्लेषवशादुत्थानम्।**

(समर्थ्य-वाक्यगत समासोक्ति)

शरद् (ऋतु) द्वारा चन्द्रमा को आलिंगन से ढक लेने पर वर्षा (ऋतु)—जिसके बिजली के कटाक्ष शान्त हो चुके थे—चली गई। क्षीण पयोधर वाली किन स्त्रियों का सौभाग्य-गुण नष्ट नहीं हो जाता ? ११३॥

(समर्थक-वाक्यगत समासोक्ति)

विजय की इच्छा को पूरा किए विना मनस्वी को स्त्री की चिन्ता कैसी ? सम्पूर्ण संसार का आक्रमण किए विना सूर्य सन्ध्या के पास नहीं जाता है ॥११४॥

यहाँ (प्रथम उदाहरण में) "आलिंगन से ढक लेने" से तथा "बिजली के कटाक्ष शान्त हो जाने" से चन्द्रमा तथा शरद् (ऋतु) में और वर्षा (ऋतु) में नायक एवं नायिका के व्यवहार की प्रतीति हो जाने पर समासोक्ति से अनुवेष्टित विशेषरूप अर्थ का ही, सामान्य (अर्थ) का आश्रय लेकर, अर्थान्तरन्यास से समर्थन किया गया है। सामान्य (अर्थ) का उत्थान यहाँ श्लेष

**अथोपगूढ इति। उपगूढे आलिङ्गिते। ययौ अपगता। अत्र समर्थ्यगता। असमाप्तेति। अत्र तु समर्थकगता। उभयत्र योजनायाह—अत्रोपगूढत्वेनेत्यादि। उपगूढत्वं शान्ततडित्कटाक्षत्वं च विशेषणसाम्यं, तदुत्थापितया समासोक्त्या नायकव्यवहारप्रतीतिः। तथा सति समासोक्त्यालिङ्गितो योऽयं विशेषात्मा समर्थ्योऽर्थः स सामान्यात्मना अर्थान्तरन्यासेन समर्थ्यते। सामान्यरूपस्य च समर्थकस्यार्थस्योत्थानम्। परिभ्रष्टपयोधराणामिति श्लेषवशादुपगूढमिति विशेषणं साधारणतया स्फुटं, शान्ततडिदित्येतत्**

---

१. प्रावृषश्च—नि० नास्ति।

२. नायकनायिकाव्यवहार°—शा० ना०।

शान्ततडित्कटाक्षेत्यौपम्यगर्भं विशेषणं समासान्तराश्रयेणात्र[1] समानम्। असमाप्तेत्यादौ तु स्त्रीशब्दस्य सामान्येन स्त्रीत्वमात्राभिधानात्सामान्यरूपोऽर्थो लिङ्गविशेषनिर्देशगर्भेण कार्योपनिबन्धनेनोत्थापितया समासोक्त्या समारोपितनायकव्यवहारेण रविसंध्यावृत्तान्तेन विशेषरूपेण समर्थ्यते।

आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेषतयाम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले ॥११५॥

अत्र निर्मोकपट्टापह्नवेन समारोपिताया मन्दाकिन्या यद्वस्तुवृत्तेन

के आधार से हुआ है। "जिसके बिजली के कटाक्ष शान्त हो चुके थे" यह सादृश्यगर्भित विशेषण समासान्तर के आश्रय से (वर्षा ऋतु तथा वृद्धा नायिका दोनों में) यहाँ समान है। "असमाप्त..." आदि (श्लोक ११४) में तो स्त्री शब्द सामान्यरूप में स्त्री जातिमात्र का वाचक है अतः (वहाँ) सामान्यरूप अर्थ का समर्थन सूर्य तथा सन्ध्या के विशेषरूप वृतान्त से हुआ है, जिस (वृत्तान्त) में लिंगविशेष के निर्देश को गर्भित किए हुए कार्य के निबन्धन से उत्थापित समासोक्ति द्वारा नायक तथा नायिका का व्यवहार समारोपित है।

(उत्प्रेक्षा और समासोक्ति के एकवाचकानुप्रवेश संकर का उदाहरण)

खींचतान के वेग से गिरने वाली सर्पराज के फनों के केंचुल की पट्टी के परिवेष के रूप में मन्दाकिनी उस समुद्र के चरण-मूल से मन्थन की व्यथा को मानो शीघ्र दूर करने के लिए बड़ी देर तक लिपटी रही ॥११५॥

यहां केंचुल की पट्टी के अपह्नव से आरोपित मन्दाकिनी का जो वास्तविक

तु प्रागुपमागर्भम्। तडितः कटाक्षाः इवास्य (? स्याः)। अथ तडित्सदृशकटाक्षेति समासान्तराश्रयात् साम्यमालम्बते। असमाप्तेत्यत्र स्त्रीसामान्यग्रहणात् सामान्यरूपः समर्थ्योऽर्थः स्त्रीलिङ्गपुलिङ्गनिर्देशगर्भेण भजनरूपेण कार्येणोत्थापितया समासोक्त्या समारोपितनायकव्यवहारेण विशेषात्मना रविसन्ध्यावृत्तान्तेन समर्थ्यते। उत्प्रेक्षावशाद् वैचित्र्यायाह—आकृष्टिवेगेति। वेष्टना वेष्टनं यस्य मन्दरगिरेः। पादः पर्यन्तपर्वतश्चरणश्च। अत्र समा-

---

१. °श्रयणेनात्र—शा० ना०।

[1]पादमूलवेष्टनं तच्चरणमूल-[2]वेष्टनत्वेन श्लेषमूलयातिशयोक्त्याध्यवसीयते। तत्तथाध्यवसितं मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षामुत्थापयति। सोत्थाप्यमानैवाम्बुराशिमन्दाकिन्योः [3]भर्तृपत्नीव्यवहाराश्रयां समासोक्तिं गर्भीकरोति। एवं चोत्प्रेक्षासमासोक्त्योरेकः कालः। एवं 'नखक्षतानीव वनस्थलीनाम्' इत्यत्रापि वनस्थलीनां [4]नायिकाव्यवहार उत्प्रेक्षान्त-[5]रानुप्रविष्टसमासोक्तिमूल एव। एवमियं समासोक्तिरनन्तप्रपञ्चेत्यनया दिशा स्वयमुत्प्रेक्ष्या।

पादमूल में लिपटना है उसका चरणमूल में लिपटने के रूप में श्लेषमूलक अतिशयोक्ति द्वारा अध्यवसाय किया गया है। इस प्रकार से उसका अध्यवसाय हो जाने पर वह (चरणमूल में वेष्टन) "मन्थन की व्यथा को मानो दूर करने के लिए" इस उत्प्रेक्षा को उत्थापित करता है। उठती हुई यही (उत्प्रेक्षा) समुद्र और मन्दाकिनी में पति और पत्नी के व्यवहार पर आश्रित समासोक्ति को गर्भित किए हुए है। इस प्रकार उत्प्रेक्षा और समासोक्ति एक ही समय में (प्रतीत होती) है। इसी प्रकार 'वनस्थलियों के नखक्षत की भांति' इस (अंश) में भी वनस्थलियों में नायिका का व्यवहार समासोक्ति-मूलक ही है जो (समासोक्ति) एक दूसरी उत्प्रेक्षा में अनुप्रविष्ट है। अस्तु ! इस समासोक्ति का अनन्त प्रपंच है, अतः इसी दिशा से स्वयं कल्पना कर लेनी चाहिए।

सोक्तेरुत्प्रेक्षासमकालतां दर्शयितुमाह—अत्र निर्मोकेत्यादि। निर्मोकपरिवेष्टनया मन्दाकिनीति कथनात् तदपह्नवेन मन्दाकिनीसमारोपः, तस्याश्च यत् प्रान्तपर्वतवेष्टनं तच्चरणमूलवेष्टनमेवेति पादशब्दश्लेषोत्थया भेदेऽभेद इत्येवंरूपयातिशयोक्त्याध्यवसीयते। तथाध्यवसितं च मन्थव्यथेत्यादिफलोत्प्रेक्षामुत्थापयति। सा चाम्बुराशिमन्दाकिन्योर्भर्तृपत्नीव्यवहारसमाश्रयां समासोक्तिं स्वसमकालमुत्थापयतीत्यनयोरेककालता।

इत्थमन्यत्रापि दर्शयति—एवं नखक्षतानीति। उत्प्रेक्षान्तरमनुप्रविष्ट इति समकालता सूचिता। इत्थं वैचित्र्यान्तरमनुसन्धेयमिति निगमयति—एवमियमित्यादि।

---

१. °मूले—नि०। २. °मूले—नि०।
३. °पति°—नि०। ४. नायिकात्व°—अ०।
५. °क्षानुप्रविष्ट°—अ०। °क्षान्तरप्रविष्ट°—शा१। उत्प्रेक्षानुप्रविष्ट°—अ०।

## विशेषणसाभिप्रायत्वं परिकरः ।।सू० ३२।।

विशेषणवैचित्र्यप्रस्तावादस्येह निर्देशः। विशेषणानां साभिप्रायत्वं प्रतीयमानार्थगर्भीकारः। अत एव प्रसन्नगम्भीर-पदत्वान्नायं[1] ध्वनेर्विषयः। एवं च प्रतीयमानांशस्य वाच्योन्मुखत्वात्परिकर इति सार्थकं नाम। यथा—

विशेषणों का साभिप्राय होना परिकर है ।। सू० ३२।।

विशेषण-वैचित्र्य का प्रसंग होने से इस (अलंकार) का यहाँ निर्देश हुआ है। विशेषणों के साभिप्राय होने का अर्थ है—प्रतीयमान अर्थ को गर्भित करना। अत एव प्रसन्न और गम्भीर पदों के रहने से यह ध्वनि का विषय नहीं है। तथा प्रतीयमान अंश के वाच्य (अर्थ) के प्रति उन्मुख रहने से परिकर यह नाम साथक है। जैसे--

विशेषणांशसाम्येनाप्रस्तुतार्थस्य गम्यता।
समासोक्तिर्मता येन संक्षिप्तार्थोऽभिधीयते ।।
शुद्धकार्यसमारोपे साम्यं स्यादौपचारिकम्।
व्यवहारसमारोपः साक्षादस्याः प्रयोजकः ।।
स्याद् विशेषणसाम्यं चेत् समासान्तरसंश्रयात्।
उपमा बाधते नैनामेकदेशविवर्तिनी ।।
दृश्यतेऽर्थान्तरन्यासे समर्थ्ये च समर्थके।
उत्प्रेक्षायोगिनी चैषा क्वचित् स्यादेककालगा ।।

परिकरं लक्षयति—

"विशेषणसाभिप्रायत्वं परिकरः"।

सङ्गतिमाह—विशेषणवैचित्र्येति। व्याचष्टे—विशेषणानामित्यादि। प्रसन्नगम्भीरत्वं नाम पदानां व्यङ्ग्यार्थगर्भीकार एव, न तु व्यङ्ग्यस्य वाच्यातिशायिता। निर्वक्तुमाह—एवं चेति। वाच्योन्मुखत्वं वाच्याङ्गता।

---

1. पदार्थत्वा°—अ०।

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥११६॥

अत्र राज्ञ इत्यादौ [1]सोत्प्रासपरत्वं प्रसन्नगम्भीरपदत्वम् । एवम् 'अङ्गराज सेनापते राजवल्लभ [2]द्रोणोपहासिन् कर्ण [3]सांप्रतं रक्षैनं भीमाद्दुःशासनम्' इत्यादौ ज्ञेयम् ।

आज मैंने धनुष धारण किए हुए, मान-रूपी धन वाले राजा दुर्योधन के आगे, कौरवों के बान्धव बने हुए कर्ण और शल्य की आंखों के सामने, पाण्डवों की वधू (द्रौपदी) के केश और वस्त्र खींचने वाले उस जीवित (दुःशासन) का अपने नखों से फाड़े हुए कलेजे से गुनगुना खून पिया है ॥११६॥

यहाँ राजा आदि (पदों) में प्रसन्न और गम्भीर पदों का स्वरूप उपहास-परक है। इसी प्रकार से 'अंगराज ! सेनापति ! राजवल्लभ ! द्रोण का उपहास करने वाले कर्ण ! अब इस दुःशासन को भीम से बचाओ' इत्यादि में (पदों की उपहासपरता को) समझ लेना चाहिए ।

राज्ञ इति । राज्ञो न तु यादृशतादृशस्य । तत्रापि मानधनस्य न त्वपमानसहस्य । कार्मुकभृतो न निरायुधस्य । दुर्योधनस्य न तु शक्ययोधनस्य । अग्रतो न त्वसमक्षम् । कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च, न निःसहायस्य । सर्वत्रैवेयमनादरे षष्ठी । इत्थं मिषतो दुर्योधनकर्णशल्याननादृत्येत्यर्थः । दुःशासनस्येत्यनुक्त्वा तस्य पाण्डववधूकेशाम्बराकर्षिण इत्युक्तिः हन्तव्यत्वप्रसिद्ध्यै । जीवत एव न तु मूर्च्छितस्य मृतस्य वा । तीक्ष्णकरजक्षुण्णात् कोष्णं न तु पर्युषितं मयाद्य (असृग्) पीतमिति भीमसेनस्योक्तिः । साभिप्रायतां दर्शयति—अत्रेत्यादि । वाक्येऽपि दर्शयति—अङ्गराजेत्यादि ।

विशेषणानां व्यङ्ग्यार्थगर्भीकरणलक्षणा ।
सोत्प्राश(?स)ता परिकरो व्यङ्ग्यः परिकरो यतः ॥

---

१. °सोत्प्राश°—नि० । सोत्प्रासत्वपरप्रसन्न°—शा० ।

२. द्रोणापहासिन्—अ० ।

३. साम्प्रतम्—अ० नास्ति ।

## विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः ॥सू० ३३॥

केवलविशेषणसाम्यं समासोक्तावुक्तम्। [१]विशेष्ययुक्तविशेषणसाम्यं त्वधिकृत्येदमुच्यते। तत्र द्वयोः प्राकरणिकयोरप्राकरणिकयोः प्राकरणिकाप्राकरणिकयोर्वा श्लिष्टपदोपनिबन्धे[२] श्लेषः। तत्राद्यं प्रकारद्वयं विशेषणविशेष्यसाम्य एव भवति। तृतीयस्तु प्रकारो विशेषणसाम्य एव भवति। [३]विशेष्यसाम्ये त्वर्थप्रकरणादिना वाच्यार्थनियमेऽ[४]र्थान्त[५]रावगतिर्ध्वनेर्विषयः स्यात्। आद्ये तु प्रकारद्वये द्वयोरप्यर्थयोर्वाच्यत्वम्।

विशेष्य का भी साम्य होने पर अथवा दोनों का उपादान होने पर श्लेष होता है ॥सू० ३३॥

समासोक्ति में केवल विशेषणसाम्य बताया जा चुका है। विशेष्य के साथ विशेषण-साम्य को लेकर यह (अलंकार) बताया जा रहा है। दो प्रस्तुत, दो अप्रस्तुत तथा प्रस्तुत एवं अप्रस्तुत का श्लिष्ट पद से निबन्धन होने पर श्लेष होता है। इनमें से प्रथम दो भेद विशेषण और विशेष्य (दोनों) का साम्य होने पर ही होते हैं। पर तीसरा भेद विशेषणसाम्य में ही होता है। (इस तीसरी स्थिति में) विशेष्य का साम्य होने पर तो अर्थ और प्रकरण आदि के द्वारा वाच्यार्थ नियत हो जाने पर (श्लेष) दूसरे अर्थ में विद्यमान ध्वनि का विषय हो जाएगा। पर प्रथम दो भेदों में दोनों ही अर्थ वाच्य

**श्लेषं लक्षयति —**

**"विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः" ॥**

**अर्थद्वयस्य यदा प्राकरणिकत्वमप्राकरणिकत्वमेव वा तदा विशेषणविशेष्ययोः शब्दसाम्ये श्लेषः। यदा तूभयमयत्वमर्थद्वयस्य तदा विशेष्यांशे पृथगुपादाने श्लेष इति सूत्रार्थः। सङ्गतिमाह—केवलविशेषणेति। इदमिति वचनविशेषणम्। व्याचष्टे—तत्र द्वयोरित्यादि। विशेषणविशेष्यसाम्य एवेति। उभयत्र शब्दसाम्ये सत्येवेत्यर्थः। विशेष्यसाम्ये त्विति। तृतीयप्रकारे यदि विशेष्यांशेऽपि शब्दसाम्यं तदा अर्थप्रकरणादिना अभिधानियामकेन प्राकरणिक एव वाच्यार्थ इति नियमे अप्राकरणिकार्थप्रतीतिः ध्वनेरेव विषयः स्यात् न तु श्लेषस्य। अनेकार्थो हि शब्दः प्रकरणादिना प्राकरणिक एवार्थे नियम्यते।**

---

१. °युक्तम्—अ०।
२. °निबन्धने—शा१।
३. विशेष्यस्यापि—अ०।
४. नियमेन—शा१।
५. °रगतध्वनि°—अ०।

**अत एव[1] 'द्वयोर्वोपादाने' इति तृतीयप्रकारविषयत्वेनोक्तम्। 'विशेष्यस्यापि साम्ये' इति तु [2]शिष्टप्रकारद्वयविषयम्। क्रमेण यथा—**

**येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो**
**यश्चोद्वृत्तभुजंगहारवलयो गङ्गां च योऽधारयत्।**
**यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः**
**पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥११७॥**

रहते हैं। इसीलिए 'अथवा दोनों का उपादान होने पर' इस (अंश) से तीसरे भेद का विषय बताया गया है। और 'विशेष्य का भी साम्य होने पर' यह (अंश) शेष दो भेदों के विषय में है।[3]

क्रमशः (दो प्रस्तुतों में श्लेषालंकार का उदाहरण) जैसे—

(विष्णु पक्ष)

जिन्होंने शकटासुर का विनाश किया है, जो अजन्मा है, किन्तु जिन्होंने बलि नामक दैत्य को जीतने वाले शरीर को पहले स्त्रीरूप में प्रकट किया था, जो दुर्व्यवहार करने वाले (कालिय) नाग का नाश करने वाले हैं, जिनमें संसार लीन होता है, जिन्होंने (कृष्णावतार में गोवर्धन) पर्वत को और (वराहातार में) पृथ्वी को धारण किया था, जिनके स्तुत्य नाम को देवता चन्द्र का मन्थन करने वाले राहु का मस्तक छेदन करने वाले के रूप में लिया करते हैं, जिन्होंने यादवों की वस्ती (द्वारका) का निर्माण किया था (या यादवों का स्वयं विनाश किया था)। और जो सब कुछ दे देते हैं वे माधव तुम्हारी रक्षा करें ॥११७॥

**आद्ये तु प्रकारद्वये नियमहेत्वभावाद् द्वावपि वाच्यौ। इत्थं च सति विकल्पोऽप्यवतिष्ठत इत्याह--अत एवेति। श्लिष्टप्रकारद्वयेति। अन्यं प्रकारद्वयं श्लिष्टं, विशेष्यांशेऽपि श्लेषार्हत्वात्। येन ध्वस्तेति। अनः शकटं, अभवेन**

---

1. एवाह—नि०। 2. श्लिष्ट—ना०। °त्ववशिष्ट°—अ०।

3. श्लेषालंकार के सूत्र में दो अंश हैं। एक है 'विशेष्यस्यापि साम्ये' और दूसरा है 'द्वयोर्वोपादाने'। प्रथम अंश द्वारा दो प्रस्तुत और दो अप्रस्तुत इन दो भेदों में विद्यमान श्लेष का संख्यान हुआ है और दूसरे अंश द्वारा प्रस्तुत तथा अप्रस्तुत में विद्यमान श्लेष का निर्देश हुआ है। इस दूसरी स्थिति में एक अर्थ प्रकरणादि की सहायता से वाच्य होता है और दूसरा प्रतीयमान।

नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥११८॥

(शिवपक्ष)

जिन्होंने मदन को भस्मीभूत किया था, जिन्होंने विष्णु के शरीर को (त्रिपुरासुर का बध करने के लिए) एक बार पहिले अस्त्र बनाया था, जिनके हार और वलय भयंकर भुजंग हैं, जिन्होंने गंगा को (अपने मस्तक पर) धारण किया था, जिनके भाल पर चन्द्रमा है, जिन्हें देवता 'हर' इस स्तुत्य नाम से पुकारते हैं, जो अन्धकासुर का विनाश करने वाले हैं, वे शंकर तुम्हारा सदा स्वयं कल्याण करें ॥११७॥

(दो अप्रस्तुतों में श्लेषालंकार का उदाहरण)

उसके नयन (मधुपान के) लोभी अनेक भौरों से आकुलित, जल में बढ़े हुए कमलों के समान हैं ॥११८॥

(अथवा)

उसके नयन अनेक बाणों से बहेलियों द्वारा व्याकुलित, वन में पलकर बढ़े हुए हिरनों के समान हैं ॥११८॥

**असंसारेण, बलिदैत्यजितकायः पुरा अमृतसंविभागकाले स्त्रीकृतः स्त्रीभावं नीतः । यश्च उद्वृत्तकालियादिभुजङ्गघातीति । अरवलयवान् अरवलयं चक्रम् । अयं गोवर्धनं गां महीं च यः कृष्णो वराहावतारेऽधारयत् । यस्य च स्तुत्यं नामामराः शशिमच्छिरोहर इत्याहुः । शशिमद्राहुः शशिं मथ्नातीति । अन्धकानां वृष्णिसहचराणां वासकरः स माधवस्त्वां सर्वदा पायात् अव्यात् । अथ येन ध्वस्तमनोभवेन नाशितमन्मथेन बलिजित्कायः विष्णोर्वपुः पुराणां संहरणेऽस्त्रीकृतः । यश्चोद्वृत्तैर्भुजङ्गैर्हारवान् वलयवांश्च । गङ्गां च योऽधारयत् । अमरा यस्य शिरः शशिमत् चन्द्रकलावत् स्तुत्यं च नाम हर इत्याहुः । अन्धकासुरक्षयकरः उमाधवो गौरीपतिः सर्वदा त्वां पायात् । अत्र हरिहरयोर्द्वयोरपि प्राकरणिकता ।**

**नीतानामिति । लुब्धैर्मधुलम्पटैर्व्याधैश्च । भूरीति क्रियाविशेषणमकदा शिलीमुखैर्भ्रमरैः, अन्यदा भूरिबाणैः । वनं जलं विपिनं च । कमलानां पद्मानां मृगाणां च । अत्र मृगपद्मयोरप्राकरणिकता ।**

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात्समाक्षिपति जीवितमप्यकाण्डे
[1]कष्टं मनोभव इवेश्वरदुर्विदग्धः ॥११९॥

अत्र हरिहरयोः[2] प्राकरणिकत्वम् । पद्मानां मृगाणां चोपमानत्वादप्राकरणिकत्वम् । ईश्वरमनोभवयोः प्राकरणिकाप्राकरणिकत्वम् । एष

(प्रस्तुत और अप्रस्तुत में श्लेष का उदाहरण)

(प्रस्तुत प्रभुपक्ष)

मूर्ख प्रभु इच्छा के अनुसार विषय (देश, कोश आदि) को प्राप्त कर लेने पर भी याचक जनों द्वारा 'दान दो' इस याचना का विषय नहीं बनता है, (बिना मांगे) दुःख दे देता है, मोह (अपराध के भ्रम या अभिमान) से अचानक जीविका तक समाप्त कर डालता है, वह कामदेव की भांति कष्टदायक होता है ॥११९॥

(अप्रस्तुत काम-पक्ष)

मूर्ख प्रभु का उपमान कामदेव कष्टदायक है । वह इच्छा के अनुसार विषय (स्त्री आदि) को प्राप्त कर लेता है, उसे देही नहीं कहा जाता है किन्तु वह सैकड़ों वाणों से दुःख दिया करता है, मूर्च्छा देकर अचानक प्राण तक हर लेता है ॥११९॥

यहाँ (प्रथम उदाहरण श्लोक ११७) में विष्णु और शिव दोनों प्रकृत हैं । (दूसरे उदाहरण श्लोक ११८ में) कमल और हिरण उपमान होने से अप्रकृत हैं । (तीसरे उदाहरण श्लोक ११९ में) प्रभु और कामदेव में प्रकृत और अप्रकृत-भाव है । यह (श्लेषालंकार) शब्द, अर्थ और उभय में रहकर पाए

**स्वेच्छेति । विषयो देशकोशादिस्त्र्यादिश्च । देहीति वितरेति देहवानिति च । मार्गणशतैः याचकसार्थैर्वक्तुं न यातीत्येकदा मार्गणशतैः प्रयोगभेदाच्छतसंख्यैर्वाणैर्दुःखं ददातीत्यन्यदा । (जीवितं) जीवनं जीविका च । ईश्वरदुर्विदग्धः प्रभुः । प्रभुरत्र प्राकरणिकः । अप्राकरणिको मनोभवः । अत्र विशेष्ययोर्द्वयोरुपादानम् ।**

**उदाहरणत्रयेऽपि योजनायाह—अत्र हरिहरेत्यादि । पुनस्त्रैविध्यायाह—एष च शब्दार्थेति । उदात्तादीति । लौकिकशब्देष्वपि स्वरभेदादेवार्थावगतिः ।**

---

१. कष्टः—अ० ।　　२. °हरयोर्द्वयोरपि—नि० ।

च शब्दार्थोभयगतत्वेन वर्तमानत्वात्त्रिविधः। तत्रोदात्तादिस्वरभेदात्प्रयत्नभेदाच्च शब्दान्यत्वे शब्दश्लेषः। यत्र प्रायेण पदभङ्गो भवति। अर्थश्लेषस्तु यत्र स्वरादिभेदो नास्ति। अत एव न तत्र सभङ्गपदत्वम्। संकलनया तूभयश्लेषः। [1]यथा—

रक्तच्छदत्वं विकचा [2]भजन्तो नालं जलैः संगतमादधानाः।
निरस्य पुष्पेषु रुचिं समग्रां पद्मा विरेजुः श्रमणा यथैव ॥१२०॥

जाने से तीन प्रकार का है। इनमें से उदात्त आदि स्वरों के भेद से अथवा प्रयत्नभेद से शब्द के भिन्न हो जाने पर शब्द का श्लेष होता है। इसमें प्रायशः पद का भंग होता है। और अर्थ-श्लेष वहीं होता है जहाँ स्वरादि का भेद न हो। इसीलिए यहाँ (अर्थात् अर्थश्लेष में) पद में सभंगता नहीं रहती है। और (शब्द-श्लेष तथा अर्थ-श्लेष के) मिलने पर उभयश्लेष होता है। जैसे—

लाल पटल धारण किए हुए (श्रमण पक्ष में—मुण्डित सिर वाले), जल से लिपटी नाल से संयुक्त (श्रमण पक्ष में—मूर्खों की संगति एकदम न करने वाले), पुष्पों की सम्पूर्ण शोभा को पराजितकर (श्रमण पक्ष में—काम से अपनी सारी अभिलाषा को हटाकर), कमल श्रमणों-जैसे सुशोभित हो रहे थे ॥१२०॥

ताल्वोष्ठादिव्यापारः प्रयत्नः (आयामो रौक्ष्यं संवृतो खस्येत्युच्चैःकराणि शब्दस्य अन्ववसर्गो मार्दवमुरुता रवस्येति नीचैःकराणि शब्दस्येत्यनुशिष्टो गात्रायामादिः प्रयत्नः?) अयं शब्दान्यत्वे हेतुः। शब्दश्लेषे लिङ्गान्तरमाह—यत्र प्रायेणेत्यादि। अर्थश्लेषस्त्वन्यथेत्याह—अर्थश्लेषस्त्विति। यदेवैकं वाक्यं तत्र लिङ्गान्तरमाह—अत एवेति। उभयश्लेष माह—सङ्कलनयेति।

उभयश्लेषमुदाहरति—रक्तच्छदत्वमिति। छदो दलं, वासश्च। विकचाः विकस्वराः, कचरहिताश्च। जलैः सङ्गतं नालमादधानाः, जडजनैः (नालं) सख्यमादधानाः। पुष्पेषु कुसुमान्तरेषु। रुचिं शोभाम्, पुष्पबाणप्रियतां च। उभयश्लेषतां दर्शयति—अत्र रक्तेत्यादि। पृथगनुदाहरणे हेतुमाह—ग्रन्थगौरवेति।

---

१. यथा—शा० शा१ पुस्तकयोर्नास्ति।
२. वहन्तः—अ० नि०।

**अत्र रक्तच्छदत्वमित्यादावर्थश्लेषः। नालमित्यादौ शब्दश्लेषः। उभयघटनायामुभयश्लेषः। ग्रन्थगौरवभयात्तु पृथङ्नोदाहृतम्।**

**[1]अलंकार्यालंकार[2]-भावस्य [3]च [4]लोकवदाश्रयाश्रयिभावेनोपपत्तेः।**

यहाँ "रक्तच्छदत्व'—लाल पटल धारण किए हुए, गेरुये कपड़े पहिने हुए—आदि में अर्थश्लेष है। 'नालम्' (नाल या कमल की डंडी तथा सर्वथा नहीं) आदि में शब्द-श्लेष है। दोनों (शब्द तथा अर्थ) की योजना होने से उभयश्लेष है। ग्रन्थ बढ़ जाने के भय से पृथक् उदाहण नहीं दिया गया है।

अलंकार्य और अलंकार का सम्बन्ध लोक के समान (काव्य में भी) आश्रय और आश्रयी के सम्बन्ध से उपपन्न होता है। "रक्तच्छदत्व" आदि

---

१. मया परीक्षितेषु सर्वेष्वादर्शपुस्तकेष्वयमस्ति क्रमः 'ग्रन्थगौरवभयात्तु पृथग् नोदाहृतम्' इत्यनन्तरम् 'एष च नाप्राप्तेषु...तुल्ययोगितायाः प्रतिभानम्', पश्चाच्च 'अलङ्कार्यालङ्कारभावस्य...लोकवद् व्यवस्थापनात्'। एतदनन्तरं च 'एवं च सकलकलम्' इत्यादिग्रन्थः प्रवर्तते। एतत्पाठानुसारमेव सर्वत्र विमर्शिनीक्रम उपलब्धः। स चायम्—'संकलनया तु ग्रन्थकृतैवोदाहृत'मित्यनन्तरं 'तदेवं रूपस्यास्य...समनन्तरमेवोक्तं' ततश्च 'अस्य च शब्दार्थाश्रितत्वाद्...सुवर्णहेतुकत्वात्तदलङ्कारः'। एतदनन्तरं च 'तदेवं स्वमतोपोद्बलनाये'त्यादि टीका प्रवर्तते। सर्वेषामादर्शपुस्तकानां क्रमैक्येऽपि एतत्क्रमानुसरणे न किमपि प्रयोजनं न वा कामपि युक्तिं पश्यामः। एतदनुसृत्य ग्रन्थव्यत्यासे तु पुनर्दोष एव। तथाहि 'बाध्यबाधकभाववादानन्तरमेव 'एवञ्चेत्यादि' तदुपसंहृतिपरो ग्रन्थस्सङ्गच्छते। एतन्मध्यान्तःपाती आश्रयाश्रयिभावव्यवस्थापकः 'अलङ्कार्यालङ्कारे'त्यादिग्रन्थो न कामप्यौचितीमनुबध्नाति। 'ग्रन्थगौरवभयात्तु पृथङ् नोदाहृत' मित्यनन्तरमेव पठितस्तु समनन्तरोक्तरक्तच्छदत्वमित्यादि–नालमित्याद्युदाहरणयोर्ल्लोकवदाश्रयाश्रयिभावव्यवस्थापको ग्रन्थः प्राकरणिकतां भजत्येव। नायं क्रमव्युदासो दाक्षिणात्यपुस्तकेषु समुद्रबन्धटीकायां वा प्राप्यते। अतश्च निर्णयसागरसम्पादकेन समुद्रबन्धेन च समादृतः पाठक्रम एव मयाऽप्यत्र स्वीक्रियते, तदनुसारमेव च सञ्जीविनीटीकाविन्यासो विहितः।

२. °लंकरण°—नि० ना०। ३. भावस्य लो°—नि०।

४. °देवा°—अ०।

'रक्तच्छदत्वम्' इत्यादावर्थद्वयाश्रितत्वादयमर्थालंकारः। 'नालम्' इत्यादौ तु शब्दद्वयाश्रितत्वाच्छब्दालंकारोऽयम्। [1]यद्यप्यर्थभेदाच्छब्दभेद इति दर्शने 'रक्तच्छदत्वम्' इत्यादावपि [2]शब्दद्वयाश्रितोऽयं, तथाप्यौपपत्तिकत्वादत्र शब्दभेदस्य [3]प्रतीतेरेकतावसायान्नास्ति[4] शब्दभेदः। 'नालम्' इत्यादौ तु प्रयत्नादिभेदात्प्रातीतिक एव शब्दभेदः। अतश्च पूर्वत्रैकवृन्तगतफल-

दो अर्थों पर आश्रित है अतः यह अर्थालंकार है। और 'नालम्' आदि दो शब्दों (नालम् तथा अलं) पर आश्रित है अतः यह शब्दालंकार है। यद्यपि "अर्थ भिन्न होने से शब्द भिन्न हो जाता है" इस मत में 'रक्तच्छदत्व' आदि में भी यह (अलंकार) दो शब्दों पर आश्रित है तथापि ऐसे स्थलों में (अत्र) शब्दभेद युक्ति से सिद्ध होने पर भी प्रतीति की एकता में विश्रान्ति होने के कारण शब्द-भेद नहीं होता है[5]। 'नालम्' आदि में प्रयत्न आदि का भेद हो जाने से (केवल उपपत्ति में ही नहीं अपितु) प्रतीति में भी शब्द भिन्न हो जाता है। अतः पहले उदाहरण (रक्तच्छदत्व) में एक गुच्छे में लगे हुए दो फल की

इत्थं निरवकाशत्वादन्यबाधकत्वमुपपाद्य शब्दार्थोभयविषयतामस्योपपादयितुमाह—अलङ्कार्येत्यादि। अलङ्कार्यालङ्करणभावो हि आश्रयाश्रयिभावेनोपपन्नो लोके कण्ठाश्रितः कण्ठालङ्कारः, कर्णाश्रितः कर्णालङ्कार इति। अतो रक्तच्छदेत्यादावर्थाश्रयणादर्थालङ्कारोऽयम्। नालमित्यादौ तु स्फुटः शब्दभेद इति शब्दालङ्कारः। नन्वर्थभेदे शब्दोऽपि भिन्न एवेति रक्तच्छद(त्व)मित्यादावपि न शब्दैक्यमित्यत आह—यद्यपीत्यादि। औपपत्तिकत्वादिति। प्रत्यर्थं शब्दभेद इत्युपपत्त्या हि शब्दभेदोपपादनम्। प्रतीतौ पुनरैक्यमेवावसीयते। अतः साहित्यसरणेः प्रतीत्यैकसारत्वाच्छब्दैक्यप्रतिपादकदर्शनावष्टम्भाच्चास्ति (? च्च नास्ति) शब्दभेदः। नालमित्यादौ तु जतुकाष्ठनयेन शब्दभेदः प्रतीत्य-

---

१. °भेदे शब्द°—अ०।

२. °द्वय°—नि० ना० पुस्तकयोर्नास्ति।

३. प्रतीताвे°—अ०। ४. °वेकतयाध्यवसा°—अ०।

५. जहाँ भी अर्थ भिन्न होगा वहाँ शब्द भी भिन्न होगा इस सिद्धान्त या युक्ति के अनुसार एक शब्द से दो अर्थों की प्रतीति में शब्द एक न होकर दो होते हैं। इस सम्बन्ध में रुय्यक का कथन है कि उपपत्ति या युक्ति की दृष्टि से शब्द भिन्न होने पर भी प्रतीति की दृष्टि से शब्द एक ही रहता है।

द्वयन्यायेनार्थद्वयस्य [1]शब्दश्लिष्टत्वम्। अपरत्र[2] जतुकाष्ठन्यायेन स्वयमेव [3]श्लिष्टत्वम्। पूर्वत्रान्वयव्यतिरेकाभ्यां शब्दहेतुकत्वाच्छब्दालकार-[4]त्वमिति चेत्, न। आश्रयाश्रयिभावेनालङ्कार्या-[5]लङ्कारत्वस्य[6] लोकवद्व्यवस्थापनात्[7]।

एष च नाप्राप्तेष्वलंकारान्तरेष्वारभ्यमाणस्तद्बाधकत्वात्[8] तत्प्रतिभोत्पत्तिहेतुरिति केचित्। 'येन ध्वस्तमनोभवेन [9]बलिजित्कायः पुरा-

तरह दो अर्थ (एक) शब्द में श्लिष्ट रहते हैं। दूसरे उदाहरण (नालम्) में लाख और लकड़ी के परस्पर संयोग की तरह (दूसरा शब्द अत्यन्त भिन्न होने पर भी एक शब्द पर) स्वयमेव श्लिष्ट रहता है।

(प्रश्न) पहले में अन्वय और व्यतिरेक से शब्द के होने से शब्दालंकार मान लिया जाए?

(उत्तर) नहीं। आश्रय और आश्रयी के सम्बन्ध से अलंकार्य और अलंकार-भाव की लोक के समान व्यवस्था दी गई है।

यह (श्लेषालंकार) दूसरे अलंकार के न होने पर नहीं होता है, (अतः जहाँ भी होता है वहाँ) उनका बाधक होने के कारण उन (दूसरे अलंकारों) के आभास को पैदा करने का हेतु है, यह कुछ (आचार्य उद्भटादि) का कथन (इति केचित्) है। "येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः" (श्लोक

नुरोधी। अतो रक्तच्छदमित्यादौ शब्दैक्यादेकवृन्तगतफलद्वयन्यायेनार्थयोः श्लिष्टता, नालमित्यादौ तु जतुकाष्ठनयेन शब्दयोरेव। रक्तच्छदमित्यादौ तु पुनः शब्दालङ्कारतामाशङ्कते—पूर्वत्रान्वयेति। परिहरति—न। आश्रयेत्यादि। अलङ्कारत्वं हि लोके नान्वयव्यतिरेकाभ्यां व्यवतिष्ठते अपि त्वाश्रयाश्रयिभावेनैव। इहापि तद्वदित्यर्थः।

अथास्य सावकाशनिरवकाशादिचर्चामारभते—एष चेत्यादिना। अलङ्कारान्तरेष्वप्राप्तेषु अनारभ्यमाणोऽयं निरवकाशत्वात्। बलीकृतानि तु बाधित्वा तत्प्रतिभामात्रमुत्पादयतीति केचित्। येन ध्वस्तेति। अन्ये पुनर्येन

१. शब्दे—अ०। २. अपरत्र तु—अ० शा०।
३. शब्दयोः श्लि°—अ०। ४. °लंकार इति, °लंकारोऽयमिति—शा१
५. भावेनालंकार°—नि०। ६. °लंकारभावस्य—अ०।
७. व्यवस्थानात्—नि० अ०। ८. बाधकत्वेन—नि।
९. बलिजित्कायः पुरा स्त्रीकृतः—अ० नास्ति।

स्त्रीकृतः' इत्यादि[1] विविक्तोऽस्य विषय इति निरवकाशत्वाभावान्नान्यबाधकत्वमित्यन्यैः सह संकरः। दुर्बलत्वाद्वा बाध्यत्वमित्यन्ये। तत्र [2]पूर्वेषामयमभिप्रायः। इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोचरत्वेन तावत्प्रतिष्ठितोऽयमलंकारः। तत्राद्यं प्रकारद्वयं तुल्ययोगिताया[3]

११७) आदि में इसका विषय पृथक् है अतः निरवकाशता का अभाव होने से (इस अलंकार में) दूसरे (अलंकारों) की बाधकता नहीं होती है। परिणामतः दूसरे (अलंकारों) के साथ संकर होता है अथवा दुर्बल होने के कारण (इसमें) बाध्यभाव रहता है, यह अन्य आचार्यों का मत है (इत्यन्ये)।[4] इन आचार्यों में से प्राचीनों का यह अभिप्राय है कि यह (श्लेष) अलंकार प्रस्तुत, अप्रस्तुत और उभयरूप (प्रस्तुताप्रस्तुत) अनेक अर्थों का विषय बन कर प्रतिष्ठित है। इनमें से प्रथम दो भेद (प्रस्तुत तथा अप्रस्तुत) तुल्ययोगिता के विषय हैं (अर्थात् दो प्रस्तुत या दो अप्रस्तुत अर्थों में तुल्ययोगिता होती

ध्वस्तमनोभवेनेत्यलङ्कारान्तरविविक्तोऽस्य विषय इति सावकाशत्वान्नान्यबाधकः, अतोऽन्यसम्पाते सङ्करः, न्यायतो वा दौर्बल्ये बाध्यत्वमित्याहुः। तत्र स्वमतं निरवकाशत्वमाविश्चिकीर्षुराह—तत्र पूर्वेषामित्यादि। अनेकार्थगोचरत्वेनेति प्रत्येकमभिसंबन्धः। आद्यं प्रकारद्वयं प्राकरणिकानेकार्थगोचरत्वम्, अप्राकरणिकानेकार्थगोचरत्वं च। तदुभयमपि हि तुल्ययोगिताया विषयः। तस्याः प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धो लक्षणं यतः। उभयरूपानेकार्थगोचरत्वं तृतीयः प्रकारः। तत्र तु दीपकं प्रभवति। तस्य प्रस्तुताप्रस्तुतानां समानधर्माभिसम्बन्धो लक्षणं यतः। अतः श्लेषविषयोऽनेनालङ्कार-

१. इत्यादौ—नि०।

२. पूर्वेषामभिप्रायोऽयम्—अ०।

३. °ताविषयः—ना०।

४ दूसरे अलंकारों से पृथक् होना विविक्तता या सावकाशता कहलाती है और दूसरे अलंकारों के रहने पर ही किसी अलंकार का होना निरवकाशता कहलाती है। जहाँ कोई अलंकार प्रधान होकर दूसरे अलंकारों की प्रतिभा—आभासमात्र या छाया—ही रहने देता है वह अलंकार बाधक कहलाता है और जिसका आभास भर होता है वह बाध्य कहलाता है।

विषयः। तृतीये तु प्रकारे दीपकं[1]प्रभवतीति तावदलंकारद्वयमिदं[2] [3]श्लेषविषयं [4]व्याप्त्या व्यवतिष्ठते। [5]तत्पृष्ठे चालंकारान्तराणामुत्थान[6]-मिति [7]नास्ति विविक्तोऽस्य विषयः। अत [8]एवालंकारान्तराणां बाधित[9]-त्वात्प्रतिभानमात्रेणावस्थानम्। 'येन ध्वस्तमनोभवेन' इत्यादौ च प्राक-रणिकत्वादर्थद्वयस्य तुल्ययोगितायाः प्रतिभानम्।

एवं च, 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादौ

है)। और तीसरे भेद (प्रस्तुत एवं अप्रस्तुत अर्थ) में दीपक होता है इस प्रकार ये दो अलंकार श्लेष के क्षेत्र को व्याप्त करके स्थित हैं। और इन्हीं (तुल्ययोगिता तथा दीपक) के ऊपर दूसरे अलंकारों का उदय होता है। इस प्रकार इस (श्लेषालंकार) का पृथक् (स्वतन्त्र) विषय नहीं है। इसलिए दूसरे अलंकार बाधित होकर केवल आभासरूप से रहते हैं। 'येन ध्वस्तमनोभवेन' आदि में (विष्णु और शिव) दोनों अर्थों के प्रकृत होने से तुल्ययोगिता का आभास होता है।

और इसी प्रकार "कलकल शब्द से युक्त (सकलकल) यह नगर अब सम्पूर्ण कलाओं से सम्पन्न (सकल-कल) चन्द्रमण्डल के समान है······"इत्यादि

द्वयेन व्याप्तः। अलङ्कारान्तरेणापि व्याप्यते इत्यत आह—तत्पृष्ठे चेति। यत इत्थं नास्य विविक्तविषयता अतोऽलङ्कारान्तराणि श्लेषबाधितानि प्रतिभा-मात्रावविशेषिणी (?त्राविशेषाणि) भवन्ति। इत्थं च सति विविक्ततया यः शङ्कितो विषयः सोऽप्यविविक्त एवेत्याह—येन ध्वस्तेत्यादि।

एवमुभयालङ्कारतां प्रसाध्य बाध्यबाधकभावविवेचनमुपक्रमते—एवं च सकलेति। इत्थं निरवकाशत्वोभयालङ्कारत्वसिद्धौ सकलकलमित्यादौ श्लेष

---

१. °कं भ°—नि०।
२. इदम्—अ० नास्ति।
३. विषये—ना०।
४. व्याप्याव°—अ०।
५. तन्निष्ठत्वेन—अ०।
६. उत्थापनमिति—नि०।
७. नास्य विविक्तोऽस्ति विषयः—इति अ० वाक्ययोजना।
८. एव चा°—अ०।
९. बाधितत्वेन प्रतिभामात्रेणा°—अ०।

न गुणक्रियासाम्यवच्छब्दसाम्यमुपमाप्रयोजकमपि तूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवावसेयः। श्लेषगर्भे तु रूपके रूपकहेतुकस्य श्लेषस्य तृतीयकक्षायां[1] रूपक एव विश्रान्तिरिति रूपकेण श्लेषो बाध्यते। श्लिष्टविशेषणनिबन्धनायां च[2] समासोक्तौ विशेष्यस्यापि गम्यत्वाच्छ्लेषस्य[3] बाधिका समासोक्तिः। [4]इह तु—

(उदाहरण) में गुण और क्रिया के सादृश्य की तरह शब्द का सादृश्य उपमा का प्रयोजक नहीं (माना जा सकता) है अपितु उपमा के आभास को उत्पन्न करने का हेतु श्लेष ही (इस उदाहरण में) मानना चाहिए। पर श्लेषगर्भित रूपक में रूपक को जन्म देने वाले श्लेष की, तीसरी कोटि में, रूपक में ही विश्रान्ति होती है अतः रूपक द्वारा श्लेष बाधित होता है[5]। श्लिष्टविशेषण-मूलक समासोक्ति में विशेष्य गम्य ही रहता है अतः समासोक्ति श्लेष की बाधक रहती है। पर निम्नलिखित (इह तु)—

एव नोपमा। तत्र हेतुः—गुणक्रियासाम्यवच्छब्दसाम्यं नोपमाप्रयोजकमिति सुधांशुबिम्बं सकलाभिः कलाभिरुपेतं पुरं तु कलकलसहितमिति शब्दसाम्यमेवेह। अत उपमाप्रतिभोत्पत्तिहेतुः श्लेष एवावसीयते। ननु निरवकाशत्वात् श्लेषश्चेत् बाधकस्तर्हि रूपकसमासोक्त्योः कुतो न बाध इत्यत आह—श्लेषगर्भे त्वित्यादि। रूपकं हि स्वसिद्धये श्लेषमुत्थाप्य स्वरूप एव विश्राम्यतीति श्लेषबाधकम्। तत्रापि यदि श्लेषः पूर्वसिद्धो रूपकमुत्थाप्य स्वरूपे विश्राम्यति तदा रूपकं बाध्यमेव, यथा भ्रमीभ्रमर (? भ्रमिमरति) मित्यादौ। चर्चितं चैतद् रूपकप्रस्तावे।

रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद् यदि।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते॥

श्लिष्टविशेषणेति। समासोक्तौ तु श्लिष्टविशेषणनिबन्धनायां विशेष्यां-

---

१. °कक्षायाः—ना० शा१। कक्ष्यायां—अ० २. च—ना० शा१ नास्ति।
३. °श्लेषबा°—अ०। ४. इह तु—शा० नास्ति।
५. विद्वन्मानसहंस—विद्वानों के मनरूपी मानसरोवर के हंस—इस उदाहरण में श्लेषगर्भित रूपक है। यहाँ प्रतीति की तीन कोटियाँ हैं। पहले रूपक की प्रतीति होती है, फिर मनमानस में श्लेष की और अन्त में पुनः रूपक का चमत्कार उभर आता है। 'विद्वानों के चित्तरूपी सरोवर के हंस' में हंस का रूपक प्रधान बन जाता है अतः यहाँ रूपक श्लेष का बाधक है।

त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान् ।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्धयै वडवाग्निमध्यम् ॥१२१॥

[1]अत्र श्लोके विवस्वतो वस्तुवृत्तासंभवि अधःप्रदेशसंयोगलक्षणं यत्पतितत्वं यच्च वडवाग्निमध्यप्रवेशस्ते द्वे अपि [2]त्रयीमयत्वसंबन्धिवारुणीगमनरूपविरुद्धाचरणहेतुकाभ्यां पतितत्वाग्निप्रवेशाभ्यामतिशयोक्त्या श्लेषमूलया अभेदेनाध्यवसिते[3] । [4]सोऽयमेकक्रियायोगः । तद्धेतुका च

(तीनों) लोकों में श्रुतिरूप प्रसिद्ध होने पर भी सूर्य वारुणी (पश्चिम दिशा तथा मदिरा) के पास चला गया था। मुझे लगता है कि यही कारण है कि अस्ताचल से पतित (गिरकर तथा अपवित्र) हो कर वह शुद्धि करने के लिए बड़वाग्नि में प्रवेश कर रहा था। १२१ ॥

इस श्लोक में सूर्य का वस्तुदृष्टि से सम्भव नीचे प्रदेश से सम्बन्ध-स्वरूप जो 'पतितत्व'—गिरना—है और जो बडवानल के बीच में प्रवेश है उन दोनों का ही, श्रुतिस्वरूप होने से सम्बन्धित वारुणी (पश्चिम दिशा तथा) मदिरा के सेवनरूप विपरीत आचरण के कारण 'पतित' होने और अग्निप्रवेश के साथ, श्लेषमूलक अतिशयोक्ति से अभेदाध्यवसाय है। और यह (अभेदाध्यवसाय) एक क्रिया से सम्बन्धित है। इस (क्रियायोग) के कारण ही

शस्य गम्यत्वात् समासोक्तिरेव बाधिका । श्लेषे हि वाच्यत्वमेव लक्षणम्, अतो लक्षणविकलत्वाद् विशेषणेष्वाभातोऽपि बाध्य एव । विषयान्तरेऽपि श्लेषस्य बाधकतां दर्शयितुमाह – इह त्वित्यादि ।

जगत्सु त्रयीमयत्वेन प्रतीतोऽपि विवस्वान् वारुणीं प्रति यदगमत् । वारुणी प्रतीची दिक्, सुरा च । अत एवास्तशैलात् पतितः । पातित्यमधःप्रदेशसंयोगः, उपहतिश्च । पतितत्वादेव शुद्धचै बडवाग्निमध्यं विवेशेत्यर्थः । व्याचष्टे–विवस्वतो वस्तुवृत्तेत्यादि । लोके त्रयीमयस्य सतो वारुणीस्पर्शः तोये (? शंतो यौ) पतितत्वाग्निप्रवेशौ ताभ्यां श्लेषमूलयातिशयोक्त्या द्वे अपि विवस्वत्क्रियेऽध्यसिते । सोऽयं तत्क्रियायोगो नामातिशयः । यद्येकैव क्रिया कर्तृभेदभिन्ना सत्यभेदेनाध्यवसिता स तु तत्क्रियायोगः । तद्धेतुका अतिशयोक्ति-

---

1. इति—शा० ना० ।
2. °मयसं°—अ० शा१ ।
3. °ध्यवसीयेते–अ० शा० ।
4. °यमतः क्रियायोगः—ना० शा१ ।

मन्ये अत एव [1]शुद्ध्यै [2]इत्युत्प्रेक्षा। [3]यत्रात एवेति परामृष्टो विरोधालंकारालंकृतोऽर्थो हेतुत्वेनोत्प्रेक्ष्यते। [4]शुद्ध्यै इति च फलत्वेन। [5]अतश्च हेतुफलयोर्द्वयोरप्यत्रोत्प्रेक्षा। विरोधालंकारस्य च [6]विरोधाभासत्वं लक्षणम्। अतो विरोधाभासनसमय एव [7]हेतुफलोत्प्रेक्षयोरुत्थानम्। उत्तरकालं तु विरोधसमाधिः। श्लेषस्य च सर्वालंकारापवादत्वाद्विरोधप्रतिभोत्पत्तिहेतुरयं श्लेषः।

'मुझे लगता है कि यही कारण है कि शुद्ध होने के लिए' यह उत्प्रेक्षा की गई है। जिसमें 'अतएव' से निर्दिष्ट विरोधालंकार से अलंकृत अर्थ हेतुरूप में उत्प्रेक्षित है। 'शुद्ध होने के लिए' यह (अर्थ) फल रूप में (उत्प्रेक्षित) है। इस प्रकार यहाँ हेतु और फल दोनों की ही उत्प्रेक्षा है। विरोधालंकार का लक्षण विरोध का आभास होना है। अतः विरोध की आभास-वेला में ही हेतु और फल की उत्प्रेक्षा का उदय होता है। बाद में तो विरोध विश्रान्त हो जाता है। चूंकि श्लेष सभी अलंकारों का अपवाद है अतः (प्रस्तुत उदाहरण का) यह श्लेषालंकार विरोध अलंकार की छाया (= प्रतिभा या आभास) को उत्पन्न करने का हेतु है।

हेतुका। यत्र चोत्प्रेक्षायाम्। अत एवेति—सर्वनाम्ना परामृष्टो यो विरोधालङ्कारः विरुद्धाचरणाभासरूपस्तेनालङ्कृतोऽर्थः पातित्यरूपं स हेतुत्वेनोत्प्रेक्ष्यते शुद्ध्यै इति च फलत्वेन, अतो हेतूत्प्रेक्षा फलोत्प्रेक्षा च। विरोधालङ्कारोऽपि सम्पन्नलक्षण इत्याह—विरोधालङ्कारस्य चेति। अतो विरोधोत्प्रेक्षालङ्कारयोस्तुल्यकालता एकवृत्तान्तःपातः, उत्तरकालं तु विरोधोपशम इति प्रतीतिक्रमः। इत्थं च सति श्लेषः सर्वबाधकः सन् विरोधालङ्कारं बाधित्वा प्रतिभामात्रेणावस्थापयति। विरोधबाधे च तद्धेतुकोत्प्रेक्षाबाधः सन्नद्ध एवेत्याशयः। अतः श्लेष एवायम्।

---

१. विशुद्ध्यै—शा० ना०।
२. इत्युक्तोत्प्रेक्षा—शा१। इत्युत्प्रेक्षा (क्षया)—नि०।
३. अत्रात—अ० नि०।
४. विशुद्ध्यै—शा०।
५. ततश्च—अ० नि०।
६. विरुद्धा°—अ०।
७. °रुत्थापनम्—अ०।

यत्र तु [1]प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य [2]श्लिष्टशब्दमहिम्ना [3]वक्ष्यमाणार्थनिष्ठ[4]मुपक्षेपापराभिधानं[5] सूचकत्वं तत्र किं श्लेष उत [6]शब्दशक्तिमूलध्वनिरिति विचार्यते—तत्र न तावच्छ्लेषः, अर्थद्वयस्यानन्वितत्वेनाभिधेयतया वक्तुमनिष्टेः। नापि ध्वनिः। उपक्षेप्यस्यार्थस्य [7]संबन्धाभावात्तेन [8]सहोपमानोपमेयत्वस्याविवक्षणात्। न चान्या गतिरस्ति तदत्र किं कर्तव्यम्। उच्यते—श्लेषस्योक्त[9]नयेनात्राप्रवृत्तेर्ध्व-

पर जहाँ (नाटक आदि के) वाक्य में प्रस्तुत वाच्यार्थपरकता होने पर भी श्लिष्ट शब्द की महिमा से भावी अर्थ की सूचना रहती है—जिसका दूसरा नाम उपक्षेप है—वहाँ श्लेष होता है अथवा शब्दशक्ति-मूल ध्वनि यह विचार किया जा रहा है। वहाँ श्लेष तो नहीं होगा क्योंकि दो अर्थ (प्रस्तुत वाक्यार्थ तथा भावी अर्थ की सूचनारूप अर्थ) में अन्वय न रहने से (उन दोनों को) वाच्यार्थ कहना अभीष्ट नहीं है। ध्वनि भी नहीं होगी क्योंकि सूचनीय अर्थ का उस (प्रस्तुत वाक्यार्थ) से सम्बन्ध न होने के कारण उपमानोपमेयभाव विवक्षित नहीं होता है। दूसरा और कोई उपाय नहीं है फिर ऐसे स्थलों में (अत्र) क्या किया जाए? उत्तर

यत्र तु नाटकादौ भाव्यर्थोपक्षेपात्मकं बीजन्यासलक्षणं सूचकत्वं तत्र मीमांसार्थमाह—यत्र त्वित्यादि। प्रस्तुताभिधेयपरत्वेऽपि वर्तमानार्थनिष्ठत्वेऽपि। उपक्षेपाभिधानमिति। उपक्षेप इति तस्य संज्ञा। यदाह—"बीजन्यास उपक्षेपः" इति। अर्थद्वयस्येति। तत्र ह्यर्थद्वयमभिधागोचरत्वेनान्वितं वक्तुं नेष्यते। किं तर्हि? एकोऽर्थोऽभिधेयः प्रस्तुतः, वक्ष्यमाणस्तु सूच्यः। अतो न श्लेषः। श्लेषे द्वयोरभिधेयत्वनियमात्। नापि ध्वनिः। कुतः? उपक्षेप्यस्य भाव्यर्थस्यासम्बन्धेनौपम्याविवक्षणात् श्लेषध्वनिव्यतिरेकिणी गतिरपि नास्ति। तत्र किं कर्तव्यमित्याक्षेपः। समाधत्ते—उच्यत इत्यादि। श्लेषस्तु द्वयो-

---

१. प्रस्तुतत्वाभि°—शा१। २. श्लिष्टपद°—अ० नि०।
३. °अर्थ°—अ० नि० शा१ पुस्तकेषु नास्ति।
४. °ष्ठमाक्षे°—अ०। ५. °धानसू°—ना०।
६. °मूलो ध्व°—अ०। ७. संबद्धत्वाभा°—नि० ना०।
८. °मेयभावस्या°—अ०।
९. °न्यायेनात्र—शा० ना०। °नयेना प्र°—अ० नि०।

नेरेवायं विषय इति [१]निश्चयः। तथा हि शब्दशक्तिमूले [२]ध्वनावर्थान्तरस्यासंबद्धत्वात्संबन्धार्थमौपम्यं कल्प्यते। स च संबन्धः प्रकारान्तरेणौपम्यपरिहारेण यद्यप्युपपादयितुं शक्यः स्यात् तत्को[३]ऽयमभिनिवेशस्तत्रोपमाध्वनौ। वस्तुध्वनिरपि संबन्धान्तरेण समीचीनः स्यात्। अत एव —

अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥१२२॥

है—उर्युक्त सिद्धान्त के अनुसार श्लेष की प्रवृत्ति नहीं होती है अतः इस (उपक्षेप) को ध्वनि का ही विषय मानना निश्चित है। शब्दशक्तिमूल ध्वनि में अर्थान्तर असम्बद्ध होता है अतः सम्बन्ध के लिए (दो अर्थों में) उपमानोपमेयभाव की कल्पना की जाती है। यदि यह सम्बन्ध प्रकारान्तर से उपमानोपमेयभाव को छोड़कर भी सिद्ध किया जा सकता है तो उपमाध्वनि को ही ऐसे स्थलों में (तत्र) मानने का आग्रह क्यों किया जाता है? वस्तुध्वनि भी (औपम्य के अतिरिक्त) किसी दूसरे सम्बन्ध से समीचीन हो सकती है। अत एव—

जहाँ शब्द से अलंकार और वस्तुमात्र प्रधान रूप में प्रतीत होते हैं वह शब्दशक्तिमूलक (ध्वनि) दो प्रकार की है ॥१२२॥

वाच्यत्वाभावात् सर्वथा न प्रवर्तत इति ध्वनेरेव विषयोऽयम्। एतदुपपादयति— तथा हीति। शब्दशक्तिमूले हि ध्वनौ वाच्यप्रतीयमानयोः संबन्धाभावात् सम्बन्धायौपम्यक्लृप्तिः। स चेत् (? च) संबन्ध औपम्यानपेक्षया प्रकारान्तरेण यदि सूपपादः तर्ह्युपमाध्वनौ कोऽभिनिवेशः। न कार्य एव यतो वस्तुध्वनिरपि तत्र विषये संबन्धान्तरेणोपपन्नः। अत एव हि ध्वनिकृता शब्दशक्तिमूलो ध्वनिरलङ्काररूपो वस्तुरूपश्चेति द्विधा न्यायत उक्तः।

"अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा" ॥

१. निश्चिनुमः - अ० नि०।
२. °मूलध्व°—अ०।
३. कोऽभिनिवे°—अ०।

इति [1]न्यायभरबन्धेन द्विधा शब्दशक्त्युद्भव उक्तः। एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः। यथा—

सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं [2]जवा-
त्त्यक्त्वा धूसरकान्तिवल्कलधरो राजास्तशैलं ययौ।
तत्कान्ताप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः
क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा ॥१२३॥

इस न्याय के निबन्धन के अनुसार शब्दशक्तिमूलक (ध्वनि) दो प्रकार की बताई गई है। इस प्रकार प्रकृत में भी जहाँ सूचना का व्यापार है वहाँ शब्दशक्तिमूलक वस्तुध्वनि समझना चाहिए। जैसे—

इन्द्र की (प्राची) दिशा में अरुणोदय हो जाने के कारण आकाश-राष्ट्र को तेजी से छोड़कर, मलिन कान्तिरूप वल्कल धारण किए हुए चन्द्रमा (राजा) अस्ताचल को चला गया। और उसकी कामिनी निशा भी अलिकुल के बढ़ते हुए गुंजार से चिल्लाते हुए, पुत्र के समान कुमुदाकर को सान्त्वना देती हुई शीघ्र ही (चन्द्रमा के साथ) चल दी ॥१२३॥

इति। इत्थं च सति प्रकृतेऽपि सूचकत्वसंबन्धात् शब्दशक्तिमूलो वस्तु-ध्वनिरवसेयः।

अत्रोदाहरणम्—सद्यः कौशिकेति। हरिश्चन्द्रचरिते नाटके कौशिकदिक् उलूकदशा हर्षात्मिका, ते हि प्रभाते हर्षेण कूजन्ति। यद्वा कौशिक इन्द्रस्तस्य दिक् प्राची। तद्विजृम्भणवशात्। प्रभाते हि प्राची प्रतायते। आकाशं राष्ट्रसमम्। इच्छया त्यक्त्वा वल्कलसदृशधूसरकान्तिधरश्चन्द्रः अस्तशैलं ययौ। अथ तत्कान्तापि निशा समुल्लासिभिरलिकुलैः क्रन्दन्तं सुतमिव कुमुदाकरं सान्त्वयन्ती तेन सह क्षिप्रं प्रतस्थे। सूचनीये त्वर्थे विश्वामित्रक्रोधवशात् इच्छया राष्ट्रं त्यक्त्वा वाराणसीं प्रस्थितः। तत्कान्ताप्यौशीनरी क्रन्दन्तं रोहिताश्वं सुतं सान्त्वयन्ती तेनैव सह प्रस्थितेति। इह वस्तुध्वनिरेव निदर्श-

---

१. °भवनब°—नि०। °भरनिवन्धेन—अ०।

२. रसात्—नि० शा०।

इति[१] हरिश्चन्द्रचरिते। अत्र प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितया [२]उशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसंपादितोपद्रववशात्प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति [३]गमनं सूचितं स्यात्। तथा च कौशिकशब्दः [४]प्रकृते इन्द्रोलूकयोर्वर्तते। सूचनीयार्थविषयत्वेन [५]तु विश्वामित्रवृत्तिः। वल्कलसुताभ्यां त्वौपम्यं सूचनीयार्थनैरपेक्ष्येण सादृश्यसंभवमात्रेण[६] [७]विश्रामणीयम्। अतश्च[८] प्रकृतेन सूचनीयस्य संबन्धाच्छब्दशक्तिमूलो वस्तुध्वनिरयम्। इह च—

यह (श्लोक) हरिश्चन्द्रचरित से है। यहाँ प्रभातवर्णन की अनुरूपता के द्वारा राजा शब्द से बताए हुए अस्ताचलगामी चन्द्र (के वर्णन) से रोहिताश्व नामक पुत्र के साथ उशीनरी वधू से युक्त राजा हरिश्चन्द्र का विश्वामित्र द्वारा किए गए उपद्रव के कारण प्रातःकाल में अपने राष्ट्र को छोड़ कर वाराणसी की ओर गमन सूचित होता है। (श्लोक का) कौशिक शब्द प्रस्तुत प्रसंग में इन्द्र और उलूक के लिए आया है। पर सूचनीय अर्थ का विषय बनने के लिए (इस शब्द का) व्यापार विश्वामित्र (अर्थ) में है। वल्कल और पुत्र के साथ औपम्य सूचनीय अर्थ की अपेक्षा किए बिना सादृश्य की सम्भावनामात्र में पर्यवसित कर लेना चाहिए। अस्तु ! प्रकृत (अर्थ) के साथ सूचनीय (अर्थ) का सम्बन्ध होने से इसमें शब्दशक्ति-मूलक वस्तु-ध्वनि है। और निम्नलिखित में (इह च)—

यितुमाह—अत्र प्रभातेत्यादि। ननु धूसरकान्तिवल्कलेति सुतमिति चौपम्यसम्बन्धसद्भावात् कथमयं वस्तुध्वनिरित्यत आह—वल्कलसुताभ्यां त्विति। सूचनीयार्थनैरपेक्ष्येण सादृश्यं सम्भवति। प्रकृतार्थविषयत्वेन तावन्मात्रेण विश्रमणीयं सूचनीयेऽर्थेऽनुपयोगात्। अतः प्रकृतेन सह सूचनीयस्य सूचनसम्बन्धात् शब्दशक्तिमूलो वस्तुध्वनिरेव। इत्थं सर्वत्र नाटकादौ ज्ञेयम्।

अथ यत्र न तुल्ययोगिता, नापि दीपकं तत्रापि नास्त्यलङ्कारान्तरविविक्तोऽस्य विषय इति दर्शयितुमाह—इहेति। अत्र विशेषणानामलकाकर्षवक्त्रा-

१. इति—ना. नास्ति।
२. औशीनर्या—अ०।
३. प्रस्थानम्—अ० शा१।
४. प्रकृतः—शा१।
५. तु—शा१ नास्ति।
६. °णव—अ०।
७. संभवनीयम्—नि०।
८. च—अ० नास्ति।

आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक्प्रियो मे
बाले लज्जा निरस्ता न हि न हि सरले चोलकः किं त्रपाकृत्॥१२४॥

इत्यलंकारान्तरविविक्तोऽयं श्लेषस्य विषय इति नाशङ्कनीयम्। अपह्नुतेरत्र विद्यमानत्वात्। वस्तुतोऽपह्नवस्य सादृश्यार्थमत्र[1] प्रवृत्तेर्नायमपह्नुत्यलंकार इति चेत्, न। उभयथाप्यपह्नुतिसंभवात्[2]। सादृश्यपर्यवसायिना वापह्नवेनापह्नवपर्यवसायिना वा सादृश्येन भूतार्थापह्नवस्योभयत्र[3] विद्यमानत्वात्।

पहले केशपाश को जोर से पकड़ कर, खींच कर, मुंह सटाकर, शोभन कण्ठवाला गले लगा लेता है, स्तनों का गाढ़ आलिंगन कर डालता है, नितम्ब में आसक्ति लगाकर चरणों पर गिर जाता है, ऐसा है मेरा प्रिय। क्या बाले? तुम लज्जा छोड़ बैठी हो? नहीं, नहीं मुग्धे! क्या कहीं चोलक (चोली) से भी लज्जा पैदा होती है॥१२४॥

यह (उदाहरण) दूसरे अलंकारों से स्वतन्त्र श्लेष का विषय है, यह शंका नहीं करनी चाहिए। क्योंकि यहाँ अपह्नुति (अलंकार) विद्यमान है। (शंका) वस्तुतः यहाँ अपह्नव (प्रियतम और चोली में) सादृश्य बताने के लिए प्रवृत्त हुआ है अतः इसमें अपह्नुति अलंकार नहीं है। (उत्तर) यह नहीं। दोनों ही प्रकार से (इसमें) अपह्नुति हो सकती है; सादृश्य में विश्रान्त होने वाले अपह्नव से अथवा अपह्नव में विश्रान्त होने वाले सादृश्य से। क्योंकि वास्तविक अपह्नव दोनों में विद्यमान है।

सञ्जनादीनां वल्लभपरतया प्रथमं प्रतीतिः। अत इत्थं वदन्त्यास्ते लज्जा प्रलीनेति सखीव्यवहारे न हि न हीति वल्लभनिह्नवपुरस्सरं कूर्पासकव्यपदेशः क्रियते। अत्र हि न तुल्ययोगिता दीपकं वा। अतो विविक्तोऽयं श्लेषविषय इति न शङ्कनीयम्। तत्र हेतुः—अपह्नुतेर्विद्यमानत्वादिति। चोदयति—वस्तुत इति। अपह्नवो हि सादृश्यार्थं प्रवर्तते। इह तु सादृश्यमपह्नवाय प्रवृत्तमिति नायमपह्नव इति चोद्यम्। परिहरति—न। उभयथापीति। भूतार्थस्य प्रकृतार्थस्य। प्रकृतार्थापह्नवो ह्यपह्नुतिलक्षणम्। स चोभयथापि

१. °र्थंप्र°—अ०। २. °तेः सं°—अ०। ३. °भयथापि—अ०।

साद्दश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः ।
अपह्नवाय साद्दश्यं [1]तत्राप्येषाप्यपह्नुतिः ॥१२५॥

इति संक्षेपः । आद्या स्वप्रस्ताव एवोदाहृता । द्वितीया तु संप्रति दर्शिता[2] । तेनालंकारान्तरविविक्तो नास्य विषयोऽस्तीति सर्वालंकारापवादोऽयमिति स्थितम् ।

[3]प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिरुक्ता । अधुना तद्वैपरीत्येनाप्रस्तुतात्प्रस्तुतप्रतीतावप्रस्तुतप्रशंसोच्यते—

सादृश्य को व्यक्त करने के लिए जहाँ अपह्नव हो वहाँ यह अपह्नुति होती है और अपह्नव करने के लिये जहाँ सादृश्य हो वहाँ भी यह अपह्नुति होती है ॥१२५॥

यह है (उपर्युक्त मन्तव्य का) संक्षेप। पहली (प्रथम प्रकार की अपह्नुति) का इसी के प्रकरण में उदाहरण दिया जा चुका है। दूसरी को अब बता दिया गया है। अतः इस (श्लेषालंकार) का विषय दूसरे अलंकारों से पृथक् नहीं है; यह सभी अलंकारों का अपवाद है, यह सिद्ध हुआ।

प्रस्तुत से अप्रस्तुत की प्रतीति होने पर अप्रस्तुतप्रशंसा बताई गई है। अब इसके विपरीतरूप में अप्रस्तुत से प्रस्तुत की प्रतीति होने पर अप्रस्तुतप्रशंसा बताई जा रही है।

सम्भवतीत्यपह्नुतिः । अत्र सङ्ग्रहश्लोकमाह साद्दश्यव्यक्तय इति । आद्या सादृश्यपर्यवसाय्यपह्नवरूपा । स्वप्रस्तावे—अपह्नुतिप्रस्तावे । द्वितीया अपह्नवपर्यवसायिसादृश्यात्मिका । निगमयति— तेनालङ्कारान्तरेति ।

शब्दसाम्यं भवेच्छ्लेषो विशेषणविशेष्ययोः ।
यद्येकोऽप्रकृतोऽर्थश्चेत् भेद्यांशे भिन्नशब्दता ॥
शब्दार्थोभयनिष्ठोऽयं सर्वालङ्कारबाधकः ।
पूर्वसिद्धस्य चेदङ्गं तदा न्यायेन बाध्यते ॥

इत्थं न्यायनिर्भरतयानेन प्रपञ्चितोऽपि काव्यप्रकाशकृता प्रतिपदं खण्डितोऽयं श्लेषालङ्कारः । खण्डनयुक्तयस्त्वनौचित्यान्नेह लिख्यन्ते । सम्प्रदायप्रकाशिन्यां तु काव्यप्रकाशटीकायां वितत्य दर्शिता इति तत एवावधार्याः ।

---

१. यत्राप्येषा°—नि० शा० । यत्र सैषा अ० । २. प्रद°—अ० ।
३. °दप्रस्तुतावगतौ—अ० । °दप्रस्तुतगतौ—शा० शा१ । °दप्रस्तुतौ—ना० ।

**अप्रस्तुतात्सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा ।।सू० ३४।।**

इहाप्रस्तुतस्य वर्णनमेवायुक्तमप्रस्तुतत्वात् । प्रस्तुतपरत्वे तु कदाचित्तद्युक्तं स्यात् । न चाप्रस्तुतादसंबन्धे प्रस्तुतप्रतीतिः अतिप्रसङ्गात् । संबन्धे तु भवन्ती न[1] त्रिविधं संबन्धमतिवर्तते । तस्यैवार्थान्तरप्रतीति[2]-[3]हेतुत्वोपपत्तेः । त्रिविधश्च संबन्धः—सामान्यविशेषभावः कार्यकारणभावः सारूप्यं चेति । सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा[4]

सामान्य-विशेषभाव, कार्यकारणभाव तथा सारूप्य (सादृश्य) रहने पर अप्रस्तुत से प्रस्तुत की प्रतीति में अप्रस्तुतप्रशंसा होती है ।।सू० ३४।।

यहाँ अप्रस्तुत का वर्णन अप्रकृत होने के कारण स्वतः असमीचीन होता है। पर यदि वह (अप्रस्तुत) प्रस्तुत-परक है तो कदाचित् समीचीन होगा। और अप्रस्तुत से प्रस्तुत की प्रतीति सम्बन्ध के अभाव में नहीं होती है अन्यथा अतिप्रसंग हो जाएगा[5]। और सम्बन्ध रहने पर होने वाली (प्रतीति) तीन प्रकार के सम्बन्ध से भिन्न नहीं होती है। यही (तीन प्रकार का सम्बन्ध) दूसरे अर्थ की प्रतीति कराने का उपपन्न हेतु है। सम्बन्ध तीन प्रकार का है—सामान्यविशेषभाव, कार्यकारणभाव और सरूपता (सादृश्य)। सामान्यविशेषभाव में सामान्य से विशेष की और विशेष से

अप्रस्तुतप्रशंसां लिलक्षयिषुर्विशेषणविच्छित्तिसङ्गतिसमाप्तेः सङ्गत्यन्तरं दर्शयति—प्रस्तुतादप्रस्तुतेत्यादि। तत्र सूत्रम्—

"अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा" ।।

सामान्यविशेषभावादिसंबन्धावलम्बनाप्रस्तुतात् प्रस्तुतावगतावप्रस्तुतप्रशंसा। व्याचष्टे—इहाप्रस्तुतस्येति। न ह्यप्रस्तुतं प्रस्तुतपरत्वाभावे वर्णनीयमप्रस्तुतत्वात्। प्रस्तुतप्रत्यायकत्वं च सम्बन्धाभावे न घटते, अतिप्रसक्तेः। प्रतीति-

१. त्रिविधं सम्बन्धं नातिवर्तते—इति अ० पुस्तकयोजना।

२. °व वार्था°—शा०। ३ °तुतोप° शा१।

४. वा—शा० नास्ति।

५. यदि सम्बन्ध के अभाव में भी एक पदार्थ से दूसरे पदार्थ की प्रतीति होने लगे तो किसी से भी किसी पदार्थ की प्रतीति हो सकती है। इसी को अतिप्रसंग—असम्बद्ध अर्थ से भी सम्बन्ध—दोष कहा गया है।

सामान्यस्य प्रतीतौ द्वैविध्यम्[1]। कार्यकारणभावेऽप्यनयैव भङ्ग्या [2]द्विधात्वम्। सारूप्ये त्वेको भेद इत्यस्याः पञ्च [3]प्रकाराः। तत्रापि सारूप्यहेतुके भेदे साधर्म्यवैधर्म्याभ्यां द्वैविध्यम्। वाच्यस्य संभवासंभवोभयरूपताभिश्च[4] त्रयः प्रकाराः। श्लिष्टशब्दप्रयोगे त्वर्थान्तरस्यावाच्यत्वाच्छ्लेषाद्विशेषः। श्लेषे ह्यनेकस्यार्थस्य वाच्यत्वमित्युक्तम्। तत्र सामान्याद्विशेषस्य प्रतीतौ यथा—

तण्णत्थि किंपि पइणो पकप्पिअं जं ण णिअइघरणीए।
अणवरअगमणसीलस्स कालपहिअस्स पाहिज्जं ॥१२६॥
[ तन्नास्ति किमपि पत्युः प्रकल्पितं यन्न नियतिगृहिण्या।
अनवरतगमनशीलस्य कालपथिकस्य पाथेयम्॥ ]

सामान्य की प्रतीति होने से दो भेद होते हैं। कार्यकारणभाव में भी इसी तरीके से दो भेद होंगे। पर सादृश्य (सारूप्य) का एक भेद होता है। अतः इस (अप्रस्तुतप्रशंसा) के पांच भेद हैं। इनमें भी सादृश्य-हेतुक भेद में साधर्म्य और वैधर्म्य से द्वैविध्य होता है। वाच्य (अर्थ) के सम्भव, असम्भव और उभयरूपता से भी तीन भेद होते हैं। किन्तु श्लिष्ट शब्द का प्रयोग होने पर अर्थान्तर वाच्य नहीं होता है अतः श्लेष से (इस अलंकार का) भेद है। श्लेष में अनेक (अर्थात् सभी) अर्थों की वाच्यता रहती है, यह बताया जा चुका है। इन (भेदों) में से सामान्य से विशेष की प्रतीति का उदाहरण—

ऐसी कोई वस्तु नहीं है जिसे नियतिगृहिणी ने सतत चलते रहने वाले कालपथिक के लिए पाथेय न बनाया हो। १२६॥

हेतुश्च सम्बन्धस्त्रिधैव। सामान्यविशेषभावः, कार्यकारणभावः, सारूप्यं चेति। तत्र सामान्याद् विशेषस्य विशेषाद्वा सामान्यस्य च प्रतीतिरिति द्वैविध्यम्। एवं कार्यकारणभावेऽपि। सारूप्ये तु यद्यपि नैवमतः पञ्च प्रकाराः। तथापि साधर्म्यवैधर्म्याभ्यां द्वैविध्यम्। भेदान्तरवत् सारूप्येऽपि। अथ सर्वैवेयं वाच्यसम्भवेन्, असम्भवेन, उभयरूपतया चेति त्रिधा। श्लिष्टशब्दप्रयोगे तु श्लेषेण न बाध्यते। प्रस्तुतस्यावाच्यत्वात्। तं णंथीति।

तन्नास्ति किमपि पत्युः प्रकल्पितं यन्न नियतिगृहिण्या।
अनवरतगमनशीलस्य कालपथिकस्य पाथेयम्॥

---

1. द्वैतम्—अ० शा१।
2. द्विविधित्वम्—शा० ना०।
3. विधाः—शा० ना०।
4. च—नि० नास्ति।

अत्र प्रहस्तवधे विशेषे प्रस्तुते सामान्यमभिहितम्। विशेषात्सामान्यप्रतीतौ यथा—

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं [1]वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
[2]स्तत्रोड्डीय गतो [3]हहेत्यनुदिनं निद्राति नान्तः शुचा ॥१२७॥

अत्र जडानामस्थान एवोद्यम[4] इति सामान्ये प्रस्तुते विशेषोऽभिहितः। कारणात्कार्यप्रतीतौ[5] यथा—

यहाँ प्रहस्त का बध विशेष (अर्थ) प्रकृत होने पर सामान्य (अर्थ) का वर्णन हुआ है। विशेष से सामान्य की प्रतीति का उदाहरण—

उस मूर्ख के मुख से यह कौन सी बड़ी बात है कि उसने कमलिनी के पत्ते पर पड़ी पानी की बूंद को मोती का दाना समझा था। इससे भी बड़ी बात सुनो अंगुली की पोर पर (बूंद के) झट-पट (सूखकर) लुप्त हो जाने पर 'मेरा मोती कहाँ उड़कर चला' इस सोच के मारे उसे रात-दिन नींद ही नहीं आती। १२७॥

यहां मूर्खों का उद्यम अस्थान में होता है इस सामान्य (अर्थ) के प्रकृत होने पर बिशेष (अर्थ) का अभिधान हुआ हैं। कारण से कार्य की प्रतीति का उदाहरण—

व्याख्यातं प्राक्। सामान्याद् विशेषप्रतीतिं दर्शयति—अत्र प्रहस्तेति।

एतत् तस्येति। तस्य मुखादेतत् कियद्! वक्ष्यमाणस्य जाड्यस्यापेक्षया जाड्यमप्यल्पकमित्यर्थः। एतदित्युक्तं किं तत्? कमलिनीपत्रे पाथसः कणं मुक्तामणिरित्यमंस्तेति यत्। एवं मन्ता नातिजड इत्यर्थः। स एवातिजडः यस्तु मुक्तामणिधिया आदीयमाने तत्र पाथःकणे अङ्गुल्यग्रक्रियाप्रविलयिनि सति मन्मणिरुड्डीय गत इति अन्तःशुचा न निद्राति। अत्र विशेषात् सामान्यप्रतीतिं दर्शयति—अत्र जडानामिति।

---

1. पाथसो—ना० शा१।
2. कुत्र—का० प्र० पाठः (तत्र—इतिस्थाने)।
3. ममे—अ०।
4. एवाभिनिवेशः—अ०।
5. °प्रतिपत्तौ—अ०।

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं [१]मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥१२८॥

अत्र [२]धाराधिरूढो मानः कथं [३]निवृत्त इति कार्ये प्रस्तुते निवृत्तिकारणमभिहितम् । कार्यात्कारणप्रतीतौ यथा—

इन्दुर्लिप्त इवाञ्जनेन [४]जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमरुचिः[५] श्यामेव हेमप्रभा ।
कार्कश्यं कलयामि[६] कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥१२९॥

'देखें यह क्या करने जा रही है' अतः मैंने चुपकी साध ली । उसने भी 'यह शठ मुझसे गपशप क्यों नहीं करता है ?' अतः गुस्सा धारण कर लिया । इस प्रकार एक दूसरे की शून्य निगाहों की चतुराई की स्थिति में मैं बहाना बनाकर हँस दिया और वह भी धीरज तोड़ने वाले आँसू बहाने लगी । १२८ ॥

यहाँ चढ़ा हुआ मान किस प्रकार समाप्त हुआ इस कार्य के प्रस्तुत होने पर (मान के) समाप्त होने का कारण बताया गया है । कार्य से कारण की प्रतीति का उदाहरण—

सीता के आगे चन्द्रमा काजल से पुता हुआ-सा, हिरनियों के नेत्र जड़ीभूत-से, मूंगे की लालिमा मलिन-सी, सोने की कान्ति काली-सी दिखाई देती है । कोयल के गले में कर्कशता-सी मुझे जान पड़ती है । हन्त ! मयूरों के पंख निन्दनीय लगते हैं । १२९ ॥

पश्याम इति । सुहृदा सह नायिकावृत्तान्तोपवर्णनरूपा नायकोक्तिरियम् । किमियं प्रपद्यत इति पश्याम इति धिया सल्लापपरित्यागादिरूपं स्थैर्यं मयावलम्बितं, तया त्वयं खलु शठो मां न किमप्यालपतीति कोप आश्रित इत्यन्योन्यं वैलक्षण्येन दर्शनचतुरे तत्रावस्थान्तरे मया व्याजेन हसितम्, तया च मम तथा स्थैर्यहरो बाष्पो मुक्तः । उद्बाष्पायां तु तस्यां धैर्यं धौर्त्यं मुक्तमित्यर्थः । अत्र कारणात् कार्यप्रतीतिं दर्शयति—अत्र तथा धाराधिरूढेति । माननिवृत्तिकार्ये प्रस्तुते बाष्पमभिहितमप्रस्तुतत्वेन विवक्षणीयम् ।

---

१. मामाल°—नि० । २. तथाधि°—अ० । ३. प्रवृत्त—शा१ ।
४. जनिता—ना० । ५. °दलं—अ० ६. कलयापि—अ० ।

अत्र संभाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वाद्भिः कार्यरूपैरप्रस्तुतैर्लोकोत्तरो वदनादिगतः सौन्दर्यातिशयः[1] कारणरूपः प्रस्तुतः प्रतीयते। तेनेयमप्रस्तुतप्रशंसा। ननु कार्यात्कारणे गम्यमानेऽप्रस्तुतप्रशंसायामि[2]ष्यमाणायाम्

येन लम्बालकः सास्रः कराघातारुणस्तनः।
अकारि [3]भग्नवलयो गजासुरवधूजनः ॥१३०॥

[4]इति। तथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासशून्यं[5] रतोत्सवं चुम्बनमात्रशेषम् ॥१३१॥

यहाँ चन्द्रमा आदि में काजल से पुते होने आदि से जिन कार्यरूप अप्रस्तुतों की सम्भावना की जा रही है उनसे मुखादि के अतिशय सौन्दर्य की—जो कारण रूप अप्रस्तुत है—प्रतीति होती है। अतः यह अप्रस्तुतप्रशंसा है। प्रश्न यह है कि यदि कार्य से कारण के प्रतीयमान होने में अप्रस्तुतप्रशंसा अभीष्ट है तो—

जिसने गजासुर के वधूगण को लम्बे केश वाला, साश्रु, कराघात से अरुणित स्तन वाला तथा नष्ट कंकण वाला बना दिया। १३० ॥

इसमें तथा—

जिसने (सुदर्शन) चक्र के द्वारा चोंट पहुँचाने की बलवती आज्ञा से राहु के वधूगण के रतोत्सव को आलिंगन के उद्दाम विलास से शून्य, केवल चुम्बन तक सीमित बना दिया। १३१ ॥

इन्दुरिति। इन्दुरञ्जनेन विलिप्त इवेत्यनेन मुखस्य सौन्दर्यं, मृगीणां दृष्टिर्जडितेवेति दृक्चाञ्चल्यं, विद्रुमदलं प्रम्लानारुणिमेवेत्यधरप्रभा, कोकिलवधूकण्ठेषु कार्कश्यं प्रस्तुतमिवेति स्निग्धकण्ठता बर्हाः सगर्हा इवेति च केशभारवैपुल्यं प्रतीयते। कार्यात् कारणप्रतीतिं दर्शयति—अत्र सम्भाव्यमानैरित्यादि। सम्भाव्यमानैरुत्प्रेक्ष्यमाणैः। अत्रातिव्याप्तिमाशङ्कते—ननु कार्यादित्यादि।

येन लम्बालक इति। अत्र लम्बालकत्वादिना कार्येण गजासुरवधरूपकारणप्रतीतिः।

चक्राभिघातेति। अत्र रतस्यालिङ्गनवन्ध्यत्वचुम्बनमात्रशेषत्वरूपकार्य-

---

1. विशेषः—अ० (अतिशयः—इति स्थाने)
2. गम्यमानायाम्—शा० ना०।
3. °भुग्न°—अ०।
4. इति। तथा—अ० नास्ति।
5. बन्ध्यं—अ०

इत्यादौ सुप्रसिद्धे [१]पर्यायोक्तविषयेऽप्रस्तुतप्रशंसाप्रसंगः[२]। अत्र हि [३]गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते। तथा राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणभूतो[४] गम्यते। एवमन्यत्रापि पर्यायोक्तविषये [५]ज्ञेयम्। तस्माद-प्रस्तुतप्रशंसाविषयत्वात्पर्यायोक्तस्य निर्विषयत्वप्रसङ्गः[६]। नैष दोषः। [७]इह यत्र कार्यात्कारणं प्रतीयते तत्र[८] कार्यं प्रस्तुतमप्रस्तुतं [९]चेति द्वयी गतिः। [१०]तत्र [११]यत्र प्रस्तुतत्वं कार्यस्य कारणवत्तस्यापि वर्णनीयत्वात्तत्र कार्य-मुखेन कारणं पर्यायेणोक्तमिति पर्यायोक्तालंकारः। तत्र हि कारणापेक्षया

इस प्रकार के पर्यायोक्त (अलंकार) के सुप्रसिद्ध विषय (उदाहरणों) म अप्रस्तुतप्रशंसा होने लग जाएगी। इस (प्रथम उदाहरण) में तो गजासुर की वधुओं के लम्बे केश आदि होने के कार्य से कारण-भूत गजासुर के बध की प्रतीति होती है। तथा (दूसरे उदाहरण म) राहु की वधुओं के विशिष्ट रतोत्सव से राहु के शिरश्छेदन की - जो कारण भूत है—प्रतीति होती है। इसी प्रकार पर्यायोक्त के दूसरे उदाहरणों में भी समझ लेना चाहिए। अतः (ऐसे स्थलों में पर्यायोक्त के) अप्रस्तुतप्रशंसा का विषय बन जाने से पर्यायोक्त का विषय ही नहीं रह जाएगा? यह दोष नहीं है (अर्थात् कार्य से कारण का प्रतीयमान होना अप्रस्तुतप्रशंसा में अभीष्ट है)। इस संदर्भ म (इह) जहाँ कार्य से कारण की प्रतीति होती है वहाँ कार्य प्रस्तुत होगा या अप्रस्तुत, यही दो तरह की स्थिति हो सकती है। इन स्थितियों में (तत्र) जहाँ वर्णनीय होने से कारण की तरह उस कार्य में प्रस्तुतरूपता रहती है वहाँ कार्य के माध्यम से कारण पर्याय से उक्त होता है अतः पर्यायोक्तालंकार

भेदाद् राहुशिरश्छेदः कारणम्। अत्रातिव्याप्तिं दर्शयति—अत्र हीत्यादि। परिहरति– नैष दोष इति।

द्वयोरपि प्रस्तुतत्वे कारणापेक्षया कार्योपवर्णनस्य चमत्कारत्वे तद्द्वारा कारणप्रत्यायनं पर्यायोक्तिविषयः, कार्यस्याप्रस्तुतत्वे त्वप्रस्तुतप्रशंसाया इति

१. अपि – अ० पुस्तके ऽधिकः। २. °प्रयोगः—नि०।
३. स्त्री—ना०। ४. °रूपो—नि०। °रूपोऽवगम्यते–अ०।
५. ज्ञेयम्—शा० नास्ति। ६. इति—अ० शा१ पुस्तकयोरधिकः।
७. उभय°—अ०। ८. तत्र—अ० नास्ति।
९. चेति—अ० नि०। १०. यत्र—नि०। ११. यत्र प्रस्तु°—अ०।

कार्यस्यातिशयेन सौन्दर्यमिति तदेव वर्णितम्। यथोक्तोदाहरणद्वये। अत्र हि [१]गजासुरवधवत् गजासुरवधूवृत्तान्तोऽपि भगवत्प्रभावजन्यत्वात्प्रस्तुत एव। एवं राहुवधूवृत्तान्तेऽपि[२] ज्ञेयम्। ततश्च नायमप्रस्तुतप्रशंसाविषयः[३]। यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्र स्पष्टैवाप्रस्तुतप्रशंसा। यथा—'इन्दुर्लिप्त इवाञ्जनेन'[४] इत्यादौ। अत्र हि इन्द्वादयः स्फुटमेवाप्राकरणिकाः। तत्प्रतिच्छन्दभूतानां मुखादीनां प्राकरणिकत्वात्। तेनात्रेन्द्वादिगतेनाञ्जनलिप्तत्वादिना अप्रस्तुतेन [५]कार्येण प्रस्तुतं मुखादिगतं सौन्दर्यं सहृदयाह्लादकारि[६] गम्यते [७]इत्यत्राप्रस्तुतप्रशंसासौ[८]। एवं [९]च यत्र वाच्योऽर्थोऽर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनागूरयति, तत्र पर्यायोक्तम्। यत्र पुनः स्वात्मानमेवाप्रस्तु-

होगा। इस अलंकार में (तत्र) कारण की अपेक्षा कार्य में अतिशय सौन्दर्य रहता है अतः उसी का वर्णन कर दिया जाता है जैसे कि उपर्युक्त दो उदाहरणों में। यहाँ भगवान् के प्रभाव से जनित होने से वध की भाँति गजासुर की वधू का वृत्तान्त भी प्रकृत ही है। इसी तरह राहु की वधुओं के वृतान्त को भी (प्रस्तुत) समझा जाना चाहिए। अतः यह विषय अप्रस्तुतप्रशंसा का नहीं है। पर जहाँ कारण के प्रस्तुत होने पर अप्रस्तुत कार्य का वर्णन किया जाता है वहाँ स्पष्ट ही अप्रस्तुतप्रशंसा है जैसे कि 'चन्द्रमा काजल पुता-सा' इत्यादि (उदाहरण) में। यहाँ पर तो चन्द्रमा आदि स्पष्टतः अप्रकृत है क्योंकि उनके प्रतियोगीभूत (सीता के) मुख आदि प्रकृत हैं। इसलिए इस उदाहरण में (अत्र) 'चन्द्रमा आदि का काजल से पुता होने' आदि के अप्रस्तुत कार्य से प्रस्तुत मुखादि के सौन्दर्य की—जो सहृदय के हृदय को आह्लादित करता है—प्रतीति होती है अतः यह अप्रस्तुतप्रशंसा है। इस प्रकार जहाँ वाच्य अर्थ समान अर्थान्तर का अपने उपस्कार के रूप में आक्षेप करता है वहाँ पर्यायोक्त होता है। और जहाँ (अप्रस्तुत अर्थ) अप्रकृत होने के कारण

विभागः। विभक्तविषयतया निगमयति—एवं यत्रेत्यादि। तादृशमेव प्रकृतमेव। आगूरयति सामर्थ्यादानयति। इत्थं च सति प्रस्तुतस्य सतोऽर्थस्य

---

१. गजासुरवधूवत्—नि० नास्ति। २. वृत्तान्तोऽपि ज्ञेयः—अ०। ३. सायाः वि°—अ०। ४. अञ्जनेन—अ० पुस्तके नोपात्तम्। ५. कार्येण—अ० नास्ति। ६. °याह्लादि—अ०। ७. इत्यत्राप्र°—नि०। ८. इत्यप्रस्तुतप्रशंसैवासौ—अ०। ९. च—शा१ नास्ति।

तत्वात्प्रस्तुतमर्थान्तरं प्रति समर्पयति, तत्राप्रस्तुतप्रशंसेति निर्णयः। [१]ततश्चानया प्रक्रियया—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमार सचिवैर्नाद्यापि [२]किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥१३२॥

इत्यत्र पर्यायोक्तमेव[३] बोध्यम्। अन्ये तु 'दण्डयात्रोद्यतं त्वां बुद्ध्वा [४]त्वदरयः पलाय्य गता' इति कारणरूपस्यैवार्थस्य प्रस्तुतत्वात्कार्यरूपोऽर्थोऽप्रस्तुत एव। [५]राजशुकवृत्तान्तस्याप्रस्तुतत्वात्प्रस्तुतार्थं प्रति स्वात्मानं

प्रकृत अर्थान्तर के प्रति अपने को ही समर्पित कर देता है वहाँ अप्रस्तुतप्रशंसा होती है, यह निर्णय हुआ। अतः इस आधार पर—

राजन्! राजकुमारी मुझे पढ़ाती नहीं है। रानियां चुपचाप खड़ी रहती हैं। अरे कूबड़ी (दासी)! मुझे खाना खिलाओ। राजकुमार और उसके साथियों ने क्या अभी तक भोजन नहीं किया है? राहगीरों के द्वारा पिंजड़े से उन्मुक्त राजशुक (अच्छी जाति का सुग्गा) तुम्हारे शत्रु प्रासाद की सूनी अटारी पर चित्रित लोगों को देखकर एक-एक से कह रहा है। १३२॥

इस (उदाहरण) में पर्यायोक्त ही समझना चाहिए। दूसरे (आचार्य) कहते हैं कि "दण्ड देनेके लिए यात्रा पर तुम्हें सन्नद्ध पाकर तुम्हारे शत्रु भागकर चले जाते हैं" इस कारणरूप अर्थ के ही प्रस्तुत होने से कार्यरूप अर्थ अप्रस्तुत ही है। राजशुक का वृत्तान्त, अप्रस्तुत होने के कारण, प्रस्तुत अर्थ

सोपस्काराय प्रकृतान्तरागूरणे पर्यायोक्तमेवेति प्रथनाय पुनराह—ततश्चानयेत्यादि।

राजन्निति। कुब्जा शुकभोजननियुक्ता। कुमारेति संबोधनम्। तत्सचिवाः सजग्ध्याधिकारिणः। राजशुकः श्रेष्ठशुकः। तत्र राजशुकवृत्तस्यापि नायकप्रतापाङ्गतया प्रकृतत्वात् पर्यायोक्तमेव बोद्धव्यम्। अन्येषां हृदयमाह—अन्ये त्विति। कारणरूपस्यारिपलायनलक्षणस्य ईदृशि विषयेऽन्येषामप्रस्तुतप्रशंसात्वबुद्धावपि न विरोधः कश्चित्। द्वयोः प्रस्तुतत्वे पर्यायोक्तं, कार्यस्या-

---

१. अत°—शा१। २. संभु°— नि०। ३. °मेवेति बोद्धव्यम्—अ०। ४. त्वदरयः—शा० ना० नास्ति। ५. °न्तश्चाप्र°—अ०।

समर्पयतीत्यप्रस्तुतप्रशंसैवात्र न्याय्येति वर्णयन्ति। सर्वथा पर्यायोक्ताप्रस्तुतप्रशंसयोर्विषयविभागः[1] सुनिरूपित एवेति स्थितम्।[2] एतानि साधर्म्योदाहरणानि। वैधर्म्येण यथा—

धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥१३३॥

अत्र वाता धन्या इत्यप्रस्तुतादर्थादहमधन्य[3] इति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते। [4]वाच्यसंभव [5]उक्तान्येवोदाहरणानि। असंभवे यथा—

के प्रति अपने को समर्पित कर देता है अतः यहाँ अप्रस्तुतप्रशंसा (मानना) ही उचित है। पर्यायोक्त और अप्रस्तुतप्रशंसा का विषयभेद पूर्णतः अच्छी तरह से बताया ही जा चुका है। यह हुई व्यवस्था। ये (उपर्युक्त) उदाहरण साधर्म्य के थे। वैधर्म्य से (सादृश्य का) उदाहरण—

कमलों के स्पर्श से शीतल, वन की हवाएँ सचमुच बड़भागी हैं जो नील-कमल के समान श्यामल राम का बिना रोक टोक के स्पर्श करती हैं। १३३॥

यहाँ 'हवाएँ बड़भागी हैं' इस अप्रस्तुत अर्थ से "म बड़भागी नहीं हूँ" इस प्रस्तुत अर्थ की वैधर्म्य से प्रतीति होती है। वाच्यार्थ के सम्भव होने के उदाहरण उपर्युक्त ही हैं। असम्भव (अर्थ) का उदाहरण—

प्रस्तुतत्वे त्वप्रस्तुतप्रशंसेति विभागस्यानाकुलत्वादित्यभिप्रायणाह—सर्वथेति। अथैतानि चत्वारि साधर्म्योदाहरणत्वेनापि ज्ञेयानीत्याह -एतानि साधर्म्य इति। वैधर्म्ये तून्नेयानि। सारूप्यहेतुकं तु भेदमनया नीत्या साधर्म्येण सुज्ञानत्वाद् वैधर्म्येणोदाहरति—धन्या इति। अत्र वैधर्म्यं दर्शयति—अत्र वाता इति। वाच्यसम्भवे पृथङ्नोदाहर्तव्यानीत्याह वाच्येति।

---

१. °गस्तु निरू°—नि०। °गः स्वरूप एव—ना०।

२. सारूप्ये यथा। अ० पुस्तकेऽधिकः। अत्र कानिचित् सारूप्योदाहरणान्यासन्निति विमर्शिनीटीकाया ज्ञायते। तथा हि तत्र टीका—"इह च सारूप्येण साधर्म्योदाहरणानां पूर्वमनुद्दिष्टानामप्येतानि साधर्म्योदाहरणानीत्यनेनातिदेशवाक्यनेति निश्चिनुमः" (नि० सा० पृ० १३७)। समुद्रबन्धेनात्र एतदभावमुल्लिख्य स्वनिर्मितान्युदाहरणानि दर्शितानि (अन्तशयनसंस्कृतग्रन्थावलिः, पृ० ११७)।

३. अधन्येति अ०। ४. वाच्यस्य—नि० शा० वि०।

५. उक्तानीत्यत्रापि विमर्शिनीकारो ग्रन्थस्योदाहरणानि लुप्तानीत्यभिप्रायेण

**कस्त्वं भोः कथयामि दैवहतकं मां विद्धि [1]शाकोटकं**
**वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।**
**वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते**
**न च्छायापि परोपकारकृतये[2] मार्गस्थितस्यापि मे ॥१३४॥**

**अत्राचेतनेन सह प्रश्नोत्तरिका [3]नोपपन्नेति वाच्यस्यासंभव एव । प्रस्तुतं प्रति तात्पर्यात्प्रमुख एव तदध्यारोपेण[4] प्रतीतिरिति युज्यत [5]एवैतत् । उभयरूपत्वे यथा—**

अरे तुम कौन हो ? बताता हू । यही समझो कि दुर्भाग्य का मारा मैं श्मशान का पेड़ हूँ । (मालूम पड़ता है कि) तुम निराशा से बोल रहे हो । तुम ठीक समझे । पर ऐसा क्यों है ? बताता हूँ, मेरी बांईं ओर बरगद का पेड़ है; पथिकजन उसका सर्वात्मना सेवन करते हैं । मैं यद्यपि मार्ग में खड़ा हूँ पर मेरी छांह भी दूसरों का उपकार करने में काम नहीं आती । १३४ ॥

यहाँ अचेतन (श्मशानवृक्ष) के साथ प्रश्न और उत्तर उपपन्न नहीं है अतः वाच्य (अर्थ) असम्भव ही है । (अप्रस्तुत अर्थ का) तात्पर्य प्रस्तुत के प्रति रहता है अतः प्रारम्भ में ही उस (उपपन्न मुख्यार्थ) के साथ अध्यारोप करके इस (अप्रस्तुत) की प्रतीति होती है । इस प्रकार यह (असम्भव अप्रस्तुत) उपपन्न हो जाता है । उभयरूप (वाच्यार्थ के सम्भव और असम्भव) होने का उदाहरण—

**कस्त्वं भो इति । कस्त्वमिति पृष्टः शाकोटकतरुर्वक्ति—भोः कथयामीति । ततः पुनः प्रश्नः—वैराग्यादिव वक्षीति । तत्रोत्तरं साधु विदितमिति । अथ कस्मादिति प्रश्ने अवशिष्टमुत्तरम् । असम्भवं दर्शयति—अत्राचेतनेनेति । नन्वेवमसङ्गतत्वं प्राप्तमित्यत आह—प्रस्तुतं प्रतीति । प्रमुख एव शाकोटक-**

---

स्वयमेव वाच्यस्य सम्भवे त्रीणि 'परार्थे यः पीडामनुभवति…' 'पातः पूष्णो भवति…' 'पथि निपतितां शून्ये लब्ध्वा…' इत्युदाहरणानि लिखति ब्रूते च "इत्युदाहरणान्यत्र मध्ये लेखितव्यानि येन ग्रन्थस्य संगतत्वं स्यात्" (नि० सा० पृ० १३८) । समुद्रबन्धोऽपि—"उक्तानीति भ्रष्टत्वाददृष्टानि श्लेषादिमन्ति निर्दिश्यन्त" इत्याह ।

१. °शाखो°—नि० । २. °करणी—अ० । ३. नुपप°—अ० ।
४. °रोपप्रतीतेर्यु°—अ० । °रोपणप्रतीतेः—शा१ ।
५. एव—शा० ना० शा१ नास्ति ।

अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥१३५॥

अत्र वाच्येऽर्थे कण्टकानां [1]भङ्गुरीकरणे हेतुत्वं[2] संभवि च्छिद्राणां [3]त्वसंभवीत्युभयरूपत्वम्[4] । [5]प्रस्तुततात्पर्येण प्रतीतेस्तदध्यारोपात्तत्र[6] संगतमेवैतदिति नासमीचीनं किंचित् । एतदेव च[7] श्लेषगर्भायामस्या-मुदाहरणम् ।

भीतर बहुत से छेद हैं और बाहर बहुत से कांटे फिर भला कमलनाल के गुण भंगुर क्यों न हों ? १३५ ॥

यहां वाच्य अर्थ में कांटो को भंगुर बताने का हेतु सम्भव (उपपन्न) है पर छिद्रों का असम्भव अतः उभयरूपता है ।

प्रस्तुत की तात्पर्यरूप में प्रतीति होने से उसके साथ (अप्रस्तुत का) अध्यारोप हो जाने के कारण यह (अप्रस्तुतार्थ) संगत हो जाता है अतः कुछ भी असमीचीन नहीं है । यही (पद्य) श्लेष-गर्भित इस (अप्रस्तुतप्रशंसा अलंकार) का उदाहरण है ।

वृत्तस्यारोपितत्वप्रतीतेर्युज्यत एवात एवासंभवो वाच्यस्य जहत्स्वार्थलक्षणा-मूलत्वेनात्यन्ततिरस्कारात् ।

अन्तश्छिद्राणीति । छिद्राणि रन्ध्राणि, अनर्थद्वाराणि च । कण्टकाः पुलकाः विघाताश्च । अत्र वाच्येऽर्थे छिद्राणि न गुणभङ्गुरीभावे हेतुरित्युभय-रूपता । प्रस्तुततात्पर्येण च प्रतीतेस्तदध्यारोपात् सङ्गतत्वमेव । तदिदमाह— अत्र वाच्य इत्यादि । श्लेषगर्भत्वे चैतदेव द्रष्टव्यम् । छिद्रकण्टकगुणानां श्लिष्टत्वादित्याह— एतदेव चेति ।

---

१. गुणभङ्गु° – अ० । 'भङ्गुरीभावे' इति पाठोऽत्र ज्यायान् ।
२. °त्वमसंभवि – अ० ।
३. तु—ना० नास्ति । तु संभवि इत्यु°—अ० ।
४. °वीति ह्युभय°—ना० ।
५. प्रस्तुतस्य –नि० ना० ।
६. तत्र—अ० नास्ति ।
७. च—शा१ न दृश्यते ।

तदत्र सामान्यविशेषत्वेन, कार्यकारणत्वेन, सारूप्येण च[1] यद्भेद-पञ्चकमुद्दिष्टं, [2]तत्र द्वयोः सामान्यविशेषयोः कार्यकारणयोश्च यदा वाच्यत्वं भवति तदार्थान्तरन्यासाविर्भावः। सरूपयोस्तु वाच्यत्वे दृष्टान्तः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वे [3]सर्वथाप्रस्तुतप्रशंसेति निर्णयः। उक्तन्यायेन[4] प्राप्तावसरमर्थान्तरन्यासमाह—

सामान्य-विशेषभाव, कार्यकारणभाव और सादृश्य के द्वारा जिन पाँच भेदों को यहां बताया गया है उनमें से जब सामान्य और विशेष, कार्य और कारण, दोनों ही वाच्यरूप होते हैं तब अर्थान्तरन्यास का उदय होता है। और दो सदृश के वाच्य होने पर दृष्टान्त होता है। अप्रस्तुत के वाच्य होने पर और प्रस्तुत के प्रतीयमान होने पर सर्वथा अप्रस्तुतप्रशंसा ही होती है, यह है निष्कर्ष।

पूर्वोक्त न्याय (सामान्यविशेषभाव की चर्चा) से प्रसंगप्राप्त अर्थान्तर-न्यास को बताया जाता है।

अस्या अर्थान्तरन्यासदृष्टान्ताभ्यां विषयविवेकं दर्शयति—तदत्रेति। अर्थान्तरन्यासे हि सामान्यविशेषयोः कार्यकारणयोश्च वाच्यत्वम्। दृष्टान्ते तु सरूपयोर्वाच्यत्वम्। सर्वत्रैव प्रस्तुतस्य गम्यत्वे अप्रस्तुताभिधानादप्रस्तुतप्रशंसैव।

अप्रस्तुतप्रशंसा तु प्रस्तुतावगमोऽन्यतः।
सा सामान्यविशेषादिविच्छित्त्या पञ्चधा मता॥

भवेत् साधर्म्यवैधर्म्ययोगतः सा पुनर्द्विधा।
सम्भवेऽसम्भवे द्वैधे वाच्यस्याथ पुनस्त्रिधा॥

प्रस्तुतस्यावगम्यत्वात् पर्यायोक्ताद् विभिद्यते।
इयमर्थान्तरन्यासाद् दृष्टान्तालङ्कृतेरपि॥

अर्थान्तरन्यासार्थं सङ्गतिमाह—उक्तनयेनेति। सामान्यविशेषादिसंबन्ध-योग उक्तो नयः। तत्र सूत्रम्—

---

1. च—ना० शा० शा१ नास्ति।
2. ततो—ना०।
3. सर्वत्रा°—अ०।
4. °उक्तनयेन—सं०

**सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः ।।सू० ३५।।**

निर्दिष्टस्याभिहितस्य समर्थनार्हस्य प्रकृतस्य समर्थकात्पूर्वं पश्चाद्वा निर्दिष्टस्य यत्समर्थनमुपपादनं, न त्वपूर्वत्वेन [1]प्रतीतिरनुमानरूपा, सोऽर्थान्तरन्यासः । तत्र सामान्यं विशेषस्य, विशेषो वा सामान्यस्य समर्थक इति द्वौ भेदौ । [2]तथा कार्यं[3] कारणस्य, कारणं वा कार्यस्य समर्थकमिति[4] च द्वौ भेदौ । तत्र भेदचतुष्टये प्रत्येकं साधर्म्यवैधर्म्याभ्यां [5]भेदद्वयेऽष्टौ भेदाः । हिशब्दाभिधानानभिधानाभ्यां समर्थकपूर्वो-

सामान्यविशेषभाव से, तथा कार्यकारणभाव से निर्दिष्ट प्रकृत का समर्थन अर्थान्तरन्यास है । सू० ३५ ।।

अर्थान्तरन्यास (अलंकार) वह है जिसका प्रस्तुत अर्थ समर्थनयोग्य होता है । उसका निर्देश या अभिधान रहता है । यह निर्देश या तो समर्थक (वाक्य) के पहिले आता है या बाद में । इस प्रस्तुताभिधान का समर्थन होता है, अनुमान की तरह अपूर्वरूप में प्रतीति नहीं होती है । सामान्य विशेष का अथवा विशेष सामान्य का समर्थन करता है, इसप्रकार दो भेद हुए । इसी प्रकार कार्य कारण का अथवा कारण कार्य का समर्थक होता है, ये भी दो भेद हुए । इन चार भेदों में से प्रत्येक के साधर्म्य और वैधर्म्य से दो भेद होने पर (कुल) आठ भेद होते हैं । 'हि' (हेतुवाचक) शब्द के

**"सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" । आभ्यां संबन्धाभ्यां समर्थ्यत्वेन निर्दिष्टस्य प्रकृतस्य समर्थनमर्थान्तरन्यास इत्यर्थः । व्याचष्टे निर्दिष्टेत्यादि । समर्थनार्हस्य न तु समर्थननिर्व्यपेक्षस्य । समर्थकात् पूर्वं पश्चाद् वेति पूर्वपश्चाद्भावे कामचार उक्तः । न त्वपूर्वत्वेनेति । निर्दिष्टत्वेनैव प्रतीतिर्न त्वपूर्वत्वेन । अपूर्वत्वे को दोष इत्यत आह—अनुमानरूपेति । तथा प्रतीतावनुमानरूपतैव प्रसजेदित्यर्थः । भेदान् संचष्टे—तत्र**

---

१. प्रतीतिः । अतो नानुमानरूपोऽसावर्थो°—अ० । प्रतीतिर्नानुमानरूपोऽसावर्थो° शा० ।

२. तथा—शा० ना० नास्ति ।

३. कार्यं वा – शा० ना० । ४. °मित्यपि – नि० । °मिति द्वौ – अ० ।

५. °द्वयेनाष्टौ—शा० ना० ।

पन्यासोत्तरोपन्यासाभ्यां च[1] भेदान्तरसंभवेऽपि न तद्गणना सहृदयहृदयह्लादिनी[2], वैचित्र्यस्याभावात्। तस्माद्दाष्टकमेवेहोट्टङ्कितम्। क्रमेण यथा—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥१३६॥
लोकोत्तरं चरितमर्पयति प्रतिष्ठां पुंसां कुलं नहि निमित्तमुदारतायाः[3]
वातापितापनमुनेः कलशात्प्रसूतिर्लीलायितं पुन[4]रमुद्रसमुद्रपानम् ॥१३७॥

प्रयोग या अप्रयोग से, समर्थक (वाक्य) को पहले या बाद में रखने से और भी भेद हो सकते हैं पर उनकी गणना, वैचित्र्य का अभाव होने से, सहृदय के हृदय को आनन्द नहीं देती है। अतः आठ भेद ही यहाँ बताए गए हैं। क्रमशः उदाहरण—

(सामान्य से विशेष का साधर्म्य द्वारा समर्थन)

अनन्त रत्नों के उत्पादक जिस (हिमालय) का हिम सौन्दर्य का नाशक नहीं बन पाया क्योंकि गुणसमुदाय में एक दोष, चन्द्रकिरणों में कलंक की भांति, छुप जाता है। १३६ ॥

(विशेष से सामान्य का साधर्म्य द्वारा समर्थन)

अलौकिक चरित्र प्रतिष्ठा सर्मापत करता है। कुल मनुष्यों की उदारता (महत्ता) का कारण नहीं होता है। अगस्त्य का जन्म घड़े से हुआ था किन्तु इनके लिए तरल सागर का पान खेल बन गया था। १३७ ॥

सामान्यमित्यादि। सम्भवतोऽपि वैचित्र्यविरहिणो भेदानपोहति – हिशब्देत्यादि। उट्टङ्कितं निष्टङ्कितम्।

अनन्तरत्नेति। सन्निपातो बहूनां संघातः। अत्र गुणसन्निपाते दोषनिमज्जनलक्षणं सामान्यं साधर्म्येण विशेषसमर्थकम्।

लोकोत्तरमिति। पुंसां लोकोत्तरं चरितमेव प्रतिष्ठामर्पयति, औदार्यं प्रतिष्ठापयतीत्यर्थः। न तु कुलमिह निमित्तम्। वातापितापनोऽगस्त्यः, कलशः कुलस्थानीयस्तस्य समुद्रपाने कोऽधिकारः। लीलायितं चरितस्थानीयम्। अत्रागस्त्यवृत्तलक्षणो विशेषः साधर्म्येण सामान्यसमर्थकः।

---

१. च – ना० नास्ति।
२. सहृदयहृदयहारिणी—नि०। सहृदयहृदयहारिणो वैचि°—अ०।
३. °दात्तता°—अ० नि०। ४. °रमुष्य – अ०।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥१३८॥

अत्र सहसाविधानाभावस्य[१] विमृश्यकारित्वरूपस्य [२]कारणस्य संपद्वरणं कार्यं साधर्म्येण समर्थकम् । [३]तस्यैवैतत्कार्यविरुद्धत्वमापत्पदत्वं सहसाविधानाभावविरुद्धाविवेककार्यं वैधर्म्येण समर्थकम् ।

पृथ्वि स्थिरा[४] भव भुजंगम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥१३९॥

(कार्य से कारण का साधर्म्य और वैधर्म्य द्वारा समर्थन)

जल्दवाजी में काम न कर डाले । नासमझी बड़ी बड़ी विपत्तियों का घर है । गुणानुरागी समृद्धियां सोच समझकर काम करने वाले का स्वयमेव वरण करती हैं । १३८ ॥

यहाँ 'जल्दीबाजी में काम करने का अभाव,' जिसका स्वरूप सोचसमझ कर काम करना है, कारण है । 'समृद्धियों द्वारा वरण' यह कार्य उसका साधर्म्य से समर्थन करता है । इस कार्य के विपरीत 'विपत्तियों का घर होना' (यह कार्य), उसी (जल्दबाजी में काम न करने) कारण का वैधर्म्य से समर्थन करता है ।

(कारण से कार्य का समर्थन)

अयि भूमि ! स्थिर रहो । शेषनाग ! (तुम) इसे धारण किए रहो कूर्मराज ! (तुम) इन दोनों को संभाले रहो । दिग्गजों ! इन तीनों को धारण करने का मनसूबा बाँध लो । भगवान् (राम) शंकर के धनुष को चढ़ाने जा रहे हैं । १३९ ॥

**सहसेति । क्रिया अध्यवसायः, सहसा विधानरूपो ह्यविवेकः आपदां पदम् । अनेनापत्पदत्वरूपं कार्यं सहसा विधानाभावरूपस्य कारणस्य वैधर्म्येण समर्थकम् । विमृश्यकारिणं सम्पदो वृणत इति सहसाविधानाभावात्मनो विमृश्यकारित्वस्य कारणस्य सम्पद्वरणं कार्यं साधर्म्येण । अत्र साधर्म्यस्य प्राथमिकत्वादुत्तरार्धार्थपुरस्कारेण योजयति—अत्र सहसा विधानेत्यादि । विमृश्यकारित्वरूपस्य कारणस्येति शेषः । तस्यैव कारणस्येत्यर्थः ।**

**पृथ्वीति । द्वितयं पृथ्वीभुजङ्गमरूपम् । तत् त्रितये कूर्मराजयुक्त-**

---

१. भाववि°—शा० ना० ।

२. च कारणस्य—नि० । कारणस्य—अ० नास्ति ।

३. एव—ना० नास्ति ।

४. स्थिरी°—अ० ।

अत्र हरकार्मुकाततज्यीकरणं [1]पृथ्वीस्थैर्यादिप्रवर्तकत्वे कारणं समर्थकत्वेनोक्तम्। वैधर्म्येण सामान्यविशेषभावो यथा—

अहो हि मे बह्वपराद्धमायुषा[2] यदप्रियं वाच्यमिदं मयेदृशम्।
त एव धन्याः सुहृदां पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥१४०॥

अत्रायुःकर्तृकापराद्धत्वा[3]क्षिप्तस्याधन्यत्वस्यायुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम्। कार्यकारणतायान्तु[4]

यहाँ शंकर के धनुष की प्रत्यंचा चढ़ाना, पृथ्वी आदि के स्थिर रहने आदि का प्रवर्तक होने से, कारण है जिसका समर्थकरूप में उल्लेख हुआ है। वैधर्म्य से सामान्य-विशेषभाव का उदाहरण है--

ओह! मेरी आयु ने बहुत बड़ा अपराध किया है जो मुझे यह अप्रिय बात कहनी पड़ रही है। वे ही धन्य हैं जो दुनिया में (अपने) मित्रों की पराजय देखें विना ही विनष्ट हो गए। १४०॥

यहाँ आयुकर्तृक अपराद्धत्व होने से अभागे होने का आक्षेप किया गया है। इसका विधर्मा है—आयु (जीवित रहने) के विपरीत विनाश की गति से प्राप्त बड़भागी होना जिसे सामान्यरूप से ('अभागे होने' इस विशेष अर्थ का) समर्थकरूप बताया गया है।[5] कार्यकारण-भाव की स्थिति में वैधर्म्य

द्वितयात्मनि। दिधीर्षा धारयितुमिच्छा। अत्राततज्यीकरणं कारणं स्थिरीभावादिकार्ये साधर्म्येण समर्थकम्। तदिदं योजयति अत्र हरकार्मुकेति।

अहो हीति। आयुषा बह्वपराद्धं हि सुहृत्पराभवं दृष्ट्वा ईदृशमप्रियं वक्तव्यत्वेनापतितं यतस्त एव हि धन्याः सुहृत्पराभवमदृष्ट्वा ये क्षयं गताः। अत्र सामान्यस्य वैधर्म्येण समर्थकत्वम्। तदिदं योजयति—अत्रायुष्कर्तृकेति। आयुष्कर्तृकेणापराधेनाधन्यत्वमाक्षिप्तम्। आयुर्विरुद्धक्षयगमनप्रयुक्तं यद् धन्यत्वं तद् वैधर्म्येण समर्थकं सामान्यम्। उक्तमनुस्मारयति—कार्यकारण-

१. °प्रवर्त°—शा१ नास्ति। २. °पराधमा°—नि०।
३. °पराधाक्षिप्त°—अ०। ४. तु—नि० नास्ति।
५. अधन्य होना विशेषरूप अर्थ है। इसका समर्थन मित्रों की पराजय को विना देखे विनष्ट लोगों के धन्य होने से किया गया है। अधन्य होने का विधर्मा धन्य होना है। प्रस्तुत उदाहरण में विशेष का सामान्य द्वारा समर्थन वैधर्म्य से किया गया है। दूसरे शब्दों में विधर्मा सामान्य विशेष का समर्थक है।

वैधर्म्येणोदाहृतम्। हिशब्दाभिहितत्वादिभेदाः[१] स्वयमेव बोद्धव्याः। चारुत्वातिशयाभावात्तो[२] नेह प्रदर्शिताः[३]।

एवमप्रस्तुतप्रशंसानुषङ्गायातमर्थान्तरन्यासमुक्त्वा[४] गम्यमानप्रस्तावागतं पर्यायोक्तमुच्यते—

गम्यस्यापि [५]पर्यायान्तरेणाभिधानं पर्यायोक्तम् ॥सू० ३६॥

[६]यदेव [७]गम्यं तस्यैवाभिधानं[८] पर्यायोक्तम्। [९]गम्यस्य सतः कथमभिधानमिति [१०]चेन्न, गम्यापेक्षया प्रकारान्तरेणाभिधानस्य [११]भावात्।

से (समर्थन का) उदाहरण (श्लोक १३८) दिया जा चुका है। 'हि' शब्द का प्रयोग होने (या न होने) आदि से भेद स्वयमेव समझ लेने चाहिए। उनम विशेष सौन्दर्य नहीं होता है अतः यहाँ (उन भेदों को) नहीं दिखाया गया है।

इस प्रकार अप्रस्तुतप्रशंसा के प्रसंग से आए हुए अर्थान्तिरन्यास को बताकर (प्रस्तुत के) प्रतीयमान होने के प्रकरण से प्राप्त पर्यायोक्त को बताया जा रहा है—

प्रतीयमान का भी यदि प्रकारान्तर से अभिधान हो जाए तो पर्यायोक्त होता है। सू० ३६ ॥

जो प्रतीयमान है उसी का अभिधान होना पर्यायोक्त (अलंकार) है। पर जो प्रतीयमान है उसका अभिधान कैसे (सम्भव है)? प्रतीयमान को दृष्टि

तायामिति। अपोढेष्वौदासीन्यमाविष्करोति—हिशब्देत्यादि।

समर्थ्यत्वेन निर्दिष्टः प्रकृतो यः समर्थ्यते।
सोऽयमर्थान्तरन्यासः सामान्यादिभिरष्टधा॥

पर्यायोक्तार्थसङ्गतिं शोधयति—एवमप्रस्तुतेति। गम्यप्रस्तावेति। प्रतीयमानार्थप्रस्तावो हि वर्तते। तत्र सूत्रम्—

"गम्यस्यापि भङ्गयन्तरेणाभिधानं पर्यायोक्तम्"॥

१. °त्वानभिहितत्वादि°—नि०।
२. भावात्तु—ना०। भावान्न—अ० नि०।
३. प्रपञ्चिताः—अ०।
४. °न्यास°—नि० नास्ति।
५. भङ्गयन्तरेणा°—अ० नि०।
६. अत्र यदेव—अ०।
७. गम्यत्वम्—नि०। गम्यते अ०।
८. °धाने—नि०।
९. गम्यस्यैव—नि१पाठानुसारम्।
१०. न—नि० नास्ति।
११. अभावात्—नि०। सम्भवात्—अ०।

**न हि तस्यैव तदैव तयैव विच्छित्त्या [१]गम्यत्वं वाच्यत्वं च संभवति। अतः कार्यादिद्वारेणाभिधानम्। कार्यादेरपि तत्र प्रस्तुतत्वेन वर्णनार्हत्वात्। अत एवाप्रस्तुतप्रशंसातो भेदः। [३]एतच्च वितत्याप्रस्तुतप्रशंसाप्रस्तावे निर्णीतमिति तत एवावधार्यम्। उदाहरणम्—**

**स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः।**
**सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः॥१४१॥**

**अत्र हयग्रीवस्य कार्यमुखेन स्वर्गविजयो वर्णितः। प्रभावातिशयप्रतिपादनं च कारणादिव कार्यादपीति[४] कार्यमपि वर्णनीयमेवेति पर्यायोक्तस्यायं विषयः।**

में रखकर उसका प्रकारान्तर से अभिधान होता ह। एक ही (अर्थ) का एक ही तरीके से एक ही समय में प्रतीयमान और वाच्य होना सम्भव नहीं है अतः कार्य आदि के द्वारा अभिधान होता है। कार्यादि भी इसी अलंकार में (तत्र) प्रस्तुत होने के कारण वर्णनीय होते हैं। इसी से (इस अलंकार का) अप्रस्तुतप्रशंसा से भेद है। इसपर विस्तारपूर्वक अप्रस्तुतप्रशंसा के प्रकरण में निर्णय दिया जा चुका है। अतः वहीं से समझ लीजिए। उदाहरण—

जिस (हयग्रीव) के सैनिकों ने इन्द्राणी के केशों का प्रसाधन करने वाली पारिजात की उन (प्रसिद्ध) मंजरियों को निरादर के साथ छुआ था। १४१॥

यहाँ हयग्रीव के कार्य के द्वारा स्वर्ग की विजय वर्णित है। (हयग्रीव के) अतिशय प्रभाव का प्रतिपादन, कारण की भांति, कार्य से भी किया जा सकता है। अतः कार्य भी वर्णनयोग्य ही है, इस प्रकार यह (उदाहरण) पर्यायोक्त का विषय है।

**प्रतीयमानस्यापि कार्यादिमुखेन प्रकारान्तरेणाभिधानं पर्यायोक्तम्। व्याचष्टे—यदेवेत्यादि। गम्यस्य सतोऽभिधानमाक्षिप्य उपपादयति—गम्यस्यैवेति। भङ्ग्यन्तरेणेत्येतद् विवृणोति—न हीत्यादि। ननु कार्याद्यभिधाने गम्यस्य कथमभिधानमित्यत आह—कार्यादेरपीति। अप्रस्तुतप्रशंसातो भेदं निरूपितचरमनुस्मारयति—एतच्चेति।**

**स्पृष्टास्ता इति। व्याख्यातं प्राक्। योजयति—अत्र हयग्रीवस्येति। कार्यं मञ्जरीस्पर्शः।**

---

१. वाच्यत्वं गम्यत्वं— शा० शा१। २. °कार्यमुख°—नि०।
३. एतच्च वितत्याप्रस्तुतप्रशंसाप्रस्तावे—इति स्थाने शा१ पुस्तके 'इति तत्प्रस्तावे' इति पाठः। ४. °दपि भवतीति—अ०।

गम्यत्वविच्छित्तिप्रस्तावाद्व्याजस्तुतिमाह—

**स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः ॥सू० ३७॥**

**यत्र स्तुतिरभिधीयमानापि [1]प्रमाणान्तराद्बाधितस्वरूपा निन्दायां पर्यवस्यति, तत्रासत्यत्वाद्व्याजरूपा स्तुतिरित्यर्थानुगमनेन[2] तावदेका व्याजस्तुतिः। यत्रापि निन्दाशब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा स्तुतिः पर्यवसिता भवति, सा द्वितीया व्याजस्तुतिः। व्याजेन [3]निन्दामुखेन स्तुतिरिति कृत्वा। स्तुतिनिन्दारूपत्वस्य[4] विच्छित्तिविशेषस्य भावादप्रस्तुतप्रशंसातो भेदः। क्रमेण यथा—**

प्रतीयमानता की विच्छित्ति के सन्दर्भ के कारण व्याजस्तुति को बताते हैं।

स्तुति और निन्दा से निन्दा और स्तुति के प्रतीयमान होने पर व्याजस्तुति होती है। सू० ३७ ॥

जहाँ स्तुति का अभिधान हो रहा हो पर उसका स्वरूप प्रमाणान्तर से बाधित होकर निन्दा में विश्रान्त होता है वहाँ असत्यता के कारण स्तुति व्याजरूप होती है इस अर्थ के अनुसार व्याजस्तुति का एक भेद है। और जहाँ निन्दा के शब्द से प्रतिपादित होने वाली स्तुति का पहले की भांति (प्रमाणान्तर से) स्वरूप बाधित होकर (स्तुति में) विश्रान्त होता है व्याजस्तुति का वह दूसरा भेद है। व्याज अर्थात् निन्दा के द्वारा स्तुति इस व्युत्पत्ति के अनुसार। स्तुति-निन्दारूप विशिष्ट विच्छित्ति होने से (यह अलंकार) अप्रस्तुतप्रशंसा से भिन्न है। क्रमशः उदाहरण—(स्तुति का निन्दा में पर्यवसान)

**पर्यायोक्तं तु कार्यादिद्वारा गम्यस्य वर्णनम्।**
**अप्रस्तुतप्रशंसातो वाच्यस्य प्रस्तुते भिदा ॥**

**व्याजस्तुतेः सङ्गतिमाह—गम्यत्वेति। तत्र सूत्रम्—**

**"स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः।"**

**स्तुत्या निन्दाया गम्यत्वे एका, निन्दया स्तुतेस्त्वन्या। अतो व्याजरूपा स्तुतिः, व्याजेन वेति स्तुतिरिति च विग्रहः। व्याचष्टे— यत्र स्तुतिरित्यादि। प्रमाणान्तरादाभासीकरणक्षमात्। अनुगमेन अर्थान्वयेन। द्वितीया तु निन्दाव्याजेन स्तुतिरित्याह—यत्रापीति। अतो योगविभागात् व्याजस्तुतिद्वयम्।**

---

१. °णान्तरबाधित°—शा०। °णान्तरेण—अ०।
२. °रित्यनुगमेन—नि०। °रित्यर्थानुगमेन—अ०।
३. निन्दारूपेण—अ०। ४. °रूपस्य—अ०।

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः[1] परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥१४२॥

अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः।

इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठपीठी[2] मुरारि-
र्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि।
[3]अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥१४३॥

बोधिसत्त्व को अनायास जीतने वाले अयि सागर! बात अधिक बढ़ाने से क्या लाभ है? दूसरों के उपकार करने में तुम्हारा जैसा व्रती नहीं है। प्यासे पथिकों का उपकार करने से विमुख होने के कारण प्राप्त अयशभार को ढोने में तुम मरुस्थल की कृपापूर्वक सहायता जो करते हो। १४२॥

यहाँ विपरीत लक्षणा से वाच्य (स्तुतिरूप अर्थ) से विपरीतरूप (अर्थ) की प्रतीति होती है।

(निन्दा से स्तुति में पर्यवसान का उदाहरण)

अयि पृथ्वीमण्डल के तिलक (राजन्)! चन्द्रमा का कलंक, त्रिपुरासुर को जीतने वाले (शिव) का कण्ठस्थल, (भगवान्) कृष्ण तथा मदजलरूपी स्याही से पुते हुए दिग्गजों के गण्डस्थल, आज भी कालिमा से पुते हुए लग रहे हैं। फिर बताओ तुम्हारी कीर्तियों ने किसे शुभ्र बनाया है। १४३॥

**ननु स्तुतिनिन्दयोर्गम्यांशस्य प्रस्तुतत्वादप्रस्तुतप्रशंसातः को भेद इत्यत आह— स्तुतिनिन्देति।**

**हे हेलेति। बोधिसत्त्वो जीमूतवाहनः। स हि कदाचिदेव परस्य हितमाधात्। त्वं तु ये यावन्तस्तृष्यन्ति तेभ्यः सर्वेभ्य एव वैमुख्यलब्धानामयशोभाराणां प्रोद्वहने मरोः साहायकं करोषि। अतो हेलाजितबोधिसत्त्वे त्वयि स्तुतिवचोविस्तरा न पर्याप्नुवन्तीत्यर्थः। स्तुतेर्निन्दागमकत्वं दर्शयति—अत्र विपरीतेति।**

**इन्दोर्लक्ष्मेति। उर्वीवलयतिलक, इन्दुलक्ष्मादिषु श्यामलषु सत्सु त्वद्य-**

---

1. पुरः—ना०। 2. मूलम्—अ०।
3. आद्या (?)—ना० शा१।

अत्र धवलताहेतुयशोविषयानवक्लृप्तिप्रतिपादनेन 'विशेषप्रतिषेधे शेषाभ्यनुज्ञानम्' इति न्यायात्कतिपयपदार्थवर्जं समस्तवस्तुधवलताकारित्वं नृपयशसः प्रतीयते।

किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥१४३॥

इत्यत्र प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा हन्त कीर्तिरिति[1] [2]भणित्या उन्मूलितेति[3] न प्ररोहं गमितेति [4]श्लिष्टमेतदुदाहरणम्।

यहाँ शुभ्र बनाने वाली कीर्ति (कुछेक वस्तुओं को) शुभ्र नहीं बना सकी है इस अव्याप्ति के वर्णन द्वारा "विशेष के प्रतिषेध से शेष का स्वीकार होता है" इस न्याय से कुछ वस्तुओं को छोड़ कर राजा की कीर्ति ने (शेष) सभी वस्तुओं को धवल बना दिया है, यह प्रतीत होता है।

दूसरों के घर का क्या हाल है इससे (मुझे) क्या करना है किन्तु मैं चुप नहीं बैठ सकता हूँ; दाक्षिणात्य का स्वभाव निसर्गतः बातूनी होता है। हन्त। आपकी कीर्ति, घर-घर, बाजारों, बैठकों और मधुशालाओं में पागल-सी घूम रही है। १४४ ॥

यहाँ स्तुति में पर्यवसित होने वाली निन्दा का प्रारम्भ किया गया था। पर 'हन्त ! (आपकी) कीर्ति' इस कथन से वह मिटा दी गई है, उसे बढ़ाया नहीं गया है अतः यह उदाहरण मिलाजुला (या स्पष्ट नहीं) है।

शोभिर्न किञ्चिद्धवलितमिति स्तुतिर्गम्यते। तदेतदाह—अत्र धवलत्वेति। अनवक्लृप्तिरपर्याप्तिः।

यत्र तु गम्यांशस्य न्यग्भावस्तत्र नास्याः सामञ्जस्यमिति दर्शयितुमाह—किं वृत्तान्तैरिति। अत्र वल्लभा भ्रमति हन्त इत्युक्त्या निन्दायाः स्तुतिपर्यवसायित्वं न स्फुटीभवत्यनौचित्यादिति क्लिष्टता। तदेतदाह—अत्र प्रक्रान्तापीति।

व्याजेन व्याजरूपा वा स्तुतिर्व्याजस्तुतिद्वयम्।
अप्रस्तुतप्रशंसातः स्तुतिनिन्दात्मिका भिदा॥

---

१. °रित्यनेन—अ०। २. °भणितिप्रकारेण—अ०। ३. °तेव—अ०।
४. क्लिष्टम्—इति अपुस्तकस्थः पाठो यद्यपि सुखावबोद्धव्यस्तथापि बहुसम्मतत्वात् 'श्लिष्टम्'—एवादृतः।

गम्यत्वमेव प्रकृतं विशेषविषयत्वेनोररीकृत्याक्षेपालंकार उच्यते—

**उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतीत्यर्थं[1] निषेधाभास आक्षेपः ॥सू० ३८॥**

इह प्राकरणिकोऽर्थः प्राकरणिकत्वादेव वक्तुमिष्यते। तथाविधस्य विधानार्हस्य निषेधः कर्तुं न युज्यते। स [2]कृतोऽपि बाधितस्वरूपत्वान्निषेधायत इति निषेधाभासः संपन्नः। तस्यैतस्य करणं प्रकृतगतत्वेन विशेषप्रतिपत्त्यर्थम्। अन्यथा गजस्नानतुल्यं[3] स्यात्। स चाभासमानोऽपि[4]

प्रतीयमानता के सन्दर्भ को ही विशेष विषय के रूप में स्वीकारकर आक्षेपालंकार बताया जा रहा है।

किसी विशेषता की प्रतीति कराने के लिए उक्त तथा वक्ष्यमाण प्रस्तुत (अर्थ) का निषेध भासित होना आक्षेप है। सू० ३८॥

प्राकरणिक होने से ही प्रकृत अर्थ का वर्णन अभीष्ट रहता है, अतः इस प्रकार के वर्णनीय (विधानयोग्य) का निषेध करना संगत नहीं लगता है। वह (निषेध) कर भी दिया जाए तो स्वरूपतः बाधित होने से निषेध की तरह लगने लगता है अतः निषेधाभास बन जाता है (निषेध नहीं)। इस प्रकार के निषेध करने का प्रयोजन प्रस्तुत (अर्थ) में विशेष की प्रतीति कराना होता है, नहीं तो (वह निषेध) गजस्नान के समान (निरर्थक) हो

आक्षेपार्थं सङ्गतिमाह—गम्यत्वमेवेति। विशेषोऽतिशयः। विशेषप्रतिपत्तिगम्यविषयेत्यर्थः। तत्र सूत्रम्—

"उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः" ॥

उक्तस्य वक्ष्यमाणस्य वा प्राकरणिकस्य वाप्राकरणिकस्य वा विशेषप्रतीत्यर्थमाभासतो निषेधनमाक्षेपः। विजातीयमिदमाक्षेपद्वयं ज्ञेयम्। व्याचष्टे—इह प्राकरणिक इत्यादि। तथाविधस्य विवक्षितस्य अत एव विधेयस्य, स कृतः अविषये प्रवर्तित इत्यर्थः। अत एव बाधितस्वरूपः आभासीभवति। ननु किमेतेन प्रयासेनेत्यत आह—तस्यैतस्येति। अन्यथेति। विशेषप्रतिपत्त्यर्थताभावे पुनर्विधिपर्यवसानात् गजस्नानतुल्यता स्यात्। गजो हि स्नात एव सन् सद्यो धूलधूसरीभवति। तस्य द्वैरूप्यायाह—स चेति। आसूत्रिताभिधानत्वेन

---

१. प्रतिपत्त्यर्थम्—अ० नि०। २. अपि—शा० ना० शा१ नास्ति।
३. °तुल्यत्वम्—ना०। ४. अपि—अ० नास्ति।

[1]निषेध उक्तस्य वा स्यात्, आसूत्रिताभिधानत्वेन[2] वक्ष्यमाणस्य वा स्यादित्याक्षेपस्य द्वयी गतिः। [3]उक्तविषयत्वेन कैमर्थक्यपरमालोचनमाक्षेपः। वक्ष्यमाणविषयत्वेनानयनरूपमागूरणमाक्षेपः। एवं चार्थभेदादाक्षेपशब्दस्य द्वावाक्षेपाविति वदन्ति। तत्रोक्तविषये यस्यैवेष्टस्य [4]विशेषस्तस्यैवाक्षेपः।

जाएगा।[5] और यह आभासमान निषेध या तो उक्त (वर्णित वस्तु) का होगा अथवा संकेततः निर्देश के रूप में होने से वक्ष्यमाण का होगा। इस प्रकार आक्षेप के दो रूप हैं। उक्त (वस्तु) के विषयरूप में आक्षेप वह आलोचन है जो कौमर्थक्क (यह किस लिए है) परक होता है। वक्ष्यमाण के विषयरूप में आक्षेप आगूरण (अर्थबल से साधन) है जिसका स्वरूप 'आनयन' होता है।[6] इस प्रकार आक्षेप शब्द के अर्थभेद से (उक्तविषयक तथा वक्ष्यमाण विषयक) दो आक्षेप होते हैं, यह (प्राचीन आचार्य भामहादि) बताते हैं[7]। इन (भेदों) में से उक्तविषयक (आक्षेपालंकार) में जिस (प्रतीयमान) अभीप्सित (अर्थ) में विशेषता होती है उसी का आक्षेप होता है।

अभिधातुमुपक्रान्ततयेत्यर्थः। तत्र कस्य कः प्रकार इत्यत आह—उक्तविषयत्वेनेत्यादि। कैमर्थक्यं निरर्थकता। आगूरणं सामर्थ्यात् साधनम्। अतो विजातीयत्वमित्याह—एवं चेति। उभयत्र निषेध्यांशो भिन्न इत्याह—

१. °धस्तत्रोक्त°—नि०। २. °भिधेयत्वेन—अ०। °धिनत्वेन—शा१।
३. तत्रोक्त°—नि०। ४. निषेधः—शा० ना० शा१।
५. हाथी नहाता भी है तो फिर धूल फेंककर जैसा का तैसा हो जाता है, स्नान करने से कोई लाभ नहीं होता है। उसी प्रकार निषेध करने से यदि प्रस्तुत अर्थ में विशेष की प्रतीति नहीं होती है तो निषेध करने से कुछ भी लाभ नहीं होगा।
६. आक्षेपालंकार उक्त और वक्ष्यमाण के विषय में विशेषता बताने के लिए होता है। जहाँ आक्षेप उक्त के विषय में होता है वहाँ उक्त अर्थ की निरर्थकता बताना—उक्त अर्थ किसलिए है यह आलोचना आक्षेप शब्द का अर्थ है। और जहाँ वक्ष्यमाण के विषय में आक्षेप होता है वहाँ आक्षेप शब्द का अर्थ होता है आपादन या साधन कर लेना जिसे आगूरण कहा जाता है।
७. भामह का आक्षेप-लक्षण है—
(क) वक्ष्यमाणोक्तविषयस्तत्राक्षेपो द्विधा मतः। भामहालंकार २। ६७।
(ख) प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।
आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा॥ वही, २। ६८।

वक्ष्यमाणविषये त्विष्टस्य विशेषः[१]। इष्टसंबन्धिनोऽन्यस्य[२] सामान्यरूपस्य निषेधः[3]। तेनात्र [४]लक्षणभेदः। विशेषस्य चात्र शब्दानुपात्तत्वाद्गम्यत्वम्। तत्रोक्तविषय आक्षेपे क्वचिद्वस्तु निषिध्यते, क्वचिद्वस्तुकथनमिति[५] द्वौ भेदौ। वक्ष्यमाणविषये तु [६]वस्तुकथनमेव निषिध्यते। तच्च सामान्यप्रतिज्ञायां[७] [८]क्वापि तद्विशेषनिष्ठत्वेन निषिध्यते, क्वचित्पुनरंशोक्तावंशान्तरगतत्वेनेत्यत्रापि द्वौ भेदौ। तदेवमस्य चत्वारो भेदाः।

किन्तु वक्ष्यमाणविषयक (आक्षेपालंकार) में अभीप्सित (अर्थ) के विशेष का आक्षेप होता है। क्योंकि अभीप्सित (अर्थ) से सम्बन्धित सामान्यरूप दूसरे (अर्थ) का तो निषेध हो जाता है।[९]

इस प्रकार इन (दो प्रकार के आक्षेपों) का स्वरूप भिन्न है। इनमें शब्द से उपात्त न होने से विशेष प्रतीयमानरूप होता है। इन भेदों में से (तत्र) उक्तविषयक आक्षेपालंकार में कहीं वस्तु का निषेध किया जाता है और कहीं वस्तु के कथन का, इस प्रकार दो भेद हैं। वक्ष्यमाणविषयक (आक्षेपालंकार) में तो वस्तु के कथन का ही निषेध किया जाता है (वस्तु का नहीं)। इस (वस्तुकथन) का निषेध कहीं सामान्य का कथन हो जाने पर उसके निषेध को लेकर होता है और कहीं अंश का कथन हो जाने पर अंशान्तर को लेकर होता है। अतः इसके भी दो भेद हैं। इस प्रकार इसके चार भेद

तत्रोक्तेति। अतो वैलक्षण्यमित्याह—तेनात्रेति। शब्दानुपात्तत्वादिति। निषेधाभासबलायातत्वाच्छब्दानुपात्तता। उक्तविषय इति। वस्तुनो वस्तुकथनस्य वा निषेधाद् द्वैविध्यम्। वक्ष्यमाणेति। वस्तुनोऽनुक्तत्वाद् कथनस्यैव निषेधः। तत्रान्यथा द्वैविध्यमाह—तत्र सामान्येति। इत्थं चातुर्विध्यम्। अत्र

---

१. निषेधः—शा० शा१।
२. °नस्त्वन्यस्य—नि० ना०।
३. विशेषः—शा० शा१।
४. °णे°—शा०१।
५. °कथनं निषिध्यत इति—अ०।
६. वस्तु°—अ० पुस्तके शा० (?) च नास्ति।
७. °ज्ञायाः—शा१।
८. क्वचिद्वि°—नि०।
९. मन्तव्य यह है कि उक्त-विषयक आक्षेपालंकार में विशेष के आश्रय का निषेध किया जाता है और वक्ष्यमाणविषयक आक्षेपालंकार में सामान्यरूप अंश का निषेध करते हुए विशेष का आक्षेप होता है।

शब्दसाम्यनिबन्धनं सामान्यविशेषभावमवलम्ब्य चात्र [1]प्रकारप्रकारि-[2]भावप्रकल्पनम्। क्रमेण यथा—

बालअ णाहं दूई तीए पिओ सि त्ति णम्हवावारो।
सा मरइ तुज्झ अयसो एअं धम्मक्खरं भणिमो[3] ॥१४५॥

हुए।[4] शब्द-सादृश्य के मूल से होने वाले सामान्य-विशेषभाव को आधार मानकर यहाँ विशेषण और विशेष्य के सम्बन्ध की कल्पना कर ली जाती है। क्रमशः उदाहरण—

(वस्तु के निषेध से उक्तविषयक आक्षेपालंकार)

रे बालक! मैं दूती नहीं हूँ। तुम उसके प्रिय हो इसलिये मैं (इस कार्य में) प्रवृत्त नहीं हुई हूँ। वह मर रही है, तुम्हारी बदनामी होगी; हम (केवल) धर्म की बात बता दे रहे हैं। १४५॥

**च प्रकारप्रकारिभावहेतुः सामान्यविशेषभावोऽर्थानपेक्ष इत्याह—शब्दसाम्येति।**

**बालअ इति।**

**बालक नाहं दूती तस्याः प्रियोऽसीति नास्माकं व्यापारः।**
**सा म्रियते तवायशः एतद् धर्माक्षरं भणामः॥**

---

1. प्रकारिप्रकार° नि०।
2. °भावक°—अ०।
3. भणिमा—अ०। नापुस्तके संस्कृतच्छाया त्वित्थमस्ति—
'बालक नाहं दूती तस्यापि प्रेयोऽसीति नास्माकं व्यापारः।
सा म्रियते तव अयशः एवं धर्माक्षरं ब्रूमः'॥
4. आक्षेपालंकार के चार भेद इस प्रकार हैं—



[ बालक नाहं दूती तस्याः प्रियोऽसीति नास्मद्व्यापारः ।
सा म्रियते तव अयशः एतद् धर्माक्षरं ब्रूमः ॥ ]
प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति[1] भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि[2] ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥१४६॥
सुहअ विलंबसु थोअं जाव इमं विरहकाअरं हिअअं ।
[3]संठविऊण भणिस्सं अहवा वोलेसु किं भणिमो ॥
[ सुभग विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम् ।
संस्थाप्य भणिष्यामि अथवा व्रजस्व किं भणामः ॥ ]

(वस्तु-कथन के निषेध से उक्तविषय आक्षेप)

प्रेयसि ! मैं नहीं जानता कि इस (स्थिति) में क्या कहना चाहिए ? अगर कहूँ कि तुम प्रसन्न हो जाओ तो यह (तुममें) क्रोध न होने पर ठीक नहीं लगता है। अगर कहूँ कि मैं फिर ऐसा नहीं करूँगा तो यह (न किए हुए दोष को) स्वीकार करना होगा। अगर कहूँ कि मेरा (कोई) दोष नहीं है तो यह भी तुम झूठ ही समझोगी। १४६ ॥

(सामान्य की उक्ति हो जाने पर विशेष का आक्षेप)

सुन्दर ! थोड़ी देर रुको मैं इस विरह-कातर हृदय को धीरज बंधाकर बताऊँगीं अथवा जाने दो क्या कहें। १४७ ॥

प्रसीदेति । यदि प्रसीदेति ब्रूयात् (?म्) असति कोपे इदं वचो न घटते । एवं न पुनः करिष्यामीति चेत् ब्रूयां तदा अविद्यमानस्यापराधस्याभ्युपगमः । न मे दोषोऽस्तीति चेत् ब्रूयां त्वं पुनरिदं दोषाभाववचो मृषेति ज्ञास्यसि । अतः किं वक्तुं क्षममिति न वेद्मि ।

सुहएति ।

सुभग विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम् ।
संस्थाप्य भणिष्यामि अथवा व्यतिक्राम किं भणामः ॥

---

१. पुनरपि--ना० शा१ । २. °विज्ञा°—ना० ।
३. 'संस्थाप्य तव भणिष्यामि''' किं भणिष्ये'—नापुस्तकस्थं छायान्तरम् । व्रजस्व—स्थाने 'अपक्राम'—नि१ पुस्तकच्छाया ।

ज्योत्स्ना तमः पिकवचः क्रकचस्तुषारः
क्षारो मृणालवलयानि कृतान्तदन्ताः ।
सर्वं दुरन्तमिदमद्य शिरीषमृद्वी
सा नूनमाः किमथवा हतजल्पितेन[1] ॥१४८॥

आद्ये उदाहरणद्वये यथाक्रमं वस्तुनिषेधेन [2]वस्तुकथननिषेधेन चोक्तविषय आक्षेपः। तत्र चोक्तस्य दूतीत्वस्य वस्तुनो निषेधमुखेन[3] [4]वास्तवत्वादिर्विशेषः। तथा भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेनावश्यस्वीकार्यत्वं विशेषः। उत्तरस्मिन्पुनरुदाहरणद्वये

(अंश की उक्ति हो जाने पर अंशान्तर के निषेध का उदाहरण)

चांदनी अन्धकार, कोयल की बोली आरा, हिम, खार और मृणालवलय यमराज के दांत हो गए हैं। आज यह सब कुछ दुःखदायी हो गया है, और वह शिरीष-सी सुकुमार सचमुच···अथवा अभागी बात को क्यों कहा जाए। १४८ ॥

प्रथम दो उदाहरणों में क्रमशः वस्तु के निषेध तथा वस्तु कथन के निषेध द्वारा उक्तविषयक आक्षेप है। यहाँ (प्रथम उदाहरण श्लोक १४५ में) उक्त वस्तु दूतीभाव के निषेध द्वारा वास्तविकता (वस्तुतः दूती होने) आदि का विशेष (आक्षिप्त) है। तथा (दूसरे उदाहरण में) 'प्रसन्न हो जाओ' इस रूप में कही जानी वाली प्रसन्नता के निषेध द्वारा ही क्रोध का प्रभाव दूर करते हुए अवश्य स्वीकार करने योग्य है यह विशेष (आक्षिप्त) है। बाद के दो उदाहरणों

मम विरहकातरं हृदयं संस्थाप्य भणिष्यामीत्यनेन (न?) जीवितसंशयहेतुरुपद्रव आसूत्रितः। अथवा व्यतिक्राम किं भणाम इति तु तस्यैव प्रत्यासन्नतरत्वात् भणित्यनर्हता।

ज्योत्स्नेति। अत्र विरहवेदनावशात् ज्योत्स्नापिकवचःप्रभृतीनां तमःक्रकचादिरूपापत्त्या यतो दुरन्तता अतः सा नूनमित्यर्धोक्त्या प्राणसंशयदशोपक्षिप्ता। आः किमथवा हतजीवितेनेत्यनेन तु तद्विपत्तेरर्वाक् प्राणोपेक्षा त्वरा। एषु क्रमतो योजयितुमाह—आद्य इत्यादि। नाहं दूतीति दूतीत्वरूपवस्तुनिषेधः किमेतस्मिन् वक्तुं क्षममिति तूक्तिनिषेधः। तदुभयमप्युक्तिविषयम्। उभयत्र

---

१. °जीवितेन ना० शा०।

२. °भणितिनि°– अ० नि०। वस्तुनिषेधेन चोक्त°—शा१।

३. °नैव—नि०। ४. सत्यवादित्वादिर्वि°—अ०।

यथाक्रमं सामान्यद्वारेणेष्टस्यांशोक्तावप्यंशान्तरस्य स्वरूपेण च भणितिनिषेधे वक्ष्यमाणविषय आक्षेपः। तत्र च वक्ष्यमाणस्येष्टस्य 'भणिस्सम्' इति प्रतिज्ञातस्य [१]सातिशयोत्कोपजनकत्वादिर्विशेषः। तथा[२] चांशोक्तावंशान्तरस्य 'म्रियत' इति प्रतिपाद्यस्याशक्यवचनीयत्वादिर्विशेषः। एवं च, आक्षेपे [३]इष्टाऽर्थस्तस्यैव[४] निषेधः; निषेधस्यानुपपद्यमानत्वादसत्य-

में क्रमशः सामान्य रूप में इष्ट अर्थ को बताकर (विशेष का) तथा अंश को बताने के बाद अंशान्तर का तथा स्वरूपतः कथन का निषेध होने से वक्ष्यमाण-विषयक आक्षेप है। उस (श्लोक १४७ के उदाहरण) में 'बताऊँगी' इस रूप में प्रतिज्ञात वक्ष्यमाण इष्ट विशेषता अतिशय क्रोधजनकता है[५]। तथा (अंतिम उदाहरण में बात के) अंश को बताने के बाद 'अंशान्तर मरी जा रही है' इस वक्तव्य का विशेष यह है कि कथन (अंशान्तर इतना करुण है कि) बताया नहीं जा सकता है[६]।

इस प्रकार आक्षेपालंकार में जो इष्ट (प्रतिपाद्य) अर्थ होता है उसी का निषेध, निषेध का उपपन्न न हो पाना, अतएव असत्य होना तथा विशेष

निषेधाभासद्योत्यं विशेषमुद्घाटयति तत्र चेति। वस्तुवाचित्वं यथार्थवाचित्वम्। विशेषो गम्यत इति शेषः। भण्यमानस्य प्रसीदेत्युदीर्यमाणस्य। इदं न घटत इति निषेधमुखेनैव। उत्तरस्मिन्निति। किं भणाम इति सामान्यद्वारेण वक्तुमिष्टस्य जीवितसंशयादेः स्वरूपत एव भणितिनिषेध इत्यर्थवशादागूरणमित्यर्थः। सा नूनमित्यंशोक्तौ जीवितुं न शक्तोऽस्मीत्यंशान्तरस्य स्वरूपतो भणितिनिषेधादागूरणम्। उभयत्र द्योत्यविशेषोद्घाटनायाह तत्र चेति। अतिशयकोपजनकत्वं प्रस्थानाध्यवसायात्। अत्र सामग्रीं

---

१. सातिशयात् कोप° — नि०। सातिशयो मरणशङ्कोपजन° — अ०।

२. तथैव ज्योत्स्नेत्यादावंशो° — अ०।

३. इष्टार्थः — नि०।

४. एव — शा० ना० नास्ति।

५. अर्थात् तुम्हारे कार्य से अत्यधिक गुस्सा पैदा हो गया है इस विशेष का आक्षेप करने के लिए ही 'बताऊँगी' यह प्रतिज्ञा की गई है।

६. श्लोक १४८ में चाँदनी को अन्धकार आदि कहकर वक्तव्य का अंश बता दिया गया है। इसका अंशान्तर है कि वह मरी जा रही है। पर यह कहना करुण होने के कारण इतना अशक्य है कि उसे न कहना ही ठीक है। इसी अवर्णनीयतारूप विशेषता का आक्षेप इस उदाहरण में होता है।

त्वं, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते। तेन न निषेधविधिर्नापि[1] विहितनिषेधः, किं तु निषेधेन [2]विधेराक्षेपः। निषेधस्यासत्यत्वाद्विधिपर्यवसानात्। विधिना तु निषेधोऽस्य भेदत्वेन [3]वक्ष्यते। ततश्च[4] हर्षचरिते—'अनुरूपो देव्या इत्यात्मसंभावना—' इत्यादौ, तथा 'यामीति न स्नेहसदृशम्[5]' इत्यादावुक्तविषय आक्षेपः। "[6]केवलं बाल इति सुतरामपरित्याज्योऽस्मि। रक्षणीय इति भवद्भुजपञ्जरमेव[7] रक्षास्थानम्' इत्यादावाक्षेपबुद्धिर्न कार्या। बालत्वादेरुक्तस्य निषेध्यत्वेनाविवक्षितत्वात्। प्रत्युतात्र बाल्यादिः[8] परित्यागनिषेधकत्वेन [9]प्रतीयते।

का प्रतिपादन ये चार (तत्त्व) उपयोगी हैं। इस प्रकार (आक्षेपालंकार) में निषेध का विधान नहीं होता है अपितु निषेध से विधि का आक्षेप होता है क्योंकि निषेध के असत्य होने से उसका विधि में पर्यवसान हो जाता है। विधि के द्वारा निषेध को तो इस (अलंकार) के (दूसरे) भेद के रूप में बतायेंगे। निष्कर्षतः हर्षचरित के '(वह) देवी के अनुरूप है यह आत्मसम्भावना है' इत्यादि में तथा 'मैं चला जाऊँ यह (कहना) स्नेह के अनुकूल नहीं है' इत्यादि में उक्तविषयक आक्षेप है। 'केवल बालक हूँ अतः सुतरां अपरित्याज्य हूँ; रक्षणीय हूँ अतः आपका भुज- पंजर ही रक्षा का स्थान है' इत्यादि में आक्षेप (अलंकार) नहीं मानना चाहिए क्योंकि बालक होना आदि जो उक्त (वस्तु) है निषेध्य होने से उसकी विवक्षा नहीं है। प्रत्युत यहाँ पर बालक होना आदि परित्याग का निषेध करने के रूप में प्रतीत होता है। अतः इसमें

**निष्कर्षति—एवं चेति। अत आक्षेपस्वरूपमीदृगित्याह—तेनेति। ननु निषेधेन विध्याक्षेपः कथमित्यत आह—निषेधस्यासत्यत्वादिति। ननु विध्याभासान्निषेधाक्षेपे किं स्यादित्यत आह—विधिना त्विति। विधिना**

---

१. अपि नि० ना० शा१ नास्ति।

२. विधिराक्षेपः—शा० ना०।

३. विवक्ष्यते - शा० ना० शा१।

४. तथा च नि०।

५. सदृशं मन्यते—अ०।

६. यदि केवलं—शा०। केवलं यदि बाल—ना०।

७. एव—अ० नास्ति।

८. बाल्यादिपरि°—ना० शा१।

९. °निषेधैकत्वेन—ना० (?)।

**तेन नायमाक्षेपः। कस्तर्ह्ययं विच्छित्तिप्रकारोऽलंकार इति चेत्, व्याघाताख्यस्यालंकारस्यायं[1] द्वितीयो भेदो[2] वक्ष्यते।**

**तदिष्टस्य निषेध्यत्वमाक्षेपोक्तेर्निबन्धनम्।**
**सौकर्येणान्यकृतये न निषेधकता[3] पुनः ॥१४९॥**

**इति पिण्डार्थः। इह तु—**

**साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः।**
**[4]यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः[5] प्रगुणीभवन्ति ॥१५०॥**

आक्षेप (अलंकार) नहीं है। फिर भला यह विच्छित्तिप्रकार कौन सा अलंकार है? यह व्याघात नामक अलंकार का दूसरा भेद (अर्थात् दूसरे भेद का उदाहरण) है, यह बताया जाएगा।

अस्तु! सुकरता से दूसरे (विशेष अर्थ) की सिद्धि के लिए इष्ट (अर्थ) का निषेध किया जाना आक्षेप से कथन (आक्षेपालंकार) का निमित्त है न कि वास्तविक निषेध। १४९ ॥

यह है सार। पर निम्नलिखित उदाहरणों में (इह तु)—

अयि कविवरो, साहित्यसमुद्र के मन्थन से उत्पन्न श्रवणपीयूष (काव्य) की रक्षा करो, क्योंकि काव्यार्थ के चोर दैत्यों के समान इस (काव्यामृत) को लूटने के लिये बढ़ते चले जा रहे हैं। १५० ॥

**विध्याभासेनेत्यर्थः। वक्ष्यते सूत्रान्तरेणेति शेषः। यत इत्थं निषेधेन विधेराक्षेपः अत ईदृशि विषये नालङ्कारान्तरमित्याह—ततश्चेति। यस्मादात्मसम्भावनं तत आनुरूप्योक्तिर्न युज्यत इत्युक्तिनिषेधः। इयान् न स्नेहसदृशमित्यत्रापि याननिषेधः। अतोऽयमुक्तिविषय आक्षेपः। अविषयं दर्शयति—केवलमित्यादि। अत्र ह्यपरित्याज्यतादिर्बाल्यादेर्न निषेधकमपि तु तस्य साध्यमेवेति नाक्षेपबुद्धिः कार्या। किन्तु व्याघातविशेष इत्यनुयोगपुरस्कारेण दर्शयति—कस्तर्हीत्यादि। अत्र निष्कर्षाय श्लोकः—तदिष्टस्येति। तस्मात् कारणात् सौकर्येण विशेषसिद्ध्यर्थं तस्य निषेधाभास आक्षेपोक्तेर्निमित्तं न तु वस्तुतो निषेधकता।**

**अतो यत्र निषेधो वास्तवः न तत्राक्षेप इति सोदाहरणं दर्शयति—इह**

---

१. अयम्—शा० ना० शा१ नास्ति।

२. भेद इति वक्ष्यते—अ०।

३. °कतया—अ०।

४. °यत्तस्य—अ०।    ५. चोराः—अ०।

गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः कापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥१५१॥

इति । तथा--

[1]देया शिलापट्टकवाटमुद्रा श्रीखण्डशैलस्य दरीगृहेषु ।
वियोगिनीकण्टक एष वायुः कारागृहस्यास्तु चिरादभिज्ञः ॥१५२॥
बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः [2]श्रीखण्डशैलस्य दरीगृहस्थः ॥१५३॥
यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः ।
[3]केलिप्रसङ्गे शबराङ्गनानां स हि [4]स्मरग्लानिमपाकरोति ॥१५४॥

अथवा ये सभी इच्छा भर (काव्यामृत) ले लें, इससे श्रेष्ठ कवियों की कोई हानि नहीं है। अमरों (देव-दानवों) द्वारा बहुत से रत्न चुरा लेने पर भी आज भी सागर रत्नाकर ही है। १५१ ॥

श्रीखण्ड पर्वत के गुफागृहों में पत्थर के तख्तों से किवाड़ लगा दो ताकि वियोगिनी के लिये कांटा यह वायु कारागार का चिरकाल तक परिचित रह सके। १५२ ॥

इनमें तथा—

'बाण से मृग को मारकर इस दक्षिणानिल की यात्रा रोक दो' इस प्रकार से श्रीखण्ड पर्वत के गुफागृह में स्थित शबरस्वामी से प्रार्थना करनी चाहिए। १५३ ॥

अथवा यह सब सोचना फ़िज़ूल है। किरात वायु से वैर नहीं करना चाहते हैं क्योंकि रति-प्रसंग में होने वाले किरात-युवतियों के सुरतखेद को वही दूर करता है। १५४ ॥

**त्वित्यादि । अत्र पूर्वश्लोके दैत्या इव काव्यार्थचोरा लुण्ठनाय यत् प्रगुणीभवन्ति अतः काव्यामृतं रक्षतेति रक्षणं विहितम् । उत्तरश्लोके तु सर्वे यथेच्छं गृह्णन्तु लोपेऽपि न क्षतिरिति पूर्वविहितं काव्यरक्षणं साक्षान्निषिध्यते । तथा वायोः कारागृहक्लृप्त्यै कन्दरासु शिलाकवाटदानं विहितम् । उत्तरश्लोके**

---

1. 'देया···चिरादभिज्ञः'—पद्यमिदम् अ० नास्ति ।
2. श्रीकण्ठपृथ्वीधरकन्दरस्थः—अ० नि० ।
3. रति—अ० ।
4. श्रम°—अ० ।

[१]इति नाक्षेपबुद्धिः कार्या। विहितनिषेधो ह्ययम्। न चासावाक्षेपः। निषेधेन[२] विधौ तस्य भावादित्युक्तत्वात्। चमत्कारोऽप्यत्र निषेधहेतुक एवेति न त[३]त्सद्भावमात्रेणाक्षेपबुद्धिः[४] कार्या। अयं चाक्षेपो ध्वन्यमानोऽपि भवति। यथा—

गणिकासु विधेयो न विश्वासो वल्लभ त्वया।
किं किं न [५]कुर्वतेऽनर्थमिमा धनपरायणाः ॥१५५॥

अत्र हि गणिकाया [६]उक्तौ तद्दोषोक्तिप्रस्तावे नाहं गणिकेति प्रतीयते। न चासौ निषेध एव। गणिकात्वेनावस्थितयैव गणिकात्वस्य

इन (उदाहरणों) में आक्षेप (अलंकार) नहीं समझना चाहिए। यह विहित का निषेध है। और वह (विहित-निषेध) आक्षेप नहीं होता है। निषध के द्वारा विधि होने पर यह (आक्षेपालंकार) होता है यह बताया जा चुका है। इन उदाहरणों में (अत्र) चमत्कार निषेध के निमित्त से ही आया है अतः केवल उस (निषेध) के रहने से आक्षेप (अलंकार) नहीं समझ लेना चाहिए। यह आक्षेप (अलंकार) व्यंग्य भी होता है। जैसे—

प्रिय ! तुम्हें वेश्याओं पर विश्वास नहीं करना चाहिए, ये धनलोलुप क्या-क्या अनर्थ नहीं करती हैं? १५५॥

यहाँ वेश्या की उक्ति का प्रसंग उन (अर्थात् वेश्याओं) की बुराई बताने का है, जिससे 'मैं वेश्या नहीं हूँ' यह प्रतीति होती है। यह केवल निषेध नहीं है अपितु वेश्या के रूप में होने पर भी वेश्या होने का निषेध है। इस

तु एवं चिन्तारूपं दैन्यं मृषा, किराता मरुता सह निरोधवैरं नेच्छन्तीति कवाटदानं साक्षान्निषिध्यत इति नैतद् युगलकयुगमाक्षेपोदाहरणम्। आक्षेपाभावे युक्त्यन्तरमाह—चमत्कारोऽपीति। व्यङ्ग्यत्वेनाप्यसम्भवं दर्शयति—अयं चेति। गणिकास्विति। गणिका धनपरायणाः सत्यः सर्वमसाम्प्रतमाचरन्ति यतः अतस्त्वया विश्वासो न कार्य इति गणिकाया एवोक्तौ विश्वासनिषेध आभासायते। धनवैमुख्येन शुद्धस्नेहभाजनमियमिति प्रतीतेः। अतः उक्तविषयोऽयमाक्षेपो व्यङ्ग्यः। एतद् दर्शयति—अत्र हि गणिकाया इत्यादि।

---

१. इत्यत्र च नाक्षेपभ्रमः कार्यः—अ०। २. निषेधविधौ--नि० शा०शा१।
३. न तद्भाव—नि०। ४. °पधीः अ०
५. °तेऽत्यर्थ°—अ० शा१। ६. °या एवो°—अ० शा (?)।

निषेधनात्। सोऽयं प्रस्खलद्रूपो निषेधाभासरूपो [1]वक्त्र्या गणिकायाः शुद्धस्नेहनिबन्धनत्वेन धनविमुखत्वादौ विशेषे पर्यवस्यतीत्युक्तविषय आक्षेपध्वनिरयम्। न तु—

स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान्गुणान्।
योऽम्बुकुम्भैः परिच्छेदं [2]ज्ञातुं शक्तो महोदधेः ॥१५६॥

इत्याक्षेपध्वनावुदाहार्यम्। निषेधस्यैवात्र गम्यमानत्वात्। न निषेधाभासम्य। [3]गुणानां वक्तुमशक्यत्व एवात्र तात्पर्यम्। तन्निमित्तक एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपध्वनिधीरत्र कार्या। सर्वथेष्टस्य[4] निषेधाभासस्य विध्युन्मुखस्याक्षेपत्वमिति स्थितम्।

प्रकार का यह (निषेध) बाधितस्वरूप होने से निषेधाभासरूप है, जो वक्ता वेश्या के शुद्ध प्रेम का निमित्त होने से धन के प्रति विमुखता आदि के विशेष (अर्थ) में पर्यवसित हो जाता है। इस प्रकार यह आक्षेपध्वनि (का उदाहरण) है। न कि—

वह (व्यक्ति) हयग्रीव में रहने वाले सारे गुणों का वखान कर सकता है जो जल के घड़ों से समुद्र के पानी को नाप सके। १५६ ॥

इसे आक्षेप-ध्वनि का उदाहरण मानना चाहिए। यहाँ तो निषेध ही प्रतीयमान होता है, निषेधाभास नहीं। यहाँ (हयग्रीव के) गुणों को बताए न जा सकने में ही तात्पर्य है। उसके कारण ही यहाँ चमत्कार है न कि निषेधाभास के कारण अतः यहाँ (उपर्युक्त उदाहरण में) आक्षेपध्वनि नहीं मान लेना चाहिए। यह निश्चित हो चुका है कि सर्वथा इष्ट (अर्थ) के

व्यङ्ग्यतायामप्यविषयं दर्शयति—न तु। स वक्तुमिति। योऽम्बुनिधेः परिच्छेदमम्बुकुम्भैर्ज्ञातुं शक्नोति स हयग्रीवगुणान् साकल्येन वक्तुं शक्त इत्युक्तिः शक्तेर्निषेधमेव गमयतीति नाक्षेपो व्यङ्ग्यः। तदेतदाह—निषेधस्यैवेत्यादि। निगमयति सर्वथेति। यो हि निषेधाभास इष्टोऽनिष्टो वा स विध्युन्मुखः सन्नेवाक्षेपालङ्कारो नान्यः।

---

१. वक्तुः— ना० शा१।

२. ज्ञातुं शक्तः—शा० शा१। कर्तुं शक्तो—ना०।

३. महोदधेरम्भः कुम्भपरिच्छेदशक्तिनिदर्शनेन हयग्रीवगुणानां—अ०।

४. °थेष्टानिष्टस्य—अ०।

[१]एवमिष्टनिषेधेनाक्षेपमुक्त्वा समानन्यायत्वादनिष्टविधिनाक्षेपमाह—

**अनिष्टविध्याभासश्च ॥सू० ३९॥**

यथेष्टस्येष्टत्वादेव निषेधोऽनुपपन्न एवमनिष्टस्याप्यनिष्टत्वादेव विधानं नोपपद्यते। तत्क्रियमाणं प्रस्खलद्रूपत्वान्निषेधे[२] पर्यवस्यति। ततश्च

निषेध—जो विधि के प्रति उन्मुख हो—का आभासित होना ही आक्षेप का स्वरूप है।

इस प्रकार इष्ट (अर्थ) के निषेध द्वारा आक्षेप (अलंकार) को बताकर न्याय की समानता होने से, अनिष्ट (अर्थ) का विधान करने से (दूसरे) आक्षेप (अलंकार) को बताते हैं—

अनिष्ट के विधान का आभास भी (आक्षेपालंकार होता है)। सू० ३९॥

जिस प्रकार इष्ट का इष्ट होने से निषेध ठीक नहीं है उसी प्रकार अनिष्ट होने से विधान भी ठीक नहीं लगता है। उसका किया जाना, बाधित-स्वरूप

निषेधाभास (मा) आक्षेपः प्रकृतस्येष्टसिद्धये।
स उक्तविषये वस्तुतदुक्त्योर्वारणात्मकः॥

वक्ष्यमाणे पुनस्त्वन्यो ज्ञेय आगूरणात्मकः।
सामान्यतो विशेषोंऽशादंशश्चेत्येष च द्विधा॥

इष्टोऽर्थोऽस्य निषेधोऽस्य बाधोऽस्यातिशयध्वनिः।
चतुष्टयमिदं ज्ञेयं सम्भूयाक्षेपकारणम्॥

आक्षेपान्तरमुपक्षिपति- एवमिष्टेत्यादि। समानन्यायत्वादिति। अन्वय-व्यतिरेकावस्थायिनोर्हि वस्तुनोर्न्यायोऽप्यन्वयव्यातिरेकावस्थायितया समान इति भावः। तत्र सूत्रम्—

"अनिष्टविध्याभासश्च"॥

प्राकरणिकस्य विशेषप्रतीत्यर्थमिति यदनुवर्तते न तु प्राकरणिकयोरिति। वक्ष्यमाणैकविषयत्वात् अस्य यथेष्टस्य निषेधाभास आक्षेपः प्राक्। तथा विशेष-

१. इत्थम्—शा (?)।
२. विध्याभासे—अ०।

[१]विधेरुपकरणीभूतो निषेध इति विधिनायं निषेधोऽनिष्टविशेषपर्यवसायी निषेधागूरणादाक्षेपः[२]। यथा—

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥१५७॥

अत्र कयाचित्कान्तस्य[३] [४]प्रस्थानमात्मनोऽनिष्टमप्यनिराकरणमुखेन विधीयते। न चास्य विधिर्युक्तः। अनिष्टत्वात्। सोऽयं प्रस्खलद्रूप-

होने के कारण, निषेध में पर्यवसित होता है। और इस प्रकार निषेध विधि का उपकारक बन जाता है। विधि द्वारा यह निषेध अनिष्ट के विशेष को बताने में परिसमाप्त होता है अतः निषेध का आगूरण (सूचन) होने से आक्षेप (कहलाता) है। जैसे—

अयि प्रियतम ! जा रहे हो तो जाओ; तुम्हारे मार्ग मंगलमय हों। मेरा भी जन्म वहीं हो जहाँ आप गए हुए हो। १५७ ॥

यहाँ किसी स्त्री द्वारा, खुद के प्रसन्न न होने पर भी, प्रस्थान का विधान, निराकरण न करने के माध्यम से, किया गया है। इस (प्रस्थान) का विधान अनिष्ट (अभीप्सित न) होने से ठीक नहीं जँचता है। इस प्रकार

प्रतीत्यर्थमनिष्टस्य विध्याभासोऽप्याक्षेपः। व्याचष्टे—यथेष्टस्येत्यादि। यथेति। यद्वृत्तेन समानन्यायतायै निरूपितचरमाक्षेपमनुस्मारयति। एवमित्यादि तु प्रस्तुतविषयम्। प्रस्खलद्रूपत्वमविषयप्रवृत्तेः। विधिनायमिति। यतो विधिरयमाभासमानो निषेधे व्यज्यमान उपकरणमतो विध्याभासेन व्यञ्जकेनायं निरूप्यमाणो निषेध इत्यर्थः। स चानिष्टविशेषे पर्यवस्यन्नाक्षेपालङ्कार इति योजना। नन्वाक्षेपो द्विधा दर्शितः। उक्ते विषये कैमर्थक्यपरतया, वक्ष्यमाणे त्वागरकत्वेन। इह तु कतर इत्यत आह—निषेधागूरणादिति। निषेधो ह्यनुक्त इह विध्याभासेनागूर्यते। अतोऽयं वक्ष्यमाणैकविषय इति विज्ञातव्यम्। उक्तं हि "वक्ष्यमाणविषयत्वेनानयनरूपमागूरणमाक्षेप" इति।

गच्छेति। गच्छसि चेदित्यनेन जिगमिषास्ति चेन्नाहं निराकरोमीति गम्यते। गच्छेत्यत्र तु तेन पुरस्कृतो विधिर्ममापि तत्रैव गतिर्भूयादिति तु प्राणनैराश्याविष्कारान्निषेधप्रत्यायनम्। योजयति—अत्र कयाचिदित्यादि। अनिराकरणमुखेनेत्यनेन गच्छसि चेदित्यर्थागमो दर्शितः। प्रलुठद्रूपत्वमिह

१. विधिरु°—ना० शा१। २. °णात्माक्षे°—अ०।
३. कान्तप्र°—अ०। ४. आत्मनः—अ० नास्ति।

त्वेन निषेधमागूरयति। फलं चात्रानिष्टस्य [1]प्रस्थानस्यासंविज्ञान-[2]पदनि-[3]बन्धनमत्यन्तपरिहार्यत्वप्रतिपादनम्[4]। [5]एतच्च ममापि जन्म तत्रैवेत्याशीःप्रतिपादनेनानिष्टपर्यवसायिना व्यञ्जितम्। यथा वा

नो किंचित्कथनीयमस्ति सुभग प्रौढाः परं त्वादृशाः
पन्थानः कुशला भवन्तु भवतां[6] को मादृशामाग्रहः।
किं त्वेतत्कथयामि संततरतिक्लान्तिच्छिदस्तास्त्वया
स्मर्तव्याः [7]शिशिराः सहंसरुचयो[8] गोदावरीवीचयः ॥१५८॥

का यह (विधान) बाधितस्वरूप होकर निषेध का आगूरण कर लेता है। इसका फल है (प्रियतम के अनभिप्रेत) प्रस्थान को अत्यन्त परिहार्यरूप बताना, जिसे किसी शब्द से नहीं बताया गया है अपितु उसे 'मेरा भी जन्म वहीं हो' इस मंगलकामना के द्वारा — जिसका परिणाम अनिष्ट होगा — व्यंजित किया गया है। अथवा जैसे—

अयि सुन्दर! (मुझे) कुछ भी नहीं कहना है। और फिर तुम्हारे जैसे अत्यन्त प्रौढ़ व्यक्ति! आपके मार्ग मंगलमय हों, हम जैसे लोगों का आग्रह भी क्या? किन्तु इतना कह रही हूँ कि सुरत-खेद को सदा दूर करने वाली, हंसों से सुशोभित गोदावरी की उन शीतल तरंगों को तो तुम याद कर लिया करना। १५८॥

साक्षाद् वाक्यानुप्रवेशः। विशेषप्रतिपत्तिरूपं फलं चापि दर्शयति — फलं चात्रेति। गमनस्यात्यन्तपरिहार्यत्वमिह फलम्। तत्र किन्निमित्तमित्यत आह — असंविज्ञानेति। न संविज्ञायते येनार्थः तदसंविज्ञानम्। पदं चेदिति निपातात्मकम्। गच्छसि चेदित्युक्तौ हि किं त्वद्गमनेन मम संविज्ञातेनेत्यादि प्रतीयते। इदमेवमर्थप्रत्यायकं सत् पदमत्यन्तपरिहार्यत्वनिबन्धनमित्यर्थः। नन्वेतदत्यन्तपरिहार्यत्वं केन व्यवस्थापितमित्यत आह — एतच्चेति। निषेधावगमं प्रकारान्तरेण दर्शयितुमाह — यथा वेति।

नो किञ्चिदिति। प्रौढाः कथनमन्तरेणापि कथनीयार्थाभिज्ञाः। शिथिलेति। हंसो हि शिथिलांसः सन् विशेषेण रम्यो भवति। अन्तर्धवलिमाविष्करान् (ष्कारात्)। तत्सदृशरूपयो वीचय इति नैर्मल्यकाष्ठा। योजयति—

1. कान्तप्रस्थान° — अ० ना०।
2. °ज्ञात° — अ० ना०।
3. °त्यन्ता° — शा ना०, शा१ (?)।
4. °नत्वम् — शा१।
5. इदञ्च — अ० नि०।
6. भवतः — अ० नि०।
7. शिथिलाः — अ०, शा० (?) शा१।
8. °गतयो — नि०।

अत्रानभिप्रेतमपि कान्तप्रस्थानं यदा प्रमुख एवाभ्युपगम्यमानं प्रतीयते, तदायमनिष्टविधिराभासमान आक्षेपाङ्गम्। स्मर्तव्या[१] इत्यनेन गमननिवृत्तिरेवोपोद्बलिता। तस्मादयमपि प्रकार आक्षेपस्य समानन्याय-[२]तयाभिनवत्वेनोक्तः।

आक्षेपे इष्टनिषेधे[३]ऽनिष्टविधौ चानुपपद्यमानत्वाद्विरुद्धत्वमनुप्रविष्टम्। एतत्प्रस्तावेन विरोधगर्भोऽलंकारवर्गः [४]प्रक्रियते। तत्रापि विरोधालंकारस्तावल्लक्ष्यते—

यहाँ पसन्द न होने पर भी प्रियतम का प्रस्थान जब प्रारम्भ में ही स्वीकार किया जा रहा प्रतीत होता है तो यह अनिष्ट (अभिप्रेत) का विधान आभासित होकर आक्षेप का अंग है। 'याद कर लिया करना' इससे प्रस्थान से निवृत्ति ही उभड़ती है। अतः (अलंकार का) यह भेद भी आक्षेप के न्याय की समानता से, अभिनवरूप में बताया गया है।

आक्षेप (अलंकार) में इष्ट का निषेध होकर अनिष्ट का विधान होने में अनुपद्यमानता रहने से विरोध का भाव छिपा हुआ है। इस प्रसंग से विरोधगर्भ अलंकारों के वर्ग का निरूपण किया जा रहा है। इनमें से विरोधालंकार का प्रथमतः लक्षण दिया जा रहा है—

अत्रानभिप्रेतमित्यादि। अनभिप्रेतस्यैव सतो गमनस्य नो किञ्चित् कथनीयमस्तीति प्रमुख एवाभ्युपगमः प्रतीयते। इत्थं च सति विधिरयमनिष्टत्वेनाभासमानो निषेधागूरणात्मन आक्षेपस्याङ्गम्। स्मर्तव्या इत्यनेन तु भूयस्तरां निषेध एवोपोद्बलितः। तथाविधवीचिस्मृतौ गमनवार्ताया अप्ययोगात्। निगमयति—तस्मादिति। अभिनवत्वेनान्यैरप्रहतत्वेन।

अनुक्तस्य निषेधस्य विध्याभासेन सूचनम्।
आक्षेपो वक्ष्यमाणैकविषयस्त्वेष सम्मतः॥

अथ विरोधविच्छित्तिमधिचिकीर्षुराह—आक्षेप इष्टेत्यादि। आक्षेपालङ्कारे हि विरुद्धत्वमनुप्रविष्टम्। इष्टनिषेधावलम्बेनानिष्टविध्यवलम्बेन वा सूत्रद्वयम्। प्रवृत्तेऽस्मिन्ननुपपत्तिसद्भावादित्यर्थः। तमिमं प्रस्तुतं विरोधमधिकुर्म इत्याह—एतत्प्रस्तावेनेति। तेषु व्यधिष्ठानभूतं विरोधालङ्कारं प्रामुख्यात् प्रथममुपगृह्णाति—तत्रापीति। तत्र सूत्रम्—

१. स्मर्तव्यमित्य°—शा० ना०।　२. °तया विधानबलेनो°—अ०।
३. चानिष्ट°—शा० ना०　४. प्रतीयते—शा० ना० शा१।

**विरुद्धाभासत्वं विरोधः ।।सू० ४०।।**

इह जात्यादीनां चतुर्णां पदार्थानां प्रत्येकं तन्मध्य एव सजातीय-विजातीयाभ्यां विरोधिभ्यां संबन्धे विरोधः । स च समाधानं विना [1]प्ररूढो दोषः । सति[2] समाधाने प्रमुख एवाभासमानत्वाद्विरोधाभासः । तत्र[3] जातिविरोधस्य जात्यादिभिः सह चत्वारो भेदाः[4] । गुणस्य गुणादिभिः सह त्रयः । क्रियायाः क्रियाद्रव्याभ्यां[5] सह द्वौ [6]भेदौ । द्रव्यस्य द्रव्येण सहैकः । तदेवं दश विरोधभेदाः । तत्र[7] दिङ्मात्रेणोदाहरणं यथा—

विरुद्ध आभासित होना विरोध है । सू० ४० ।।

जाति आदि चार पदार्थों में से प्रत्येक के अपने में ही विरोधी सजातीय तथा विजातीय के साथ सम्बन्ध होने पर विरोध होता है[8] । उसका प्रशमन न हो तो दोष का प्ररोह हो जाता है । (विरोध का) प्रशमन हो जाने पर, प्रारम्भ में ही आभासित होने से विरोधाभास (कहलाता) है । यहाँ जाति आदि (अर्थात् सजातीय जात्यन्तर और विजातीय गुण, क्रिया तथा द्रव्य) के साथ जाति के विरोध से चार भेद होते हैं । गुण के गुणादि के साथ (विरोध के) तीन भेद होते हैं । क्रिया के क्रिया और द्रव्य के साथ (विरोध के) दो भेद होते हैं और द्रव्य का द्रव्य के साथ (विरोध का) एक (भेद होता है) इस प्रकार विरोध के दस भेद हैं । इनका दिशानिर्देश से उदाहरण जैसे—

"विरुद्धाभासत्वं विरोधः" ।।

**विरोधस्य समाधानसद्भावादाभासत्वं विरोधालङ्कारः । व्याचष्टे—इह जात्यादीनामिति । जातेर्जातिः सजातीयम् । अन्यद् विजातीयम् । एवं गुणस्य गुण इत्यादि । भेदान् संचष्टे—तत्र चेति । जातिविरोधस्य जातिनिबन्धनस्य विरोधालङ्कारस्य ।**

---

१. प्ररूढम्—ना० । २. सति तु—अ० नि० । ३. तत्र च—अ० ।

४. विरोधाः—अ० शा० (?) । ५. °द्रव्यभेदाभ्यां—शा० शा१ ।

६. भेदौ°—अ० नास्ति ।

७. तत्रोदाहरणं दिङ्मात्रेण यथा —इत्यन्या संघटना ।

८. चार पदार्थ हैं—जाति, गुण, क्रिया तथा द्रव्य । एक जाति की सजातीय दूसरी जाति है और गुणादि विजातीय हैं । इसी प्रकार गुण का गुणान्तर सजातीय है और जाति आदि विजातीय ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१५९॥

अत्र जडीकरणतापकरणयोः [१]क्रिययोर्विरोधो वस्तुसौन्दर्येणाप्राप्ति-पर्यवसानेन[२] परिह्रियते । तथा—

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥१६०॥

सीमा से अतीत, सारे वचनों से अवर्णनीय, इस पुनर्जन्म में अनुभवपथ से जो अछूता है, विवेक नष्ट हो जाने से विकसित महान् मोह के कारण गहन, किसी (अपूर्व) विकार ने अन्तस् को जड़ बना दिया है और सन्ताप पैदा कर रहा है । १५९ ॥

यहाँ मिलन न होने में विश्रान्त होने वाले वस्तुसौन्दर्य के द्वारा जड़ बनाना तथा सन्ताप पैदा करना (इन दो) क्रियाओं का विरोध दूर कर दिया गया है । यथा—

यह जलों का एक निलय है, रत्नों का आकर है; यह सोचकर प्यास (या रत्न पाने की इच्छा) से चंचल बने हुए हम लोगों ने जलनिधि का सहारा लिया था । यह कौन जानता था कि (अगस्त्य) मुनि अपनी अंजुरी की खोख में रक्खे हुए, बिलबिलाती बड़ी मछलियों तथा मगर वाले इस (समुद्र) को क्षण भर में पी डालेंगे । १६० ॥

परिच्छेदेति । अपरिच्छेद्यः सर्ववचनानामविषयः । अत्र जन्मनि पुनरित्थ-मनुभूतः (? मनुभूतम्) । पुनस्त्वमिह प्राक्कोटचपेक्षमपूर्वमित्यर्थः । विवेकस्य विशेषतो ध्वंसादुपचितेन महान्धकारेण दुरुत्तरः कोऽपि विकारोऽन्तर्जडयति तापयति च । योजयति—अत्र जडीकरणेति । अप्राप्तिः पूर्वानुरागविप्र-लम्भः । तद्धेतुकोऽयं विरोधक्रियोपनिपात इत्यर्थः ।

अयं वारामिति । तृष्णा पिपासा, रत्नविषया लिप्सा च । क एवं जानीते,

१. क्रिययोः—अ० नास्ति ।
२. °सायिना—अ० ।

अत्र जलनिधिः पीत इति द्रव्यक्रिययोर्विरोधो मुनिगतेन महाप्रभावत्वेन समाधीयते। एवमन्यदपि ज्ञेयम्।

विविक्तविषयत्वेन चास्य दृष्टेः श्लेषगर्भत्वे[1] विरोधप्रतिभोत्पत्तिहेतुः श्लेष औद्भटानाम्। दर्शनान्तरे तु संकरालंकारः। यथा—'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वे। एकस्य [2]तु श्लिष्टत्वे 'कुपतिमपि कलत्रवल्लभम्' इत्यादौ। एकविषयत्वे चायमिष्यते। विषयभेदे त्वसंगतिप्रभृतिर्वक्ष्यते।

यहाँ 'समुद्र का पी लिया जाना' इस (वर्णन) में द्रव्य (समुद्र) तथा क्रिया (पीने) का विरोध है जिसका समाधान (अगस्त्य) मुनि में विद्यमान महान् प्रभाव के स्वरूप से हो जाता है। इसी प्रकार दूसरे (उदाहरण) भी जान लेना चाहिए।

यह (अलंकार) स्वतन्त्र विषय के रूप में पाया जाता है। श्लेष से गर्भित होने पर उद्भट के अनुयायियों के अनुसार (औद्भटानाम्) श्लेष ही होगा जो विरोध (अलंकार) के आभासन (छायामात्र) का उत्पादक होगा। किन्तु दूसरे मत से संकर अलंकार होगा। जैसे—'बाल अन्धकार (केशों की कालिमा तथा नूतन अन्धकार) से युक्त और भास्वन्मूर्ति (दीप्तिमान् व्यक्तित्व तथा सूर्यमण्डल)' आदि में दो विरोधियों में श्लेष होने पर (श्लेषगर्भित विरोधालंकार होता है)। और एक के ही श्लिष्ट होने पर जैसे कि 'कुपति (खराब पति तथा पृथ्वी-पति) होने पर भी स्त्री का प्रियतम' आदि (उदाहरणों) में जहाँ एकविषयता होती है वहाँ इस (श्लेषगर्भित विरोधालंकार) को ही माना जाता है। विषय के भिन्न होने पर असंगति आदि (अलंकार) होगा, यह बताया जाएगा।

न कस्यचिदिदं सम्भाव्यमित्यर्थः। योजयति—अत्र जलनिधिरिति। भेदान्तरं सुज्ञानमित्याह—एवमिति।

इह श्लेषगर्भत्वे किं वृत्तमित्यत आह—विविक्तेति। श्लेषतोऽपि विविक्तविषयतयोक्तोदाहरणादौ दृश्यते यतः, अतः श्लेषगर्भत्वे श्लेषो बाधक उद्भटमतावलम्बिनाम्। अन्येषां तु सङ्करः। उदाहरणम्—सन्निहितबालेति। बालान्धकारः केशकालिमा नूतनतिमिरं च। (भास्वन्मूर्तिः) भास्वरमूर्तिः, भास्वतो रवेर्मूर्तिश्च। इदं द्वयोरपि विरोधिनोः श्लिष्टत्वे। कुपतिमित्येकतरस्य, पृथ्वी-

१. °गर्भे—अ०। २. च—शा० ना०।

एवं विरोधमुक्त्वा विरोधमूला[1] अलंकाराः प्रोच्यन्ते[2]। तत्रापि कार्य-कारणभावमूलत्वे[3] विभावनां तावदाह—

कारणाभावे कार्यस्योत्पत्तिर्विभावना ॥सू० ४१॥

इह कारणान्वयव्यतिरेकानुविधानात्कार्यस्य कारणमन्तरेणासंभवः। अन्यथा विरोधो दुष्परिहरः स्यात्। यदा तु[4] कयाचिद्भङ्ग्या तथा-भाव उपनिबध्यते, तदा विभावनाख्योऽलंकारः। विशिष्टतया कार्यस्य भावनात्। सा च भङ्गिर्विशिष्टकारणाभावोपनिबद्धा[5]। अप्रस्तुतं कारणं वस्तुतोऽस्तीति विरोधपरिहारः। कारणाभावेन [6]चोपक्रान्तत्वाद्बलवता

इस प्रकार विरोध (अलंकार) को बताकर विरोधमूलक अलंकारों को बताते हैं—

कारण के अभाव में कार्य की उत्पत्ति विभावना है। सू० ४१।

चूँकि कारण का (कार्य के साथ) अन्वयव्यतिरेक नियत है अतः कारण के विना कार्य का होना सम्भव नहीं है। यदि ऐसा होता है तो (दोनों के वास्तविक) विरोध को मिटाना कठिन होगा। पर यदि किसी भंगिमा से इस प्रकार की उत्पत्ति बता दी जाती है तो विभावना नामक अलंकार होता है। विशिष्ट रूप में कार्य का भावन (निष्पादन) होने से इस अलंकार को विभावना कहा जाता है। यह भंगिमा किसी विशिष्ट कारण के अभाव को लेकर उपनिबद्ध होती है। अप्रस्तुत कारण वस्तुतः विद्यमान है अतएव (कारण के बिना कार्य की उत्पत्ति होने में वास्तविक) विरोध का परिहार

पतिः, कुत्सितपतिश्च। अत्र विशेषमाह—एकविषयेति। विरोधस्यैकविषयत्वे विरोधालङ्कारः। विषयभेदे त्वसङ्गत्यादिर्वक्ष्यते।

विरोधस्तु तदाभासो जात्याद्यर्थसमाश्रयः।
तद्वैचित्र्याद् दशविधो विषयैक्ये व्यवस्थितः॥

अथ विभावना। विरोधमूलाः, तत्रापि कार्यकारणविरोधालम्बेन विभाव-नोच्यते। तत्र सूत्रम्—

"कारणाभावे कार्यस्योत्पत्तिर्विभावना" ॥

प्रसिद्धकारणाभावे सूक्ष्मकारणवशात् कार्योत्पत्तिर्विशिष्टतया कार्यभावनाद्

---

१. मूल्यान्यलङ्कारान्तराणि उच्यन्ते—अ०। २. प्रदर्श्यन्ते—नि०।
३. °त्वेन—अ०। ४. यदि—नि० शा० ना०।
५. °भावे कार्योपनिबन्धः—ना०। ६. चेहोप°—अ०।

कार्यमेव बाध्यमानत्वेन प्रतीयते, न तु तेन[१] कारणाभाव इत्यन्योन्य-बाधकत्वानुप्राणिताद्विरोधालंकाराद्भेदः। एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम्। येन सापि विरोधाद्भिन्ना स्यात्। इह च लक्षणे यद्यप्यन्यैः कारणपदस्थाने क्रियाग्रहणं कृतं तथापीह कारणपदमेव [२]विहितम्। न हि सर्वैः क्रियाफलमेव कार्यमभ्युपगम्यते। वैयाकरणैरेव तथाभ्युपगमात्। अतो विशेषमनपेक्ष्य सामा-

हो जाता है। कारण के अभाव से प्रारम्भ होने वाला कार्य, बलवान (कारण) के द्वारा बाध्यमान रूप में प्रतीत होता है पर इससे कारण का अभाव नहीं (सिद्ध) होता है अतः परस्पर की बाधकता से अनुप्राणित विरोधालंकार से (विभावनालंकार का) भेद है। इसी प्रकार विशेषोक्ति में कार्य के अभाव से कारण की सत्ता के ही बाध्यमान होने की कल्पना कर लेनी चाहिए (अर्थात् विशेषोक्ति में कारण की बाध्यमानता रहती है पर उससे कार्य का अभाव सिद्ध नहीं रहता है) जिससे उस (विशेषोक्ति) का भी विरोध (अलंकार) से भेद हो सके।

इस (विभावनालंकार) के लक्षण में यद्यपि दूसरे (आचार्यों) ने कारण शब्द के स्थान पर क्रिया (शब्द) का प्रयोग किया है तथापि यहाँ कारण शब्द ही रक्खा गया है। सब (दार्शनिक) यह नहीं मानते हैं कि कार्य क्रिया का ही फल होता है। इस प्रकार की मान्यता केवल वैयाकरणों की है। अतः विशेष (वैयाकरणों के विशिष्ट मत) की उपेक्षा कर सामान्यरूप

विभावना। व्याचष्टे—इह कारणेति। कार्यं हि कारणमन्तरेण न सम्भवति। तदन्वयव्यतिरेकानुविधानात् तदभावेऽपि यदि कार्यसम्भवस्तदा वास्तवत्वाद् विरोधो दुष्परिहारः। यदि केनचिदुक्तिवैचित्र्येण कारणाभावेऽपि कार्यसम्भवोपनिबन्धस्तदा वैशिष्ट्येन कार्यभावनाद् विभावना। कयाचिदित्युक्तं, सा केत्यत आह—सा चेति। प्रसिद्धस्यैव कारणस्यानुपनिबन्धः। अप्रसिद्धकारणसद्भावात् तु न विरोधः। विरोधाद् वैलक्षण्यायाह—कारणाभावेनेति। प्रामाणिकत्वाद् बलिना कारणाभावेन कार्यमेव बाध्यते न तु कारणाभावः, अत उभयविरोधानुप्राणिताद् विरोधाद् विशेषः। एतद्व्यतिरेकरूपया नीत्या वक्ष्यमाणस्य विशेषोक्त्यलङ्कारस्यापि विरोधतो भेद इत्याह—एवं विशेषोक्ताविव्यादि। तत्र हि कार्याभावः कारणसत्ताबाधकः। अतः सापि विरोधाद् भिन्ना। लक्षणांशे विमति-

१. तेन तत्र—अ०। २. विवक्षितम्—ना० (?)।

न्येन कारणपदमेवेह[1] निर्दिष्टम्। [2]यथा—

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥१६१॥

अत्र द्वितीये[3] पादे मदस्य प्रसिद्धं यदासवाख्यं करणं तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धः कृतः। मदस्य च[4] द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या[5]। सा चास्यामव्यभिचारिणीति न तद्भावेनास्या उत्थानम्, अपि तु तदनुप्राणितत्वेन। [6]इयं च विशेषोक्तिवदुक्तानुक्त-

में कारण शब्द का ही यहाँ प्रयोग किया गया है। (विभावनालंकार) जैसे—

उस (पार्वती) ने शैशव से अगली वह अवस्था प्राप्त की जो अंगलता का अनगढ़ा आभूषण है, आसव न होने पर भी मद का जनक है और जो कामदेव का पुष्प से भिन्न अस्त्र है। १६१॥

इस श्लोक के द्वितीय चरण में मद पैदा करने का जो आसव नामक प्रसिद्ध कारण है उसके अभाव में भी यौवन को (मद के) हेतुरूप में बताया गया है। मद दो प्रकार का (अर्थात् आसव-जनित तथा यौवन-जनित) होने पर भी अभेदाध्यवसाय होने से अतिशयोक्ति के द्वारा एकरूप हो गया है। यह (अतिशयोक्ति) इस (विभावना) में सदा रहती है। अतः उसे बाधित

मुपन्यस्य दूषयति - इह लक्षण इति। क्रियाग्रहणं तु तत्क्रियाभावे कार्योत्पत्तिर्विभावनेति तथापि कारणपदमेव विधानार्हत्वान्निवेशितम्। तत्र हेतुः— न हि सर्वैरिति। क्रियाफलमेव कार्यमिति। न हि सर्वेषामभ्युपगमः किन्तु वैयाकरणानामेव। अतः क्रियाव्यतिरेकिणोऽपि कारणस्य सम्भवात् सामान्यतः कारणग्रहणमेव कृतम्।

अत्र द्वितीय इति। मदस्यासवकारणापोहेन यौवनकारणोपनिबन्धो यौवनासवमदयोरभेदाध्यवसायात्। सा चातिशयोक्तिर्विभावनां न व्यभिचरतीति

---

१. इह—ना० नास्ति। २. उदाहरणम्—शा० ना० शा१।

३. द्वितीयपादे—ना० शा१।

४. च—ना० नास्ति। ५. °क्तौ—ना०।

६. भिन्नोऽत्र अ० पाठक्रमः। स चायमस्ति—'तदनुप्राणितत्वेन' इत्यनन्तरम् 'असम्भृतं मण्डन···इति त्वद्यतनाः' ततः 'इयं च विशेषोक्ति · निमित्तं गम्यमानम्'। एतदनन्तरञ्चायमंशोऽत्राधिकः 'इयं च मालयापि भवन्ती दृश्यते। यथा—

निमित्तभेदाद्द्विधैव। तत्रोक्तनिमित्तोदाहृता। अनुक्तनिमित्ता यथा—

अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम्।
अनलक्तकताम्राभामोष्ठलेखां[1] च [2]बिभ्रतीम्॥१६२॥

अत्र सहजत्वं निमित्तं गम्यमानम्। असंभृतं मण्डनमिति, कामस्य पुष्पव्यतिरिक्तमस्त्रमिति[3] च। अत्र विवदन्ते—इयमेव विभावनेति केचित्।

करके नहीं अपितु उससे अनुप्राणित होकर इस (विभावना) का उत्थान होता है। यह (विभावना) विशेषोक्ति की भांति उक्तनिमित्ता तथा अनुक्तनिमित्ता के भेद से दो प्रकार की ही होती है। इनमें से उक्तनिमित्ता कही जा चुकी है। अनुक्तनिमित्ता का उदाहरण है—

वह केसर से लेप के अभाव में भी लाल-पीली अंगरेखा को तथा आलता के अभाव में भी लाल अधर-रेखा को धारण करती है। १६२॥

यहाँ (श्लोक १६२ में पीलिमा और लालिमा का) नैसर्गिक होना प्रतीयमान निमित्त है (अर्थात् उक्त नहीं है अपितु अनुक्त है)। 'अनगढ़ा आभूषण' तथा 'कामदेव का पुष्प से भिन्न अस्त्र' इन (अंशों) को लेकर मतभेद है। कुछ लोग कहते हैं कि यही विभावना है। संभरण तथा पुष्प

न बाध्यते अपि त्वनुग्राहकत्वेनावतिष्ठते। द्वैविध्यमाह—इयं चेति। अनेन विशेषोक्तेरपि द्वैविध्यं सूचितम्। तत्रासम्भृतमिति। इयमेव उक्तनिमित्ता, वयसो निमित्तत्वात्।

अङ्गलेखामिति। काश्मीरसमालम्भनं कुङ्कुमालेपः। निमित्तानुक्तिं दर्शयति अत्र सहजत्वमिति। वैचित्र्यान्तरमाह—इयं चेति। अनिद्र इति। प्रपतनं मरणाध्यवसायेन पातः। तिमिरसहितस्त्राससमयो निशा। अयं तु तदभावात्मकः। आघातो वधस्थानम्। धृतिर्धारणम्। अन्वयोऽनुवृत्तिः। आद्योदाहरणे प्रथम(? द्वितीय)तृतीयपादयोर्विमतिरित्याह—असम्भृतमितीति। सम्भरणपुष्पकारणाभावेऽपि मण्डनकामास्त्रकार्योत्पत्तेरियमेव विभावनेति केचित्।

---

अनिद्रो दुःस्वप्नः प्रपतनमनद्रिद्रुमतटं
जराहीनः कम्पस्तिमिररहितस्त्राससमयः।
अनाघातं दुःखं विगतनिगला बन्धनधृतिः
सजीवं जन्तूनां मरणमवनीशाश्रयरसः॥'

इतश्च 'विभावनां लक्षयित्वे'त्यादिरेव पाठः प्रवर्तते।

१. °मुद्राम्—अ०। २. बिभ्रती—अ०। ३. °मित्यत्र च—अ०।

संभरणस्य पुष्पाणां च मण्डनमस्त्रं[1] प्रत्यकारणत्वाद्वाङ्मात्रमेतत्। एकगुणहानौ विशेषोक्तिरित्यन्ये। [2]रूपकमेवाधिरोपितवैशिष्ट्यमिति[3] त्वपरे। आरोप्यमाणस्य प्रकृते संभवात्परिणाम इत्यद्यतनाः।

विभावनां लक्षयित्वा तद्विपर्ययस्वरूपां विशेषोक्तिं लक्षयति—

आभूषण तथा अस्त्र के कारण नहीं हैं अतः (यह अंश) उक्तिमात्र है (अलंकार नहीं है)[4]। पर दूसरे (वामन के अनुयायी आचार्य इन अंशों में) एक गुण की हानि होने से विशेषोक्ति को मानते हैं, और दूसरे (उद्भट के अनुयायी आचार्य) वैशिष्टच का अध्यारोप करने वाला रूपक। आरोप्यमाण का प्रकृत में उपयोग सम्भव होने के नाते (इन अंशों में) परिणाम (अलंकार) है, यह अर्वाचीन मानते हैं।

विभावना को बताकर उससे विपरीतस्वरूप वाली विशेषोक्ति का लक्षण देते हैं—

अन्ये तु सम्भरणपुष्पयोर्मण्डनास्त्रे प्रत्यासवमदन्यायेन साक्षादकारणत्वाद् वाङ्मात्रकं विभावनात्ववचनम्। किञ्चैकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिरित्युक्तलक्षणा विशेषोक्तिरियम्। सम्भरणाद्यनेकगुणहान्या मण्डनादेर्वयसा सह साम्यदार्ढ्यादित्याहुः। अपरे तु वयसि मण्डनत्वाद्यारोपाद् रूपकमेव। यत्त्वसम्भरणादिवैशिष्ट्यं तदत्रैवारोपितमित्याहुः। अथ सिद्धान्तः आरोप्यमाणस्येति। आरोप्यमाणस्य मण्डनत्वादेर्वयोरूपे प्रकृते प्रतिपत्तिरूपादुपयोगात् परिणामोऽयम्। मण्डनादिकं हि वयोरूपोपग्राहिप्रतिपत्तिकर्मत्वेनोपयुज्यते। रूपकत्वे हि वयसो मण्डनरूपोपग्राहितायां मण्डनं प्रवेदे इत्यादि प्रसजेत्। अतः परिणाम एव। अद्यतना इति आचार्यः स्वात्मप्रमुखान् वक्ति।

---

[1] अस्त्रं च—अ०।

[2] °धिकारोपि°—ना०। [3] °मित्यपरे—अ० शा१।

[4] विभावनालंकार केवल श्लोक १६१ के केवल द्वितीय पाद—अनासवाख्यं करणं मदस्य में है। 'असम्भृतं मण्डनमंगमष्टेः' तथा 'कामस्य पुष्पव्यतिरिक्तमस्त्रम्' उक्तिमात्र है। इनमें कोई अलंकार नहीं है। संभरण तथा पुष्प आभूषण तथा अस्त्र के कारण नहीं हैं अतः उनका अभाव-वर्णन विभावनालंकार का हेतु नहीं बन सकता है। पर वामन के अनुयायी आचार्य इन अंशों को उक्तिमात्र न मानकर विशेषोक्ति का और उद्भट के अनुयायी रूपक का उदाहरण मानते हैं, अर्वाचीन आचार्य परिणाम का।

**कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः ।।सू० ४२ ।।**

इह समग्राणि कारणानि नियमेन कार्यमुत्पादयन्तीति [1]प्रसिद्धम्। अन्यथा समग्रत्वस्यैवाभावप्रसङ्गात् । [2]यत्तु सत्यपि सामग्र्ये न जनयति कार्यं, सा कंचिद्विशेषमभिव्यङ्क्तुं प्रयुज्यमाना विशेषोक्तिः । सा च द्विविधा[3]—उक्तनिमित्तानुक्तनिमित्ता च । अचिन्त्यनिमित्ता [4]त्वनुक्तनिमित्तैव । अनुक्तस्य[5] च चिन्त्याचिन्त्यत्वेन द्वैविध्यात् । क्रमेण यथा—

कारण की समग्रता होने पर भी कार्य की उत्पत्ति न होना विशेषोक्ति है । सू० ४२ ।।

यह प्रसिद्ध है कि समस्त कारण नियमतः कार्य को उत्पन्न कर देते हैं अन्यथा समग्रता के अभाव का दोष होगा । और यह जो (कारण की) समग्रता होने पर भी (विशेषोक्ति) कार्य को उत्पन्न नहीं करती है वह किसी विशेष की अभिव्यंजना के लिए प्रयुक्तहो ने वाली विशेषोक्ति (कहलाती) है । यह दो प्रकार की है–उक्तनिमित्ता तथा अनुक्तनिमित्ता किन्तु (मम्मट की) अचिन्त्यनिमित्ता अनुक्तनिमित्ता ही है क्योंकि अनुक्त के ही चिन्त्य और अचिन्त्य के रूप में दो भेद होते हैं । क्रमशः उदाहरण—

**प्रसिद्धकारणाभावे कार्योत्पत्तिर्विभावना ।**
**कार्योत्पादनवैशिष्ट्याद् द्विधा चेयं निमित्ततः ।।**

**विशेषोक्त्यै सङ्गतिमाह—विभावनामिति । तत्र सूत्रम्—**
**"कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः" ।।**

**विभावनावैपरीत्येन विशेषमभिव्यङ्क्तुं प्रयुज्यमाना विशेषोक्तिः । व्याचष्टे—इह समग्राणीत्यादि । अन्यथेति । सामग्र्यं हि कार्यनिष्पत्त्यवसानकं, तदेव चेत् कार्यं न जनयेयुः(त्) तदा किमेषां समग्रत्वम् । अतः कारणानि चेत् समग्राणि तदा नियमेन कार्योत्पत्तिरिति स्थितम् । अनेन व्याप्तिर्दर्शिता । अत्राभासतो विरोधमुपपादयति—या त्विति । कञ्चिदिति । यदि कारणसामग्र्ये कार्यानुत्पत्तिः तदा विशेषः कश्चिदभिव्यङ्ग्यः स्यात् । इत्थं च सति विशेषमभिव्यङ्क्तुमुक्तिरिति विशेषोक्तिः । तद्भेदार्थमाह—सा चेति । अचिन्त्यत्वमतर्क्यता । तद्धयनुक्तेर्निमित्तमित्यनुक्तनिमित्तैव ।**

---

१. °प्र°—शा३ पुस्तके नास्ति । २. या तु—अ० ।
३. द्विधा—अ० शा१ । ४. अनुक्तस्य च—वि० ।
५. द्विविधत्वात्—अ० शा० ना१ ।

कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥१६३॥

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि ।
[1]गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥१६४॥

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
[2]हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥१६५॥

(अनुक्तनिमित्ता विशेषोक्ति)

कपूर की तरह भस्म हो जाने पर भी जो जन-जन में शक्तिमान् हो गया है उस अप्रतिहत पराक्रम वाले पुष्पधन्वा (कामदेव) को नमस्कार है। १६३ ॥

(अनुक्त-चिन्त्य-निमित्ता विशेषोक्ति)

साथियों द्वारा गुहराने पर भी, 'आ रहा हूँ' यह कह कर जाग जाने पर भी, जाने की इच्छा होने पर भी पथिक आलस्य नहीं छोड़ पा रहा है। १६४ ॥

(अनुक्ताचिन्त्यनिमित्ता विशेषोक्ति)

वह कुसुमायुध (कामदेव) अकेला ही तीन लोकों को जीत लेता है, जिसके शरीर का संहार करके भी शिव (उसकी) शक्ति नहीं हर पाए थे। १६५ ॥

**कर्पूर इवेति । अत्र हि भस्मांशं (भस्मशेषत्वं) दाहशक्तिवैकल्ये सामग्री । अथापि जने जने शक्तिमानिति कार्यानुत्पत्तिः ।**

**आहूतोऽपीति । आह्वानप्रत्युक्तिनिद्राविमुक्तिजिगमिषाः सङ्कोचशैथिल्यकारणसामग्री । नैवेति तु कार्यानुत्पत्तिः । तत्र हेतुः कान्तास्वप्नादि चिन्तितुं शक्यम् ।**

**स एक इति । तनुहरणं बलहरणे सामग्री । न हृतमिति तु कार्यानुत्पत्तिः ।**

---

१. क्रमेणोदाहरणम्—अ० ।

२. मकरकेतवे—अ० ना० ।

[1]अत्र सत्यपि दाहलक्षणेऽविकले कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः [2]शक्तिस्वरूपेणाविरुद्धेन धर्मेणोपनिबद्धा। [3]अवार्यवीर्यत्वं चात्रोक्तनिमित्तम्। तथाह्वानादयः संकोचशिथिलीकारहेतव इति तेषु सत्स्वपि तस्यानुत्पत्तौ प्रियतमास्वप्नसमागमाद्यनुक्तं सच्चिन्त्यं निमित्तम्। तथा तनुहरणकारणे सत्यपि बलहरणस्य कार्यस्यानुत्पत्तौ निमित्तमनुक्तमप्यचिन्त्यमेव, प्रतीत्यगोचरत्वात्। कार्यानुत्पत्तिश्चात्र क्वचित्कार्यविरोधोत्पत्त्या निबध्यते। एवं [4]विभावनायामपि कारणाभावः क्वचित्[5] कारणविरुद्धमुखेन प्रतिपाद्यते। तथा च सति—

यहाँ (प्रथम उदाहरण में) दाहरूप अविकल (समस्त) कारण के होने पर भी अशक्तता नामक कार्य की अनुत्पत्ति शक्तिमान होने के विरुद्ध धर्म द्वारा बताई गई है। इस उक्त का निमित्त है—अप्रतिहत पराक्रम वाला होना। तथा (दूसरे उदाहरण में) गुहार लगाना आदि आलस्यत्याग के कारण हैं। इनके रहने पर भी उस (आलस्य-त्याग) के उत्पन्न न होने में प्रियतमा के साथ स्वप्न-मिलन एक ऐसा अनुक्त निमित्त है जो सोचा जा सकता है। तथा (अन्तिम उदाहरण में) 'शरीर का संहार कर देना' कारण के होने पर भी 'शक्ति का हरण' इस कार्य के उत्पन्न न होने का निमित्त अनुक्त भी है और अचिन्त्य भी क्योंकि (कोई निमित्त) बुद्धि में नहीं आता है। कार्य की अनुपपत्ति यहाँ (इस अलंकार में) कभी कार्य से विरुद्ध की उत्पत्ति द्वारा बताई जाती है। इसी प्रकार विभावना में भी कारण का अभाव कहीं कारण से विरुद्ध (उत्पत्ति) के माध्यम से बताया जाता है। इस प्रकार की स्थिति में—

**तत्र हेतुरनुक्तः चिन्तितुमशक्यः। त्रिष्वपि योजयति—सत्यपि दाहेत्यादि। स्वरूपेण शक्तिमानिति स्वशब्देन विरुद्धेन धर्मेण क्वचिदियं विभावनया सङ्कीर्यत इति दर्शयितुमाह—कार्यानुत्पत्तिरित्यादि।**

---

1. अत्र—शा० ना० शा१ नास्ति।
2. शक्तिमत्त्वस्वरूपेण—अ०।
3. अवार्य···क्तं निमित्तम्—ना० पुस्तके नास्ति।
4. °आहूतत्वादयः—अ०। आहूतादयः—शा० ना०।
5. क्वचित्—अ० नि० पुस्तकयोः 'प्रतिपाद्यते' क्रियायाः पूर्वं विन्यस्तम्।

य: कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि [1]तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले[2] चेतः समुत्कण्ठते ॥१६६॥

इत्यत्र विभावनाविशेषोक्त्योः संदेहसंकरः। तथा ह्युत्कण्ठाकारणं विरुद्धं 'यः कौमारहर' इत्यादि निबद्धमिति विभावना। तथा 'यः कौमारहर' इत्यादेः कारणस्य कार्यं विरुद्धं 'चेतः समुत्कण्ठत' इत्युत्कण्ठाख्यं निबद्धमिति विशेषोक्तिः। [3]विरुद्धमुखेनोपनिबन्धात्केवलमस्पष्टत्वम्[4]। साधकबाधकप्रमाणाभावाच्चात्र संदेहसंकरः।

जिसने (मेरे) कुमारीपन का हरण किया था वही पति है; वे ही चैत की राते हैं; खिली हुई चमेली की तरह सुगंधित व संपुष्ट कदम्ब की हवाएँ भी वे ही हैं। और मैं भी वही हूँ पर फिर भी (न जाने क्यों आज) उसी रेवा नदी के तट पर वेतसी-तरु के नीचे काम की लीलाओं के लिए मन उत्कंठित हो उठा है। १६६॥

यहाँ पर विभावना और विशेषोक्ति का सन्देहसंकर है। क्योंकि उत्कण्ठा के कारण के विरुद्ध 'जिसने कुमारीपन का हरण किया था' आदि का वर्णन हुआ है अतः विभावना है, इसी प्रकार 'जिसने कुमारीपन का हरण किया था' आदि कारण से विरुद्ध कार्य 'मन उत्कण्ठित हो उठा है' में उत्कण्ठा के नाम से वर्णित हैं अतः विशेषोक्ति है। विरुद्ध (कारण या कार्य) के माध्यम से वर्णन करने के कारण केवल अस्पष्टता है (पर इसमें अलंकार का अभाव नहीं है)। साधक या वाधक प्रमाण के न होने से यहाँ विभावना और विशेषोक्ति का सन्देहसंकर है।

यः कौमारहरेति। नायिका काचिदुद्दीपनविभावाभिरता वक्ति। यो मे प्रथमपरिभोगेन कौमारं हृतवान् अद्यापि स एव वरः। वसन्तक्षपा अपि ता एव। उन्मीलितमालतीवत् सुरभिताः कदम्बानिलास्त एव। कदम्बोऽत्र धूलीकदम्बाख्यस्तद्विशेषो यो वसन्ते विकसति। अहमपि सा चैवास्मि। पुरातनी प्रेमधारा न कुण्ठितेत्यर्थः। अथापि रेवानदीकूले तत्र वेतसीतरुतले सुरतव्यापारलीलाविधौ चेतः समुत्कण्ठते। योजयति—अत्र विभावनेत्यादि। कौमारह-

---

1. चौर्यसुरत°—अ०।　　2. °वृते—अ०।
3. °निबद्धत्वात्—अ० शा१।　　4. °मस्फुटत्वम्—शा१।

या तु "एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः" इति विशेषोक्तिर्लक्षिता [१]सास्मिन्दर्शने रूपकभेद [२]एवेति [३]पृथङ् न वाच्या।

अतिशयोक्तौ लक्षितायामपि कश्चित्प्रभेदः कार्यकारणभावप्रस्तावेने[४]-होच्यते—

**कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चाति-शयोक्तिः ॥सू०४३॥**

यह जो 'एक गुण की हानि की कल्पना में सादृश्य की दृढ़ता विशेषोक्ति है' यह विशेषोक्ति का लक्षण दिया गया है वह हमारे सिद्धान्त के अनुसार रूपक का ही भेद होगा अतः उसे पृथक् नहीं मानना चाहिए।

अतिशयोक्ति का लक्षण दिये जाने पर भी इसके एक किसी प्रभेद का निरूपण, कार्यकारणभाव के प्रसंग से, किया जा रहा है।

कार्य और कारण के एक काल में होने पर तथा पूर्वापरभाव के विपरीत हो जाने पर अतिशयोक्ति होती है। सू० ४३॥

रादिसद्भावोऽनुत्कण्ठाकारणसामग्र्यम्। अथापि चेतः समुत्कण्ठत इति विरुद्धोपनिबन्धेनानुत्कण्ठानुत्पत्तिरुक्ता। अतो विशेषोक्तिः। तथा कौमारहरा-द्ययोगरूपकारणाभावे तत्सद्भावरूपविरोधिमुखेनोपनिबद्धेत्युत्कण्ठाकार्योत्पत्ति-विभावना। तयोश्च साधकबाधकाभावात् सन्देहसङ्करः। कार्यकारणभावयोश्च विरोधिसद्भावायातत्वादस्फुटत्वम्। अनयोश्च न सर्वदा सङ्करः। कार्योत्पत्त्य-नुत्पत्त्योरन्यतरविवक्षणे शुद्धत्वात्। प्रकृतोदाहरणे तूत्कण्ठोत्पत्त्यनुत्कण्ठोत्प-त्त्योर्द्वयोरपि विवक्षा। अत्र श्लोकः—

कार्यांशस्य यदा भावाभावौ वक्तुमपेक्षितौ।
विभावनाविशेषोक्त्योस्तदा सन्देहसङ्करः॥

लक्षणान्तरमव्यापीत्याह - या त्वेकगुणेत्यादि।

विशेषोक्तिर्भवेत् कार्यानुत्पत्तिः सति कारणे।
अत्रैकगुणहान्या तु साम्यदार्ढ्यमलक्षणम्॥

प्रतिज्ञातचरायातिशयोक्त्यन्तराय सङ्गतिः - अतिशयोक्ताविति। तत्र सूत्रम्—

"कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्तिः"॥

---

१. सास्मद्—अ०। २. एव—शा० ना० नास्ति।
३. न पृथग वाच्या—इति अ० संघटना। ४. °नेत्याह—शा० ना०।

इह नियतपूर्वकालभावि कारणं, नियतपश्चात्कालभावि [1]च कार्यमिति कार्यकारणयोर्लक्षणं प्रसिद्धम्। यदा तु विशेषप्रतिपादनाय तयोरेतद्रूपापगमः क्रियते तदातिशयोक्तिः। एतद्रूपापगमश्च कालसाम्यनिबन्धनः, कालविपर्यासनिबन्धनश्चेति [2]द्विधा भवन्नतिशयोक्तिमपि द्वैधे[3] स्थापयति। क्रमेण यथा[4]—

पश्यत्सू द्रुतसान्द्रविस्मयरसप्रोत्फुल्लनेत्रोत्पलं[5]
भूपालेषु तवात्र सूक्ष्मनिशिते निस्त्रिंशधाराध्वनि।
कीर्त्या च द्विषतः[6] श्रिया च युगपद्राजन्यचूडामणे
हेलानिर्गमनप्रवेशविधिना पश्येन्द्रजालं कृतम्॥१६७॥

कारण पूर्वकालिक तथा कार्य नियतरूप से पश्चात्कालिक होता है, यह कारण और कार्य का लक्षण प्रसिद्ध है। पर जब विशेष प्रतिपादन के लिए इन दोनों के इस स्वरूप का लोप हो जाता है तो अतिशयोक्ति होती है। और इस स्वरूप का लोप एक काल को लेकर और काल के विपर्यास को लेकर दो प्रकार का होता है जो अतिशयोक्ति के भी दो भेद कर देता है। क्रमशः उदाहरण—

(काल-साम्य-निबन्धना अतिशयोक्ति)

क्षत्रियों की मौलिक के मणिभूत राजन्! तुम्हारी इस सूक्ष्म तथा तीक्ष्ण खड्गधारा की राह को जब आविर्भूत गम्भीर विस्मयरस से विकसित-नयन-कमल होकर राजसमूह देख रहा था तो शत्रुओं की कीर्ति और श्री ने एक साथ हावभरा निर्गम और प्रवेश करके, देखो, इन्द्रजाल पैदा कर दिया है। १६७॥

कार्यकारणादिविरोधमूलत्वादिह पुनः कथनं प्रपञ्चाय। व्याचष्टे—इह नियतेति। एतद्रूपापगमः पौर्वापर्यनियमभङ्गः। द्वैविध्यमाह—एतद्रूपेति।

पश्यत्सूद्रुतेति। राजसु विस्मेरेषु पश्यत्सु तव खड्गे युगपत् कीर्त्या निर्गमनेन श्रिया प्रवेशेन चेन्द्रजालं कृतम्। अतः श्रीप्रवेशे कीर्तिनिर्गमहेतौ समकालोपनिबन्धः।

---

1. च—ना०, शा० शा१ नास्ति।
2. द्विविधा—ना०।
3. द्वैविध्येऽवस्थापयति—अ०।
4. उदाहरणम्—अ०।
5. नीलोत्पलं—नि०।
6. द्विषतां—अ० ना० (?)

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च।
नरि नरि किरति द्राक्सायकान्पुष्पधन्वा
पुरि पुरि च[1] निवृत्ता मानिनीमानचर्चा ॥१६८॥

पूर्वत्र प्रौढोक्तिनिर्मितेऽर्थे शत्रुश्रीप्रवेशः कीर्तिनिर्गमनस्य हेतुरिति भिन्नकालयोस्तुल्यकालत्वं निबद्धम्। उत्तरत्र च[2] माननिवृत्तिः [3]स्मरशरप्रकिरणकार्येति [4]तयोरुपपन्नं पौर्वापर्यं व्यत्ययेन निर्दिष्टमित्यतिशयोक्तिः। कार्यस्य चाशुभावाख्यो विशेषः प्रतिपाद्यते[5]।

(काल-विपर्यासनिबन्धना अतिशयोक्ति)

पथ पथ पर सुग्गे के चोंच-सी अंकुरों की हरीतिमा फैली हुई है। दिशा दिशा में लताओं का नर्तक वायु बह रहा है, पुरुष-पुरुष पर कुसुमसायक (काम) शीघ्रता से बाण चला रहा है। नगर-नगर में मानिनी की मान चर्चा समाप्त हो चुकी है। १६८॥

पहले (उदाहरण) में कविनिर्मित विषयवस्तु में शत्रुश्री के प्रवेश को कीर्ति के निर्गमन का हेतु बताया गया है अतः भिन्न काल को एक काल में रखा गया है। और दूसरे (उदाहरण में) काम द्वारा बाण चलाने (कारण) का कार्य 'मान का दूर होना' है अतः इन दोनों में पूर्वापरभाव सिद्ध है पर वर्णन उसके विपरीत हुआ है अतः अतिशयोक्ति है। और इससे कार्य माननिवृत्ति का शीघ्रतारूप विशेष-प्रयोजन प्रतिपादित होता है।

पथि पथीति। आभा प्रभा। लासको नर्तकः। नरि नरि पुंसि पुंसि। अत्र सायककिरणकार्यभूता माननिवृत्तिः प्राक् सिद्धत्वेनोक्ता। उभयत्र योजयति— पूर्वत्रेत्यादि। प्रौढोक्तिनिर्मित इन्द्रजालात्मकः। व्यङ्ग्यं विशेषमाह--कार्यस्य चेति।

कार्यकारणयोर्यौ तु कालसाम्यविपर्ययौ।
अन्या त्वतिशयोक्तिः सा विरोधांशोपजीवनात्॥

असङ्गत्यै सूत्रम्—

१. विनिवृत्ता—शा०।
२. तु—अ०।
३. °शरकिरण°—ना०।
४. तयोस्तुल्यत्वेनोपपन्नं—नि०।
५. प्रतिपाद्यः—शा० ना०।

[1]तयोर्विभिन्नदेशत्वेऽसंगतिः ॥सू० ४४॥

तयोरिति कार्यकारणयोः। यद्देशमेव कारणं, तद्देशमेव कार्यं दृष्टम्। [2]न हि महानसस्थो वह्निः पर्वतदेशस्थं धूमं [3]जनयति। यदा त्वन्यदेशस्थं कारणमन्यदेशस्थं [4]च कार्यमुपनिबध्यते, तदोचितसंगति-निवृत्तेरसंगत्याख्योऽलंकारः। स[5] च [6]विरोधिकार्यकारणभावप्रस्तावादिह लक्ष्यते। यथा—

प्रायः पथ्यपराङ्मुखा विषयिणो भूपा भवन्त्यात्मना
निर्दोषान्सचिवान्भजत्यतिमहाँल्लोकापवादज्वरः।
[7]वन्द्याः श्लाघ्यगुणास्त एव विपिने संतोषभाजः परं
बाह्योऽयं वरमेव सेवकजनो धिक्सर्वथा मन्त्रिणः ॥१६९॥

इन दोनों की भिन्न-देशता में असंगति होती है। सू० ४४॥

इन दोनों की अर्थात् कार्य और कारण की। जिस देश में कारण होता है उसी देश में कार्य दिखाई देता है। पाकशाला की अग्नि पर्वत-प्रदेश का धुंआ पैदा नहीं करती है। पर जब कारण तो दूसरे देश से सम्बद्ध होता है और कार्य दूसरे देश से तो उचित संगति न रहने के कारण असंगति नामक अलंकार कहलाता है। उसका यहाँ निरूपण कार्यकारणभाव के विरोध सन्दर्भ को लेकर किया गया है। उदाहरण—

विषयी राजा स्वयं ही पथ्य (हित) से प्रायः विमुख हो जाते हैं। दोषहीन सचिवों को लोकनिन्दा का बहुत बड़ा रोग घेर लेता है। वन्दनीय और प्रशंसनीय गुण वाले तो केवल जंगल में रहने वाले हैं, जिन्हें परम सन्तोष होता है। यह सेवक-समूह भी अच्छा ही है जो मन्त्रणा से बाहर है। पर मंत्रियों को तो सर्वथा धिक्कार है। १६९॥

"तयोर्विभिन्नदेशत्वेऽसङ्गतिः"

**व्याचष्टे—तयोरिति। उचितेति। समदेशत्वमुचितसङ्गतिः। असङ्गति-माह—विरोधीति।**

**प्रायः पथ्येति। प्रायेण भूपाः स्वतो हितपराङ्मुखाः विषयाक्रान्ता**

---

1. तयोस्तु भिन्न°—नि०। 2. न तु—अ०।
3. प्रमाणं नयति—शा० शा१। 4. च—ना० शा१ नास्ति।
5. स च—शा० शा१ नास्ति। 6. विरुद्ध°—नि०। 7. धन्याः—अ० शा०।

[१]अत्र [२]पथ्यपराङ्मुखत्वमुपालम्भविषयत्वस्य[३] भिन्नदेशहेतुरित्यसंगतिः । एवम्—

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् ।
सा क्लान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
[४]दोषैरन्यसमाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥१७०॥

इत्यत्र ज्ञेयम् । [५]अत्र बाल्यनिमित्तमप्रगल्भवचनत्वमन्यदन्यच्च स्मर[६]निमित्तकमित्यनयोरभेदाध्यवसायः । एवमन्यत्र ज्ञेयम् ।

यहाँ पथ्य से विमुख होना उपालम्भन-ज्वर के विषय बनने का भिन्नदेशीय हेतु है । इसी प्रकार—

वह बाला है, हमारी वाणी में प्रगल्भता नहीं है; वह स्त्री है कातर हम हैं । पीन और उन्नत पयोधर का बोझ वह बहन करती है, श्रान्ति हमें है । भारी जघनस्थली से क्लान्त वह है, पर चल हम नहीं पाते हैं; यह आश्चर्य है कि दूसरों में रहने वाले दोषों से हम असमर्थ हो गए हैं । १७० ॥

इसमें (असंगति अलंकार) समझ लेना चाहिए । एक तो किशोर अवस्था के कारण वाणी में प्रगल्भता का अभाव होता है और दूसरे काम-वासना के कारण इन दोनों का यहाँ अभेदाध्यवसाय है । इसी प्रकार दूसरे स्थानों पर भी समझ लेना चाहिए ।

**भवन्ति । लोकापवादस्तु निर्दोषान् सचिवानेति । विपिने सन्तोषभाजो मुनयः । यद्वा बाहचो मन्त्रानधिकृतः सेवकजनोऽवरः, मन्त्रिणस्तु धिक् । योजयति—अत्रेति । लोकापवादस्य पथ्यविमुखत्वं विभिन्नाश्रयो हेतुः । इत्थं वैचित्र्यान्तरेऽपि दर्शयति — एवमिति । सा बालेति । योजयति—अत्र चेत्यादि । निगमयति—एवमिति । अन्यत्र विच्छित्त्यन्तरे ।**

---

१. तत्र—शा१ ।

२. °मुपलम्भ°— अ० । °मुपालम्भ°—नि० ना० ।

३. °विषयित्वस्य— शा० शा१ ।

४. °समाश्रयैः—शा० ना० । समाश्रितै—शा१ । जनाश्रयैः—अ० ।

५. अत्र च—अ० ना० शा० ।

६. °मित्तमिति तयोः—अ० ।

**विरूपकार्याऽनर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम् ॥सू० ४५॥**

**विरोधप्रस्तावेनेह लक्षणम्। तत्र कारणगुणप्रक्रमेण कार्यमुत्पद्यत इति प्रसिद्धौ यद्विरूपं कार्यमुत्पद्यमानं दृश्यते, तदेकं विषमम्। तथा कंचिदर्थं साधयितुमुद्यतस्य न केवलं तस्यार्थस्याप्रतिलम्भो, यावदनर्थ-प्राप्तिरपीति द्वितीयं विषमम्। [1]अत्यन्ताननुरूपसंघटनयोर्विरूपयोश्च [2]संघ-टनं तृतीयं विषमम्। अननुरूपसंसर्गो हि विषमम्। क्रमेण यथा—**

**सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।**
**तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥१७१॥**

प्रतिकूल कार्य और अनर्थ की उत्पत्ति तथा प्रतिकूल की संघटना विषम है। सू० ४५ ॥

विरोध के प्रसंग से यहाँ (इसका) निरूपण किया गया है। कारण के गुण के अनुसार कार्य उत्पन्न होता है यह प्रसिद्ध होने पर भी जो प्रतिकूल कार्य उत्पन्न होता हुआ दिखाई देता है वह विषम का एक भेद है। तथा किसी इष्ट (अर्थ) की प्राप्ति में प्रवृत्त होने वाले को न केवल वह इष्ट प्राप्त न हो पर यदि अनिष्ट भी हो जाए तो यह विषम का दूसरा भेद है। अत्यन्त बेमेल तथा विपरीत स्वरूप वालों का संघटन तीसरा विषम है। क्योंकि विषम (का अर्थ) विरूप का सम्बन्ध होना है। क्रमशः उदाहरण—

(विरूपकार्योत्पत्तिरूप विषम)

तमाल की तरह नीली कृपाण-लेखा जिसके हाथों का विस्मयकारी स्पर्श पाकर हर संग्राम में शरत् के चन्द्र की भाँति धवल तीनों लोक का आभूषणभूत यश तुरन्त उत्पन्न कर देती है। १७१ ॥

**कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः।**
**अभेदाध्यवसायादिविच्छित्त्या दृश्यते च सा ॥**

**विषमार्थं सूत्रम् —**

**"विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसङ्घटना च विषमम्"।**

**कारणविरूपकार्योत्पत्तिरेकम्। अनर्थोत्पत्तिरन्यत्। अननुरूपयोः संघटना तृतीयम् इति त्रिधा विषमम्। सङ्गतिः—विरोधेति। व्याचष्टे-तत्र कारणेति। अननुरूपेति।**

**सद्य इति। करस्पर्शः पाणिग्रहः। नीलायाः पाण्डुरूपं कार्यम्।**

---

[1] अत्यर्थानि°—शा०। [2] संघटनात्—ना०।

तीर्थान्तरेषु मलपङ्कवतीर्विहाय
दिव्यास्तनूस्तनुभृतः सहसा लभन्ते ।
वाराणसि त्वयि तु मुक्तकलेवराणां
लाभोऽस्तु मूलमपि यात्यपुनर्भवाय ॥१७२॥

अरण्यानी क्वेयं धृतकनकसूत्रः क स मृगः
क्व मुक्ताहारोऽयं क च स पतगः क्वेयमबला ।
क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं
स्वमाकूतं धाता [1]किमपि निभृतं [2]पल्लवयति ॥१७३॥

अत्र कृष्णवर्णाच्छुक्लवर्णोत्पत्तिः, कलेवरात्यन्तापहारलक्षणानर्थान्तरोत्पत्तिः[3], अत्यन्ताननुरूपाणां चारण्यान्यादीनां परस्परं [4]संघटनं क्रमेण मन्तव्यम् । केवलमनर्थोत्पत्तिरत्र व्याजस्तुतिपर्यवसायिनीति

(अनर्थोत्पत्तिरूप विषम)

दूसरे तीर्थ में शरीरधारी (जीव) पातक से पंकिल शरीर को छोड़कर दिव्य शरीर तुरन्त प्राप्त कर लेते हैं। पर काशी ! तेरे यहाँ शरीर छोड़ने वालों को, लाभ तो जाने दो, मूल (शरीर) भी फिर लौट कर नहीं मिलता है। १७२ ॥

(विरूपसंघटनारूप विषम)

कहाँ तो यह (भीषण) जंगल और कहाँ सुवर्ण पहिने हुए वह हिरण ! कहाँ तो यह मुक्ताहार और कहाँ वह पक्षी ! कहाँ यह अबला ! और कहाँ ललित महीपति का वह कन्यारत्न और कहाँ हम ! विधाता अपने हृदय को छिपाछिपाकर प्रकट करता है। १७३ ॥

यहाँ क्रमशः (१) कृष्णवर्ण से शुक्ल वर्ण की उत्पत्ति (२) शरीर का सर्वथा विनाश-रूप दूसरे अनिष्ट की उत्पत्ति तथा (३) एकदम बेमेल विशाल वन आदि का परस्पर संसर्ग समझ लेना चाहिए। यहाँ (द्वितीय उदाहरण में) शुद्ध अनर्थोत्पत्ति है जिसकी व्याजस्तुति में विश्रान्ति है। अतः (विषम के)

**तीर्थेति । तीर्थान्तरेषु पातकपङ्किलास्तनूर्विहाय दिव्यास्तनूर्लभन्ते । वाराणसि त्वयि तु त्यक्ततनूनां तनुरप्यपुनर्भवाय याति । अत्र मूलनाशलक्षणानर्थोत्पत्तिः ।**

**अरण्यानीति । आकूतं हृदयम् । निभृतं गूढम् । पल्लवयति प्रकाशयति । अत्रारण्यादीनां विरूपाणामसंघटनीयानां संघटना । त्रिष्वपि योजयति—अत्र**

१. निभृत°—नि० ।
२. कन्दलयति—नि० ।
३. °पत्तिरिति—नि० ।
४. घटनं—शा१ ।

शुद्धोदाहरणमभ्यूह्यम्[1] । [2]यथा—

परहिअअं मग्गंतीइ हारिअं[3] [4]अत्तुणो उए हिअअं ।
[5]अंहो ल्लाहस्स कए मूलाओ विच्छेइआ[6] जाआ ॥१७४॥
[परहृदयं मार्गन्त्या हारितमात्मनस्त्वया हृदयम् ।
अहो लाभस्य कृते मूलविच्छेदिका जाता ॥]

इति तत्रोदाहार्यम् ।

**तद्विपर्ययः समम् ॥सू० ४६॥**

विषमवैधर्म्यादिह प्रस्तावः । यद्यपि विषमस्य भेदत्रयमुक्तं, तथापि तच्छब्देन [7]संभवादन्त्यो भेदः परामृश्यते । [8]पूर्वभेदद्वयविपर्ययस्यान-

असंकीर्ण उदाहरण की भी कल्पना कर लेना चाहिए । जैसे—

दूसरे के हृदय को खोजने में लगी तुमने तो अपना हिय भी हरा दिया । आश्चर्य है लाभ के फेर में (तुम) अपना मूल भी गँवा बैठीं । १७४ ॥

इस प्रसंग में उपर्युक्त उदाहरण दिया जाना चाहिए ।

सम इससे उल्टा होता है । सू० ४६ ॥

विषम के वैधर्म्य से यहाँ (इस अलंकार का) प्रकरण है । यद्यपि विषम के तीन भेद बताए गए हैं तथापि संभव होने के कारण (विषम का केवल) अन्तिम भेद ही 'इससे' (तत्) पद से समझा जाता है । प्रथम दो भेदों का

कृष्णेत्यादि । ननु मध्यमोदाहरणे व्याजस्तुतिपर्यवसानमित्यत आह—केवलमिति । स्तुतिनिन्दाच्छायापरित्यागे शुद्धं सुज्ञातत्वादभ्यूहितं शक्यम् ।

विरूपानर्थयोर्हेतोरुत्पत्तिर्विषमं मतम् ।
तथा विरूपघटना तेनेदं त्रिप्रभेदकम् ॥

समार्थं सूत्रम् –

"तद्विपर्ययः समम्" ॥

तृतीयभेदापेक्षया विषमविपर्ययः समम् । सङ्गतिपुरस्कारेण व्याचष्टे—विषमेत्यादि । अनलङ्कारत्वादिति । सरूपकार्यस्यार्थस्य चोत्पत्तौ न हि

---

१. °व्यूह्यम् – नि० ।
२. यथा—परहिअअं······जाआ—अ० नास्ति ।
३. आरिअं—नि० ।
४. अत्तणोत्तए—नि० ।
५. अव्यो—नि० । अव्वो—शा० ।
६. विछेइआ—नि० । इदं पद्यं संजीविनीकृताऽपि न व्याख्यातम् ।
७. सम्भवाद्—ना० नास्ति ।
८. पूर्वक° - अ० शा १ ।

लंकारत्वात्। अन्त्यभेदे[1] विपर्ययस्तु चारुत्वात्समाख्योऽलंकारः। स चाभिरूपानभिरूपविषयत्वेन[2] द्विविधः। आद्यो यथा—

त्वमेवंसौन्दर्या स च रुचिरतायाः[3] परिचितः
कलानां सीमान्तं[4] परमिह युवामेव भजथः।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वा-
मतः शेषं [5]यत्स्याज्जितमिह तदानीं गुणितया ॥१७५॥

अत्राभिरूपस्यैव नायकयुगलस्योचितं संघटनमाशंसितम्। द्वितीयो यथा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता।

विपर्यय अलंकार नहीं हो सकता है। किन्तु अन्तिम भेद का विपर्यय, विच्छित्ति होने के नाते, सम नामक अलंकार है। और वह विषय के अभिरूप तथा अनभिरूप होने से दो प्रकार का होता है। प्रथम जैसे—

(अभिरूप-विषयक सम)

तुम इतनी सुन्दर हो, वह भी सुन्दरता को पहिचानता है। कला की परम चरम-सीमा आप दोनों में ही है। इस (संसार) में अयि सुन्दरि! आप दोनों का यह जोड़ा सौभाग्य से आपस में मिलता है। अब जो शेष बचा है (विवाह) वह भी हो जाए तो इस संसार में सहृदयता की जीत हो जाएगी। १७५॥

यहाँ अभिरूप नायक-नायिका की जोड़ी के उचित संघटन की प्रशंसा की गई है। दूसरा (अनभिरूप-विषयक सम) जैसे—

ओह! ओह! आश्चर्य है, आश्चर्य है, बहुत आश्चर्य है, यह विचित्र है कि विधाता, भाग्य से, उचित रचना का विधाता बन गया क्योंकि चखना है नीम

विच्छित्तिः। द्वैविध्यमाह—स चेति। स चान्त्यो भेदः।

त्वमेवमिति। त्वमेवंविधसौन्दर्या, स च रुचिरतायाः परिचितः। युवां कलाभिज्ञौ च। शेषं पाणिग्रहणम्। तदा गुणवत्त्वं विशेषोत्कर्षि स्यात्। योजयति—अत्रेति। नायकेत्येकशेषः, नायको नायिका चेति।

चित्रं चित्रमिति। स्फीतिः स्फीतता। कोविदो निपुणः। योजयति—

---

१. °भेदवि°—नि० ना०। २. न—ना० नास्ति।
३. °याम्—अ० शा १। ४. सीमानं—अ०।
५. चेत्स्याज्जितमथ— अ०।

यन्निम्बानां परिणतफलस्फीतिरास्वादनीया[1]
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥१७६॥

अत्रानभिरूपाणां निम्बानां काकानां च समागम आशंसितः[2]। [3]आनुरूप्यात्समत्वव्यपदेशः।

विरोधमूलं विचित्रं लक्षयति—

**स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम् ॥सू० ४७॥**

यस्य हेतोर्यत्फलं, तस्य यदा तद्विपरीतं भवति, तदा तद्विपरीतफलनिष्पत्त्यर्थं कस्यचित्प्रयत्न उत्साहो विचित्रालंकारः। आश्चर्यप्रतीतिहेतुत्वात्। न चायं प्रथमो विषमालंकारप्रकारः। स्वनिषेधमुखेन

की पकी हुई निबौलियां और इसके लिए (विधाता ने) कौओं का यह संसार रच दिया है जो निगलने की कला में निपुण है। १७६॥

यहां एक दूसरे से बेमेल नीम और कौओं के समागम की प्रशंसा की गई है। अनुरूपता के आधार पर (इस अलंकार की) सम संज्ञा रखी गई है।

विरोधमूलक विचित्र का लक्षण दिया जाता है।

अपने (हेतु से) विपरीत फल की प्राप्ति के लिए प्रयत्न 'विचित्र' है। सू० ४७॥

जिस हेतु का जो फल होता है वह यदि उसके विपरीत हो तो उस (हेतु) से विपरीत फल की सिद्धि के लिए किसी का प्रयत्न या उत्साह विचित्र अलंकार है। क्योंकि (यह) आश्चर्य की प्रतीति का हेतु होता है। यह विषमालंकार का प्रथम भेद नहीं है। क्योंकि इसमें विपरीतता का ज्ञान स्व (अर्थात् हेतु) के निषेध द्वारा होता है जबकि विपरीत-प्रतीति के द्वारा अपना (अर्थात् हेतु)

अत्रेति। द्वयोरनभिरूपत्वम् आनुरूप्यम्।

सरूपयोः सङ्घटना समालंकार इष्यते।
श्लाघ्याश्लाघ्यत्वयोगेन द्वौ भेदावस्य सम्मतौ ॥

विचित्राय सङ्गतिः—विरोधेति। सूत्रम्—

"स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम्"।

विपरीतफलाय प्रयत्नो विचित्रम्। व्याचष्टे - यस्येति। (तदा?) तद्विपरी-

---

१. °स्फा (?) ति—शा० ना०।

२. प्रशंसितः - अ०। शंसितः - शा० ना० शा१।

३. अनुरूपत्वात्—ना० शा१।

वैपरीत्यप्रतीतेः। विपरीतप्रतीत्या तु स्वनिषेधस्तस्य विषयः। यथा 'तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते' इत्यादि[१]। इह त्वन्यथा प्रतीतिः। यथा—

घेत्तुं मुच्चइ[२] अहरो अण्णंतो वलइ पेक्खिउं दिट्ठी।
घडिदुं विहडंति भुआ रआअ सुरअम्मि वीसामो ॥१७७॥
[ग्रहीतुं मुच्यतेऽधरोऽन्यतो वलति प्रेक्षितुं दृष्टिः।
घटितुं विघटेते भुजौ रताय सुरतेषु विश्रमः ॥]

अत्र मोचनवलनविघटनविश्रमाणां यथाक्रमं ग्रहणप्रेक्षणघटनरमणानि विपरीतफलानि[3] प्रयत्नविषयत्वेन निबद्धानि। यथा वा

उन्नत्यै नमति प्रभुं प्रभुगृहान्द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया।

निषेध उस (विषमालंकार) का स्वरूप है। जैसे —'तमाल की तरह नीली " शरत् के चन्द्रमा की भाँति पाण्डु तथा तीनों लोकों के आभूषणरूप यश को फैलाती है।" आदि में। पर इस (विचित्रालंकार) में तो दूसरे प्रकार की प्रतीति होती है। जैसे —

पकड़ने के लिए, अधर छोड़ देते हैं (पुनः उन्हें) दूसरी ओर नजर मुड़ जाती है (पुनः) देखने के लिए, भुजाएं आलिंगन को छोड़ देती हैं आलिंगन करने के लिए; काम की क्रीड़ा में विश्राम होता है रति के लिए ॥१७७॥

यहां 'छोड़ने, मुड़ जाने, आलिंगन को छोड़ देने तथा विश्राम' के क्रमशः 'पकड़ना, देखना, आलिंगन करना तथा रति (इन) विपरीत फलों का वर्णन इस रूप में हुआ है कि वे प्रयत्न या उत्साह के विषय हैं। अथवा जैसे —

तृष्णा से अन्धा सेवक उन्नति के लिये स्वामी के सामने झुकता है, स्वामी के घर की देख भाल के लिए बाहर खड़ा रहता है। जड़बुद्धि (सेवक) भविष्य

ततेति। तस्य विपरीतफलस्येत्यर्थः। निर्वक्ति—आश्चर्येति। विषमप्रकाराद् वैलक्षण्यायाह—न चायमिति। इह हि स्वनिषेधो वैपरीत्यं गमयति। विषमे तु व्यत्ययः। उदाहरणतो द्रढयति—तमालेति। अत्र त्वन्यथा। घेत्तुमिति—

ग्रहीतुं मुच्यतेऽधरः अन्यतो वलते द्रष्टुं दृष्टिः।
घटितुं विघटेते भुजौ रतस्य (? रताय) सुरते विश्रमः ॥

योजयति - अत्रेत्यादि।

---

१. इत्यादौ—अ०। २. मुच्चइ—नि०। ३. °रीताफलानि—ना० शा०।

प्राणान्प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक्सेवकः ॥१७८॥

अत्र विपरीतफलनिष्पादनप्रयत्नः सुज्ञानः ।

आश्रयाश्रयिणोरानुरूप्यमधिकम् ॥सू० ४८॥

विरोधप्रस्तावादिह निर्देशः । [1]अनानुरूप्यस्य विरोधोत्थापकत्वात् । तच्चानानुरूप्यमाश्रयस्य वैपुल्येऽप्याश्रितस्य परिमितत्वाद्वा भवति,[2] यद्वाश्रितस्य वैपुल्येऽप्याश्रयस्य परिमितत्वाद्वा स्यात् । क्रमेण यथा—

में धन पाने की आशा से अपना धन खर्च कर देता है । प्राणों के लिए ही रण में प्राण गंवा देता है, भोग की लिप्सा से ही कष्ट सहन करता है । इस प्रकार सब कुछ विपरीत ही करता रहता है ॥१७८॥

इस (उदाहरण) में विपरीत फल की सिद्धि के लिए प्रयत्न सरलता से समझा जा सकता है ।

आश्रय और आश्रयी में अनुरूपता न होना 'अधिक' है । सू० ४८॥
यहां (इसका) निरूपण विरोध के प्रसंग से हुआ है क्योंकि अनुरूपता का न होना—अनानुरूप्य विरोध को जन्म देता है । यह अननुरूपता आश्रय के विशाल होने पर भी आश्रित के परिमित होने से होती है अथवा आश्रित के होने पर भी आश्रय के परिमित होने से होगी । क्रमशः उदाहरण –

उन्नत्यै इति । भोगेच्छया भोक्तुमित्यर्थः । योजनं स्फुटमित्याह —अत्रेति ।

प्रयत्नस्तु विचित्रं स्याद् विपरीतफलाप्तये ।
निषेधतो वैपरीत्याद् विषमालङ्कृतेर्भिदा ॥

अधिकार्थं सूत्रम्—

"आश्रयाश्रयिणोरनानुरूप्यमधिकम्" ।

आश्रयाश्रयिणोरन्यथावत्त्वमधिकम् । ससङ्गतिकं व्याचष्टे विरोधेत्यादि । आश्रयाधिक्यादाश्रय्याधिक्याच्च द्वैविध्यमाह तच्चेत्यादि ।

द्यौरत्रेति । द्यौः स्वर्गः । धरा पृथ्वी । जलाधाराः समुद्राः । तदवधिरिति निःशेषत्वोक्तिः । अहो कियत् इयत्तैव नास्तीत्यर्थः । पूरणं दूरेऽस्तु का पूरणकथेत्यर्थः । यावता शून्यमिति नाम्नोऽपि नास्तंगतिः काचित् ।

---

[1]. अत्रानु° ना० ।
[2]. भवति, यद्वा—अ० नास्ति ।

द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचि-
त्क्वाप्यत्रैव धराधराधरजलाधारावधिर्वर्तते[1]।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेवंविधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥१७९॥

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः
[2]द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-[3]
[4]भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥१८०॥

पूर्वत्र नभस आश्रयस्य वैपुल्येऽप्याश्रितानां द्युप्रभृतीनां पारिमित्यं[5] चारुत्वहेतुः। उत्तरत्र तु टंकारध्वनेराश्रितस्य महत्त्वेऽपि ब्रह्माण्डस्याश्रयस्य स्तोकत्वम्।

(आश्रयाधिक्यरूप अधिक)

यहां किसी जगह स्वर्ग आश्रित है, यहां किसी जगह पाताल फैला हुआ है, यहीं कहीं पृथ्वी, पर्वत और समूद्रों का समूह है, अहा यह आकाश कितना फैला-फैला है पर जिसका इस प्रकार से भी, पूरण तो जाने दो, शून्य नाम भी समाप्त नहीं हुआ है ॥१७९॥

(आश्रिताधिक्यरूप अधिक)

भुजदण्ड से चढ़ाए हुए शिव-धनुष के दण्ड के टूटने से उत्पन्न टंकार-ध्वनि आर्य (राम) के बालचरित की प्रस्तावना की डुग्गी है। तेजी से चक्कर लगाने से कपालसंपुट से संघटित होने वाला ब्रह्माण्ड-भाण्ड के मध्य में घूमने वाला पुंजीभूत पराक्रम, अहो आज तक भी क्यों विश्राम नहीं लेता है ? १८०॥

पहले (उदाहरण) में आश्रयभूत आकाश के विशाल होने पर भी आश्रित स्वर्ग आदि की परिमितता चारुता उत्पन्न करती है पर दूसरे (उदाहरण) में आश्रितरूप टंकार-ध्वनि के महान होने पर भी आश्रय ब्रह्माण्ड की लघुता (बताई गई) है।

**दोर्दण्डेति। आञ्चितमायमितम्। न त्वञ्चितमिति पाठः। गतिपूजनयोरनुपयोगात्। आञ्जिरायामार्थो धातुः। भ्राम्यंश्च पिण्डितचण्डिमा च योजयति—पूर्वत्रेति।**

---

१. °वलिर्वर्तते अ०। २. °पर्यास°—नि०। ३. °टलसद्°—अ०।
४. त्रस्यत्—शा०। ५. °पारिमित्ये—शा० ना०।

परस्परं क्रियाजननेऽन्योन्यम् ॥ सू० ४९ ॥

इहापि विरोधप्रस्ताव एव निर्देशकारणम्। परस्परजननस्य विरुद्धत्वात्। क्रियाद्वारकं यत्र परस्परोत्पादकत्वं, न स्वरूपनिबन्धनं, स्वरूपस्य तथात्वोक्तिविरोधात्, तत्रान्योन्याख्योऽलंकारः। यथा—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च[1] निस्तलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥१८०॥

अत्र शोभाक्रियाख्यापकं[2] परस्परजननम्।

क्रिया के परस्पर निष्पादन में अन्योन्य है। ॥ सू० ४९ ॥

यहां भी विरोध का प्रसंग ही (इस अलंकारके) निरूपण का कारण है। क्योंकि परस्पर उत्पादन विरोध भरा है। जहां परस्पर की जनकता (उत्पादकता या हेतुता) क्रिया के माध्यम से होती है, स्वरूप के आधार पर नहीं क्योंकि स्वरूप को इस प्रकार का (अर्थात् एक दूसरे का जनक) बताने में (अपरिहार्य) विरोध है वहां अन्योन्य नामक अलंकार होता है। जैसे—

उस (पार्वती) के कण्ठ का तथा स्तनों में ऊंचे नीचे गोलाकार मुक्ताहार का, एक दूसरे की शोभा पैदा करने के कारण, अलंकार्य और अलंकार का सम्बन्ध समान था ॥१८१॥

यहां शोभा क्रिया के द्वारा एक दूसरे की (शोभा की) निष्पादकता है।

अनानुरूप्यमधिकमाश्रयाश्रयिणोर्मतम्।
आश्रयाश्रयिवैपुल्यवशतो द्विप्रभेदकम् ॥

अन्योन्यार्थं सूत्रम् –

"परस्परं क्रियाजननेऽन्योन्यम्"।

क्रियाव्यतिहारेऽन्योन्यालङ्कारः। ससङ्गतिकं व्याचष्टे—इहापीत्यादि। न स्वरूपेति। स्वरूपापेक्षया परस्परजननस्यासम्भवेन सम्यग् विरोधित्वात् क्रियाद्वारकमेवेह परस्परजननम्।

कण्ठस्येति। तनुत्वरम्यत्वे देवीकण्ठस्यामोक्तृत्वे सामग्री मुक्ताकलापस्य च वृत्तत्वान्निस्तलत्वमामोचनीयत्वे। इत्थं द्वयोरपि सम्पन्नसामग्रीकत्वाद् भूषणभूष्यभावः साधारणः। योजयति अत्र शोभेति। क्रियामुखकं क्रियाद्वारकम्।

"क्रियाजननमन्योन्यमन्योन्यालङ्कृतिर्मता"।

---

[1] च—शा० नास्ति। [2] °क्रियामुखकं—अ० नि०।

**अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं[1] वि-शेषः ॥सू० ५०॥**

इहाधारमन्तरेणाधेयं न वर्तत इति स्थितावपि यस्तत्परिहारेणाधेयस्योपनिबन्धः, स एको विशेषः। यच्चैकं वस्तु परिमितं युगपदनेकधा[2] वर्तमानं क्रियते, स द्वितीयो विशेषः। [3]यच्च किंचिदारभमाणस्यासंभाव्यवस्त्वन्तरकरणं, स तृतीयो विशेषः। आनुरूप्यपरिहाररूपविरोधप्रस्तावादिहोक्तिः। क्रमेण यथा—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥१८२॥

प्रासादे सा [4]पथि पथि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा [5]दिशि दिशि च सा तद्वियोगातुरस्य।

आधेय का आधारहीन होना एक का अनेकगोचर होना तथा असम्भाव्य वस्त्वन्तर का निष्पादन 'विशेष' है ॥ सू० ५०॥

आधार के बिना आधेय नहीं रहता, यह होने पर भी उस (आधार) को छोड़कर आधेय का वर्णन विशेष का प्रथम भेद है। और एक परिमित वस्तु को एकसाथ अनेकत्र वर्तमान बताना दूसरा विशेष है। तथा किसी का तो प्रारम्भ हो और निष्पादन हो किसी अन्य असंभाव्य वस्तु का, वह तीसरा विशेष है। अनुरूपता को छोड़ देने से जो विरोध होता है उसका प्रसंग होने के नाते, यहां (विशेष का) निरूपण हुआ है। क्रमशः उदाहरण—

(आधारहीन आधेयरूप विशेषालंकार)

जो स्वर्ग जा चुके हैं पर जिनकी अनन्य गुणगान वाली वाणी जगत् को आनन्द देती रहती है वे कवि भला क्यों न वन्दनीय हों ॥१८२॥

(एक का अनेकगोचर होना—दूसरा विशेष)

प्रासाद पर वह और पथ-पथ पर वह, पीछे वह, आगे वह, पर्यंक पर वह

**विशेषार्थं सूत्रम्—**

**"अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः"।**

**दिवमपीति। दिवमुपयातानामपि गिरो जगन्ति रमयन्तीत्यनाधाराधेयता।**

---

१. करणं च—अ०। २. °नेकत्र—अ०। ३. च—शा१ नास्ति।
४. दिशि दिशि—ना०। ५. पथि पथि—ना०।

हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥१८३॥

निमेषमपि यद्येकं क्षीणदोषे[1] करिष्यसि ।
पदं चित्ते तदा शंभो किं न संपादयिष्यसि ॥१८४॥

अत्र कवीनामाधाराणामभावेऽप्याधेयानां गिरामवस्थितिरन्यत्रभावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात् । एकस्या एव योषितः प्रासादादौ युगपदवस्थानम्, तथा चित्तविषये पदकरणे प्रस्तुतेऽपि भावि[2] लोकोत्तरवस्तुसंपादनं क्रमेण ज्ञेयम् ।

दिशा-दिशा में वह; उसके वियोग से आतुर मेरे लिए तो मनकी कोई दूसरी प्रकृति नहीं रह गई है, वह, वह, वह, वह, वह, वह सारे संसार में है, कैसा अपूर्व है अद्वैत का यह सिद्धान्त ॥१८३॥

(असम्भाव्य वस्त्वन्तर का निष्पादनरूप विशेष)

यदि एक क्षण भी दोषमुक्त मन पर शिव ! तुमने अपना स्थान बन लिया तो भला क्या नहीं पूरा कर दोगे ? १८४॥

इन (उदाहरणों) में क्रमशः कवि-रूप आधारों के न रहने पर भी आधेय—वाणी—की अवस्थिति, अन्यत्र न रह पाना, विषयता को लेकर है अतः (कवि) विषयता के आधार पर उन (वाणी) के आधार हैं। (दूसरे उदाहरण में) एक ही रमणी की प्रासाद आदि में एक साथ (चित्त में) अवस्थिति है । (तीसरे उदाहरण में) 'मन पर स्थान बना लेना' (यह) प्रसंग रहने पर भी लोकोत्तर वस्तु का निष्पादन समझना चाहिए ।

प्रासादे इति । अत्रैकस्या अनेकगोचरता । निमेषमपीति । अत्र सर्वसम्पादनात्मनोऽशक्यवस्त्वन्तरस्य करणम् ।

त्रिष्वपि योजयति—अत्र कवीनामिति । येषामिति षष्ठीनिर्देशेऽपि न गीर्भिः सह सम्बन्धमात्रम् अपि तु विशिष्टः सम्बन्ध इत्याह—अनन्यत्रेत्यादि । भावि । लोकोत्तरेति । किंशब्देन नञा चाक्षिप्तोऽर्थः ।

---

1. न दोषं करिष्यति—शा० ।
2. भावि°—नि०, शा (?) नास्ति ।

**यथा साधितस्य तथैवान्येनान्यथाकरणं व्याघातः ।।सू० ५१।।**

[१]कंचिदुपायविशेषमवलम्ब्य केनचिद्यन्निष्पादितं [२]वस्तु, तत्ततोऽन्येन केनचित्तत्प्रतिद्वन्द्विना तेनैवोपायविशेषेण यदन्यथा क्रियते, स निष्पादितवस्तुव्याहतिहेतुत्वाद्व्याघातः । यथा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः [३]स्तुवे [४]चारुलोचनाः ।।१८५।।

[५]अत्र दृष्टिलक्षणेनोपायेन [६]स्मरस्य हरेण दाहविषयत्वं [७]निष्पादितम् । मृगनयनाभि[८]स्तेनैवोपायेन तस्य जीवनीयत्वं[९] क्रियते । तच्च दाहविषयत्वस्य प्रतिपक्षभूतम् । तेन व्याघाताख्योऽयमलंकारः । सोऽपि

एक प्रकार से निष्पन्न हुए का उसी प्रकार से दूसरे द्वारा अन्यथा निष्पादन व्याघात है ।।सू० ५१।।

जिस किसी उपाय-विशेष को लेकर किसी के द्वारा जो वस्तु सम्पादित है, उसका उससे भिन्न किसी दूसरे के द्वारा – जो उसका प्रतिद्वन्दी है—उसी उपाय-विशेष के सहारे जो अन्यथा निष्पादन है वह सम्पादित वस्तु की व्याहति के कारण व्याघात कहलाता है । जैसे—

नेत्र से भस्मीभूत काम को जो नेत्र से ही जिला देती हैं, विरूपाक्ष (शिव) को जीतने वालीं उन वाम-लोचनाओं की स्तुति करते हैं ।।१८५।।

यहाँ नेत्ररूप उपाय से काम को शंकर ने भस्मीभूत किया था । मृगांगनाओं ने पुनः उसी उपाय से उसे जीवित कर दिया । यह जीवित होना—भस्मीभूत होने का विरोधी या प्रतिद्वन्दी है । अतः यह व्याघात नामक अलंकार

**अनाधारादिभेदेन विशेषोऽपि त्रिधा मतः ।**

**व्याघातार्थं सूत्रम्—**

**"यथा साधितस्य तथैवान्येनान्यथाकरणं व्याघातः" ।**

**एकेन यद् यथा साधितं तस्य तथैवान्यथाकरणं व्याघातः । व्याचष्टे—किञ्चिदित्यादि ।**

**दृशेति । दृशा दग्धस्य दृशैव जीवनाच्चारुलोचना विरूपाक्षस्य जयिन्यः । योजयति – अत्र दृष्टीति । जीवनीयत्वं प्राणितव्यत्वं जीवनमित्यर्थः ।**

---

१. °यं कं—नि० । २. वस्तु—शा० ना० नास्ति । ३. स्तुमो —नि० ।
४. वाम—नि० । ५. इति —ना० । ६. स्मरस्य—शा० नास्ति ।
७. सम्पादितम्—ना० । ८. भिः पुनस्त°—अ० ।
९. जीवनविषयत्वम्—अ० । जीवनीत्वम्—ना० ।

व्यतिरेकनिमित्तत्वेनात्रोक्तः। विरूपाक्षस्येति[१] चारुलोचना[२] इति [३]च व्यतिरेकगर्भावेव वाचकौ। जयिनीरिति व्यतिरेकोक्तिः। पूर्ववदिह प्रकरणे[४] लक्षणम्।

प्रकारान्तरेणाप्ययं भवतीत्याह—

**सौकर्येण कार्यविरुद्धक्रिया च[५] ॥सू० ५२॥**

[६]व्याघात इत्येव। किंचित्कार्यं निष्पादयितुं संभाव्यमानः कारणविशेषस्तत्कार्यविरुद्ध-[७]परिनिष्पादकत्वेन यत्स समर्थ्यते, सोऽपि संभाव्यमानकार्यव्याहतिनिबन्धनत्वाद्व्याघातः। कार्यविरुद्धकार्यनिष्पत्तिश्च[८] कार्यापेक्षया

है। इसका निबंधन भी व्यतिरेक को निमित्त बनाकर हुआ है। विरूपाक्ष तथा वामलोचना ये दोनों ही शब्द व्यतिरेकगर्भित हैं। 'जीतने वाली' यह भी व्यतिरेक का अभिधान है। पहले की भाँति इस (विरोध के) प्रकरण में (प्रस्तुत अलंकार का) स्वरूप बतलाया गया है।

दूसरे प्रकार से भी यह (अलंकार) होता है, यह बताते हैं—

सुकरता के साथ कार्य के विपरीत क्रिया भी (व्याघात है) ॥सू० ५२॥

(यह भी) व्याघात ही है। किसी कार्य को साधने के लिये सम्भावित हेतु-विशेष का उस कार्य से विरुद्ध साधक के रूप में जो समर्थन किया जाए, वह भी संभावित कार्य की व्याहति को लेकर होने के कारण व्याघात है।

अयं चात्र व्यतिरेकहेतुरित्याह—सोऽपीति। विरूपाक्षचारुलोचनाशब्दौ हि व्यतिरेकगर्भौ। जयेन च व्यतिरेक उक्तः। सङ्गतिमाह—पूर्ववदिति। अनानुरूप्यमिह लक्षणं प्रकरणस्य।

यथा साधनमेकेन तथैवान्येन बाधनम्।
व्याघातोऽथ विरुद्धस्य सौकर्येण क्रिया तथा॥

तत्र सूत्रान्तरम्—

"सौकर्येण कार्यविरुद्धक्रिया च"।

कार्यापेक्षया सुकरस्य विरुद्धस्य करणं कार्यव्याहतिहेतुरिति व्याघातान्तरम्।

---

१. इति—शा० ना० शा१ नास्ति। २. वाम°—नि०।
३. च—शा० ना० शा१ च व्यतिप्रकरे°— नि० नास्ति।
४. रणम्—नि०। ५. च व्याघातः—नि०।
६. व्याघाताख्य इत्येव—शा१। 'व्याघात इत्येव' इयानंशो—नि० नास्ति।
७. °परि°—उपसर्गः अ० नि० नास्ति। ८. कार्यविरुद्धनिष्पत्तिः—शा०।

सुकरा। तस्य कारणस्यात्यन्तं तदानुगुण्यात्। न त्वत्र कार्याभिमतस्य कार्यत्वाभावः। तद्विरुद्धस्यात्र सौकर्येण कार्यत्वात्। अत एव द्वितीयाद्विषमाद्भेदः। तत्र हि कार्यस्यानुत्पत्तिरनर्थस्य चोद्गमनम्। इह तु कार्यं[1] सुखकार्यमेव न भवति। [2]तद्विरुद्धस्यानर्थस्य व्यतिरेकिणोऽप्यत्र सुष्ठुकार्यत्वात्। [3]यथा हर्षचरिते राज्यवर्धनं प्रति श्रीहर्षोक्तिषु —

'यदि बाल इति, सुतरामपरित्याज्योऽस्मि। रक्षणीय इति, भवद्भुजपञ्जरमेव रक्षास्थानम्' इत्यादि।

(संभावित) कार्य के विरुद्ध (दूसरे) कार्य का साधन सुकर इसलिए होता है क्योंकि इस कारण की उस (दूसरे कार्य) से अत्यधिक अनुरूपता रहती है। इस (अलंकार) में कार्यरूप में अभीष्ट की कार्यता समाप्त नहीं होती है अपितु उससे विपरीत (कार्य) का सुकरता से सम्पादन हो जाता है। इसी आधार पर द्वितीय विषम से (इसका) भेद है। उसमें तो कार्य की उत्पत्ति नहीं होती और साथ ही अनर्थ उत्पन्न हो जाता है। पर इस (अलंकार) में न केवल कार्य साध्य होता है बल्कि उसके विरोधी अनर्थ रूप व्यतिरेक का भी सुकरता से साधन हो जाता है। जैसे कि हर्षचरित में राज्यवर्धन के प्रति हर्ष की उक्तियों में —

अगर बालक हूँ, तो निश्चित ही (मुझे) छोड़ना नहीं चाहिए। रक्षणीय हूँ, अतः आप का भुजारूपी पिंजड़ा ही रक्षा का स्थान हो सकता है·········इत्यादि।

व्याचष्टे व्याघात इत्यादि। अयं लक्ष्यपदानुषङ्गः। कार्यार्थं सम्भावितस्य कारणविशेषस्य तद्विरुद्धनिष्पादनं व्याघातः। विरुद्धनिष्पत्तिश्च सुकरा कारणस्य विशिष्टानुगुण्यात्। इत्थं च सत्यनर्थोत्पत्तिलक्षणाद् विषमाद् भेद इत्याह—न त्वत्रेति। न ह्यत्र कार्यमकार्यं किन्तु तद्विरुद्धं सुकरं कार्यम्। अतो द्वितीयविषमाद् भेदः। यतस्तत्र कार्यमकार्यं, विरुद्धत्वेऽनर्थः। इहोभयमपि कार्यमिति। यदि बाल इतीति। अत्र बाल्यं रक्ष्यत्वं चाप्रस्थाने हेतुत्वेन सम्भावितं प्रत्युत सौकर्येण प्रस्थानं साधयति।

---

१. कार्यमकार्यमेव°—नि० ना०, 'एव' अ० नास्ति।

२. °र्थव्य°—अ०।

३. 'यथा' स्थाने 'उदाहरणम्' अ०।

अत्र राज्यवर्धनेन[१] श्रीहर्षप्रस्थापने कार्ये बाल्यरक्षणीयत्वादि कारणत्वेन यत्संभावितं, [२]तत्प्रत्युताप्रस्थापनकारणत्वेन[३] सुकरतया [४]श्रीहर्षेण राज्यवर्धनस्य समर्थितमिति [५]व्याघाताख्योऽलंकारः।

एवं विरोधमूलानलंकारान्निर्णीय शृङ्खलाबन्धोपचिता[६] अलंकारा लक्ष्यन्ते। तत्र—

[७]पूर्वस्य पूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला ।।सू० ५३।।

यदा पूर्वं पूर्वं क्रमेणोत्तरमुत्तरं प्रति [८]हेतुत्वं भजते तदा कारणमालाख्योऽयमलंकारः[९]। यथा—

यहाँ राज्यवर्धन ने श्रीहर्ष के प्रस्थान-कार्य के लिए शैशव, रक्षणीयता आदि जिनको कारण माना था, उन्हीं को श्रीहर्ष ने राज्यवर्धन के प्रस्थान न करने का कारण, सुकरता से, बना दिया है अतः व्याघात नामक अलंकार है।

इस प्रकार विरोधमूलक अलंकारों का निर्णय करने के बाद शृंखलाबन्ध पर आश्रित अलंकारों का निरूपण किया जा रहा है। इनमें से—

पूर्व-पूर्व के उत्तरोत्तर का हेतु होने पर कारणमाला होती है ।।सू० ५३।।

जब पूर्व-पूर्व क्रमशः उत्तर-उत्तर के लिए कारण बन जाता है तो कारणमाला नामक अलंकार होता है। जैसे—

सङ्गत्यन्तरमाह—एवमिति। तत्र कारणमालार्थं सूत्रम्—

"पूर्वपूर्वस्योत्तरहेतुत्वं कारणमाला"।

व्याचष्टे—यदा पूर्वमित्यादि।

---

१. °नस्य—अ० शा०।

२. प्रत्युत प्रस्थापन°—शा० ना० शा१।

३. प्रस्थापनलक्षणस्य विरुद्धस्य कारण°—अ०।

४. श्रीहर्षेण राज्यवर्धनस्य—इयानंशो अ० नास्ति।

५. व्याघातोऽलं°—अ०।

६. °बन्धेन विचित्रिताः—अ०, शा (?)। °बन्धोपचित्रिता—शा१।

७. पूर्वपूर्वस्यो°—अ०।

८. °हेतुतां—ना० शा१।

९. °ख्योऽलंकार—ना० शा०।

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
[१]गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥१८६॥

कार्यकारणक्रम [२]एवात्र चारुत्वहेतुः ।

**यथापूर्वं परस्य विशेषणतया [३]स्थापनापोहने एकावली ॥सू० ५४॥**

यत्र पूर्वं पूर्वं प्रति क्रमेण परं परं [४]विशेषणत्वमनुभवति स एका-[५]वल्यलंकारः । विशेषणत्वं च स्थापनेन निवर्तनेन बा । स्थापनेन यथा—

[६]पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥१८७॥

इन्द्रियों को जीत लेना विनय का कारण है, गुणों की वृद्धि विनय से प्राप्त होती है, गुणों की वृद्धि से प्रजा प्रेम करती है । और जनता के अनुराग से ही समृद्धियाँ पैदा होती हैं ॥१८६॥

इसमें कारण तथा कार्य का क्रम ही सौन्दर्य का आधार है ।

प्रथम के अनुसार पर का विशेषणरूप में स्थापन या अपोहन एकावली है ॥सू० ५४॥

जहाँ पूर्व-पूर्व के लिए क्रमशः परवर्ती-परवर्ती विशेषण होने की प्रतीति करता है वह एकावली अलंकार है । स्थापन या निवर्तन (अपोहन) से विशेषणता होती हैं । स्थापन का उदाहरण—

जहाँ नगर कामिनियों से भरे थे, कामनियों के अंग सौन्दर्य से भूषित थे, सौन्दर्य रमणीय विलास से उल्लसित था और विलास कामदेव का अस्त्र था ॥१८७॥

**जितेन्द्रियत्वमिति । जितेन्द्रियत्वाद् विनयः, विनयाद् गुणप्रकर्षः, ततो जनानुरागः । अत्र सारादिविच्छित्त्यन्तरसम्भवेऽपि नालङ्कारान्तरमित्याह— कार्यकारणेति ।**

**कार्यकारणमालायां प्राचः प्राचः परं परम् ।**

**एकावल्यै सूत्रम्—**

---

१. गुणाधिके पुन्सि जनो—शा१ । २. एव चात्र—ना० शा० ।
३. स्थापनेऽपोहने वा—अ० ।
४. परं प्रति—शा० । ५. वल्याख्योलं°—ना० ।
६. गृहाणि—अ० शा१ (?) ।

अत्र वराङ्गनाः [1]पुराणां विशेषणं स्थापनीयत्वेन स्थितम्। एवं वराङ्गनानां रूपमित्यादि ज्ञेयम्। निवर्तनेन यथा—

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं [2]यन्न निलीनषट्पदम्
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥१८८॥

अत्र जलस्य सुचारुपङ्कजत्वं विशेषणं निषेध्यत्वेन निबद्धम्[3]। एवं [4]पङ्कजादीनां निलीनषट्पदत्वादि[5] ज्ञेयम्।

इसमें कामिनियां नगरों के स्थापनीयरूप में विशेषण हैं। इसी प्रकार कामनियों के सौन्दर्य आदि का भी (क्रमशः विशेषण बनना) समझ लेना चाहिए। निवर्तन (अपोहन) का उदाहरण—

वह डाल नहीं जिसमें सुन्दर कमल न हो, वह कमल नहीं जिसमें भ्रमर न बैठा हो, वह भ्रमर नहीं जो मधुर गुंजार न करता हो और वह गुंजार नहीं जो मन न हर ले ॥१८८॥

इसमें जल का 'सुन्दर कमल' होना निषेध्य (निवर्तनीय) विशेषण के रूप में है। इसी प्रकार 'जिसमें भ्रमर न बैठा हो' आदि को कमलों का (निषेध्य विशेषण) समझ लेना चाहिए।

"यथापूर्वं परस्य विशेषणतया स्थापनेऽपोहने वैकावली"।

यदि पूर्वपूर्वस्य परं परं विशेषणतया स्थाप्यते सैका एकावली। यच्चापोह्यते सान्या।

पुराणीति। अत्र पुराणां वराङ्गनाः, तासां रूपं, तस्य विलासः कुसुमायुधस्य विशेषणतया स्थाप्यते। योजयति—अत्र वराङ्गना इति।

न तज्जलमिति। अत्र जलादेः पूर्वपूर्वस्य पङ्कजाद्युत्तरोत्तरं विशेषणमपोह्यतया स्थितम।

एकावल्यां यथापूर्वं भेदकं तूत्तरोत्तरम्।
स्थाप्यते ऽपोह्यते चैव तेनेयं द्विविधा मता॥

---

१. गृहाणाम्—अ०, नगराणाम् (?) शा१।
२. 'तद् यदलीनषट्पदत्वं—अ० नि०।
३. स्थितम्—नि०।
४. °पङ्कजानामलीनषट्पदत्वं—नि०। °अलीन—अ०।
५. °पदत्वनित्यादि - शा० ना०।

**[1]पूर्वस्य पूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम् ॥सू० ५५॥**

उत्तरोत्तरस्य पूर्वं पूर्वं प्रत्युत्कर्षहेतुत्वे एकावली। पूर्वस्य पूर्वस्योत्तरोत्तरोत्कर्षनिबन्धनत्वे तु[2] मालादीपकम्। मालात्वेन चारुत्वविशेषमाश्रित्य दीपकप्रस्तावोल्लङ्घनेनेह लक्षणं कृतम्। गुणावहत्वमुत्कर्षहेतुत्वम्। यथा—

[3]संग्रामाङ्गणसंगतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्
तेन त्वं भवता च कीर्तिरमला[4] कीर्त्या च लोकत्रयम्[5] ॥१८९॥

पूर्व-पूर्व द्वारा उत्तरोत्तर में गुणों का निबंधन होने पर मालादीपक होता है ॥सू० ५५॥

उत्तरोत्तर के पूर्व-पूर्व के प्रति श्रीवृद्धि का हेतु होने पर एकावली होती है तो पूर्व-पूर्व के उत्तरोत्तर के प्रति उत्कर्ष का कारण बनने पर मालादीपक होता है। माला के रूप में एक विशेष सौन्दर्य होता है जिसके आधार पर दीपक के प्रकरण को छोड़कर यहाँ (इसका) स्वरूप-निरूपण किया गया हैं। गुणों के निबन्धन का अर्थ है उत्कर्ष का कारण बनना। उदाहरण—

युद्धस्थल में आप जब धनुष-बाण चढ़ा लेते हैं तो देव! सुनो कौन-कौन क्या-क्या सहसा ही पा जाता है, धनुष बाण को, बाण शत्रुओं के सिर को, और वे (शिर) भूतल को और वह (भूतल) आपको और आप धवल यश को और यश तीनों लोकों को (पा जाता है) ॥१८९॥

**मालादीपकार्थं सूत्रम्—**

**"पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम्"**

**एकावल्यामुत्तरोत्तरस्य पूर्वपूर्वगुणावहत्वमिह तु व्यत्ययः। व्याचष्टे—उत्तरस्येति। प्रस्तावोल्लंघने हेतुमाह—मालात्वेनेति।**

**सङ्ग्रामेति। अत्र कोदण्डादेः पूर्वपूर्वस्य शराद्युत्तरोत्तरसमासादनं दीप-**

---

१. पूर्वपूर्व°—अ०।

२. अत्रायं 'तु' अ० पुस्तके 'पूर्वस्य तूत्तर°' इति स्थलेऽस्ति।

३. °णमागतेन—नि०।    ४. तुला—नि०।

५. पद्यमिदम् अ० पुस्तके किञ्चिद्भेदेनेत्थं प्राप्यते—

अत्र कोदण्डादिभिः क्रमेण शरादीनामुत्कर्षो विहितः[1]। समासादन[2]-लक्षणक्रियानिबन्धनं च दीपकं, [3]दीपनविषयाणामुत्तरोत्तराभिमतत्वेन कृतम्।

**उत्तरोत्तरमुत्कर्षः सारः[5] ॥सू० ५६॥**

**पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कृष्टत्वनिबन्धनं सारः। यथा—**

इसमें धनुष आदि से क्रमशः बाण आदि के उत्कर्ष का विधान है। 'पा जाना' के रूप में (एक) क्रिया द्वारा निबद्ध दीपक का प्रयोग, दीपन के कार्यों को उत्तरोत्तर अभिमत बनाकर, किया गया है।

उत्तरोत्तर उत्कर्ष 'सार' है ॥सू० ५६॥

पूर्व-पूर्व की अपेक्षा उत्तरोत्तर में उत्कर्ष का ग्रथन सार (अलंकार) है। उदाहरण—

**नेन गुणावहत्वम्। व्याचष्टे—अत्र कोदण्डादिभिरिति।**

**मालादीपकमाद्याद्यस्योत्तरोत्तरदीपनम्।**

**सारार्थं सूत्रम्—**

**"उत्तरोत्तरमुत्कर्षः सारः"**

**व्याचष्टे—पूर्वपूर्वेति। निबन्धनं ग्रथनम्।**

---

'संग्रामाङ्कणसंगतेन भवता चापे समारोपिते
सम्प्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादिताः।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं नृपते! त्वया सितयशस्तेनापि लोकत्रयम्॥'

१. अभिहितः—अ०। २. °क्रियालक्षण°

३. दीपनम्—इति ना० पुस्तके स्खलिततया अशुद्धः पाठः।

४. °क्रियाणा°—नि०।

५. सारालङ्कारोऽयं नि० पुस्तके 'उदार' नाम्ना व्यपदिष्टः। तत्रायं पाठः 'उत्तरोत्तरमुत्कर्षणमुदारः।' सारस्यैवापराभिधानमुदार इति तत्रत्या टिप्पणी। किन्तु 'उदार'नामापेक्षया 'सार'नाम्नः स्वीकार एव प्रमाणवलाज्ज्यायान्। मया परीक्षितानामादर्शपुस्तकानाम्, अ० पुस्तकस्य, खसंज्ञकस्य च (यस्योपयोगः निर्णयसागरीयसर्वस्वसम्पादकेन कृतः) 'सार'इति नामस्वीकारे ऐकमत्यम्। जयरथोऽपि स्वव्याख्यायां प्रकृतालङ्कारबीजं किमिति निर्णीय स्वोक्तार्थं प्रमाणयितुं

[१]जये धरित्र्याः पुरमेव सारं पुरे गृहं सद्मनि चैकदेशः ।
तथापि शय्या शयने वराङ्गी[२] रत्नोज्ज्वला राज्यसुखस्य सारम् ॥१९०॥
राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥१९१॥

[३]अत्र धरित्र्यपेक्षया पुरस्य सारत्वमेवं पुरापेक्षया तदेकदेशस्य गृहस्येत्यादि योजनीयम् ।

धरती की विजय में नगर ही सार है, नगर में भी घर और घर में भी इसका एक कोना, उसमें भी शय्या और शय्या में भी रत्न की भाँति उज्ज्वल सुन्दरी ही राज्य के सुख का सार है ॥१९०॥

राज्य का सार धरती और धरती का पुर, पुर का प्रासाद, प्रासाद का शय्या और शय्या का सार है काम का सर्वस्व-भूत सुन्दरी ॥१९१॥

इसमें धरती की अपेक्षा पुर को सार बताया गया है । इसी प्रकार पुर की अपेक्षा उसके एक अंश घर को, इस प्रकार से योजना कर लेनी चाहिए ।

*राज्य इति । सारमित्यत्र वस्त्वित्याद्यध्याहर्तव्यम् । इतरथा लिङ्गासङ्गतिः । योजयति—अत्र राज्य इति ।

उत्तरोत्तरमुत्कर्षावहत्वे सार इष्यते ।

---

साराभिधस्यैवालङ्कारस्य लक्षणान्तरमुपादत्ते—'यदुक्तम्—उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ।' अग्रेऽपि नाममात्रनवीकरणरसिकानां केषामपि मतमनङ्गीकुर्वन् 'सार'शब्देनैव प्रकृतमलङ्कारं स्मरति—'न पुनरिदमन्तर्भूतं सारे परिमितविषये'—इत्यादिना ।

१. पद्यमिदं अ० शा१ नास्ति । २. वरा स्त्री—नि० ।

३. 'अत्र धरित्र्यपेक्षया······योजनीयम्'—अयमंशः 'जये धरित्र्याः' इत्यादिपद्यानन्तरमेव नि० पुस्तकेऽस्ति । 'राज्ये सार'मित्यादिपद्यानन्तरञ्च नि० पुस्तकेऽयमधिकः पाठः—

'अत्र राज्यापेक्षया वसुन्धरायाः सारत्वमेवं वसुधापेक्षया तदेकदेशस्य पुरस्येत्यादि योजनीयम्' ।

अ० शा१ पुस्तकयोरप्ययमत्र पाठः—

'अत्र राज्यापेक्षया वसुधायाः सारत्वं, वसुधापेक्षया पुरस्य' ।

* 'जये धरित्र्या' इत्यादिपद्यं सञ्जीविन्यां नोपात्तम् ।
अत्र केवलं 'राज्ये सार'मित्याद्येव वर्तते ।

एवं शृङ्खलाविच्छित्त्यालंकाराः[1] प्रतिपादिताः। अधुना तर्कन्यायाश्रयेणालंकारद्वयमुच्यते। तत्र—

**हेतोर्वाक्यपदार्थत्वे[2] काव्यलिङ्गम् ॥सू० ५७॥**

यत्र हेतुः कारणरूपो वाक्यार्थगत्या विशेषणद्वारेण वा[3] पदार्थगत्या लिङ्गत्वेन निबद्ध्यते, तत्काव्यलिङ्गम्। तर्कवैलक्षण्यार्थं काव्यग्रहणम्। न ह्यत्र व्याप्तिपक्षधर्मतोपसंहारादयः[4] क्रियन्ते। वाक्यार्थगत्या च निबध्यमानो हेतुत्वेनैवोपनिबद्धव्यः, नोपनिबद्धस्य हेतुत्वम्। अन्यथार्थान्तरन्यासान्नास्यभेदः स्यात्[5]। [6]क्रमेणोदाहरणम्—

इस प्रकार शृंखलाबन्ध की सुन्दरता द्वारा अलंकारों का प्रतिपादन हो गया। अब तर्कन्याय के आधार पर अलंकारों का निरूपण किया जाता है। इनमें से—

हेतु के वाक्य या पद का अर्थ होने पर काव्यलिंग होता है ॥सू० ५७॥

जहाँ कारणरूप हेतु का वाक्यार्थ के रूप में अथवा विशेषण के द्वारा पदार्थ के रूप में उपादान होता है, वह काव्यलिंग है। तर्क से भिन्नता बताने के लिए 'काव्य' का प्रयोग किया गया है क्योंकि इसमें व्याप्ति, पक्षधर्मता तथा उपसंहार आदि नहीं होते हैं। जहाँ वाक्यार्थ के माध्यम से (हेतु का) उपादान हो वहाँ हेतुरूप में ही निबन्धन होना चाहिए, उपनिबद्ध (वाक्यार्थ) को हेतु नहीं बनना चाहिए (अर्थात् हेतु का निबन्धन शाब्द होना चाहिए आर्थ नहीं), नहीं तो अर्थान्तरन्यास से इसका भेद नहीं किया जा सकेगा। क्रमशः उदाहरण—

सङ्गत्यन्तरायाह—एवं शृङ्खलेति। तत्र काव्यलिङ्गार्थं सूत्रम्—

"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्"।

वाक्यार्थपदार्थरूपे हेतौ द्विधा काव्यलिङ्गम्। व्याचष्टे—यत्र हेतुरिति। वैलक्षण्यं दर्शयति—न ह्यत्रेति। अनुपाधिकः सम्बन्धो व्याप्तिः। हेतोः पक्षे स्थितिः पक्षधर्मता। उपसंहारो निगमनम्। आदिशब्दादुपनयादि। वाक्यार्थत्वे विशेषमाह—वाक्यार्थगत्येति। अनेन हेतुत्वस्य शाब्दत्वनियम उक्तः। आर्थत्वेऽर्थान्तरन्यासप्राप्तिरित्याह—अन्यथेति। अर्थान्तरन्यासे

१. °वृत्त्याल°—अ०। २. °र्थता°—नि० ना०।
३. वा—ना० नास्ति। ४. °धर्मोप°—ना० शा०।
५. भवेत्—शा० ना०। ६. क्रमेण यथा—नि० शा०।

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥१९२॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥१९३॥

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुत्वेनोपन्यस्तः । उत्तरत्र तु[1] संबोधने 'व्यापारयन्त्यः' इति मृगीविशेषणत्वेनानेकः पदार्थो हेतुत्वेनोक्तः ।

(वाक्यार्थ काव्यलिंग)

प्रेयसि ! वह नील कमल, जिसमें तुम्हारे नेत्र के समान कान्ति है, जल में डूबा हुआ है । तुम्हारी मुखशोभा का अनुकरण करने वाले चन्द्रमा को बादलों ने छिपा लिया है । और वे राजहंस भी चले गए हैं जिनकी गति में तुम्हारी गति का अनुसरण था । (मालूम पड़ता है कि) तुम्हारे सदृश के साथ विनोद भी मेरे लिए विधाता को मंजूर नहीं है ॥१९२॥

(पदार्थ काव्यलिंग)

आम के अंकुरों से उदासीन, दक्षिण दिशा की ओर अपन निष्पलक नयनों से संकेत करने वाली हिरनियों ने तुम्हारे रास्ते से अनभिज्ञ मुझको संबोधित किया था ॥१९३॥

पहले (उदाहरण) में प्रथम तीन चरणों से निकलने वाला अर्थ—जो अनेक वाक्यों का अर्थ है—चतुर्थ चरण के हेतुरूप में रखा गया है (अर्थात् प्रथम तीन चरण अन्तिम चरण के हेतु हैं) । दूसरे (उदाहरण) में संकेत करने वाली—(व्यापारयन्त्यः) इस रूप में हिरनी के विशेषणरूप में आने वाले अनेक पदार्थ को संबोधन के लिए हेतुरूप में रखा गया है ।

ह्यर्थात् प्रकृतसमर्थनमिह तु शब्दत इति विभागः । यत् त्वन्नेत्रेति । नेत्ररुचिसमानरुच इन्दीवरस्य सलिले निमज्जनं मुखच्छायानुकारस्य शशिनो मेघैः छादनं गमनानुसारिगतीनां हंसानां पलायनं चेति वाक्यार्थत्रयमेकवाक्यतापन्नायां सादृश्यविनोदाक्षान्तौ हेतुः । मृग्य इति । दर्भनिर्व्यपेक्षत्वलोचनव्यापारणे सम्बोधने हेतुः । उभयत्र योजयति—पूर्वत्रेत्यादि ।

---

[1] तु—ना० शा० नास्ति ।

[1]एवमेकवाक्यार्थपदार्थगतत्वेन काव्यलिङ्गमुदाह्रियते । यथा—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्त्रिणः ॥ १९४॥

यद्विस्मयस्तिमितमस्तमितान्यभाव-
[2]मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव [3]व्यथमानमास्ते ॥ १९५ ॥

पूर्वत्र वरप्राप्तिहेतुभूततपोनिषेधे[4] 'मनीषिताः' इति वाक्यार्थ रूपो[5] हेतुर्निर्दिष्टः । उत्तरत्र पुनः 'अस्तमितान्यभावम्' इत्यत्र विस्मयस्तिमितमिति विशेषणद्वारेण पदार्थः[6] ।

इसी प्रकार (जैसे कि अनेक वाक्यार्थ और अनेक पदार्थ हेतु बन सकते हैं) एक वाक्यार्थ तथा (एक) पदार्थ में (हेतु के) रहने से काव्यलिंग का उदाहरण दिया जा रहा है ।

घर में मनचाहे देवता हैं । वत्से ! कहाँ तप और कहाँ तुम्हारा शरीर ! शिरीष का कोमल फूल भौंरे के चरण को सहन भी कर ले पर पक्षी का (चरण-भार) सहन नहीं कर सकता है ॥१९४॥

विस्मय में डूबा हुआ, दूसरे भावों को भुला देने वाला जो मेरा हृदय मानों सुधा की वर्षा से आनन्द से मन्थर बन जाता था वही मेरा हृदय आज उसके समीप में मानो अंगारों में लिपटा होने से जल रहा है ॥१९५॥

पहले में वर को पाने के लिए साधनभूत तप के निषेध का 'मनचाहे' इस वाक्यार्थ के रूप में हेतु का निर्देश है । और दूसरे में 'विस्मय में डूबा हुआ' यह पदार्थ 'दूसरे भावों को भुला देने वाला' इसका विशेषण के रूप में कारण है ।

**अथ वाक्यार्थपदार्थयोरेकैकयोर्हेतुत्वेनोदाजिहीर्षुराह—एवमेकेति । मनीषिता इति । अत्र तपोनिवारणे गृहेष्वपेक्षितदेवतासद्भावात्मा वाक्यार्थो हेतुः । यद्विस्मयेति । अत्रानन्दमन्दत्वे विस्मयस्तिमितत्वं च पदार्थो हेतुः । योजयति—पूर्वत्रेत्यादि ।**

---

१. एवमेव—ना० (?) ।　　२. °न्दसान्द्र°—ना० । °न्दमग्न—शा १ ।
३. क्वथमान°—अ० ।　　४. °धस्य—नि० ।
५. °भूतो°—अ० शा० ।　　६. पदार्थो हेतुर्निर्दिष्टः—ना० ।

**साध्य[१]-साधननिर्देशोऽनुमानम् ॥ सू० ५८ ॥**

**यत्र शब्दवृत्तेन[२] पक्षधर्मान्वयव्यतिरेकवत्साधनं साध्यप्रतीतये निर्दिश्यते, सोऽनुमानालंकारः। विच्छित्तिविशेषश्चात्रार्थादाश्रयणीयः। अन्यथा तर्कानुमानात्किं वैलक्षण्यं स्यात्[३]। उदाहरणम्—**

साध्य के लिए साधन का निर्देश अनुमान है ॥सू० ५८॥

जहाँ अभिधान के माध्यम से पक्षधर्मी, अन्वयी अथवा व्यतिरेकी साधन[४] (हेतु या लिंग) का निर्देश हो वह अनुमानालंकार है। इसका चमत्कारविशेष आर्थ या कविकल्पित होता है अन्यथा तार्किक अनुमान से क्या अन्तर होगा ? उदाहरण—

**काव्यलिङ्गं तु हेतुत्वेनोक्तिर्वाक्यपदार्थयोः।**
**नायमर्थान्तरन्यासो हेतोः शाब्दत्वसंश्रयात् ॥**

**अनुमानाय सूत्रम्—**

**"साध्यसाधननिर्देशोऽनुमानम" ॥**

**साध्यसिद्धयै साधननिर्देशोऽनुमानम्। व्याचष्टे—यत्र शब्देत्यादि। शब्दवृत्तेन न त्वर्थस्य वस्तुतस्तथाभावेन। पक्षधर्मान्वयेति त्रैरूप्यमुक्तम्। तर्कानुमानवैलक्षण्यायाह—विच्छित्तीति। अर्थात् कविकल्पितवैचित्र्यात्।**

---

१. साध्ये सा°—शा१।

२. °प्रवृत्तेन—शा०। °प्रवृत्तः—ना०।

३. स्यात्—अ० नि० नास्ति।

४. 'पर्वत वह्निमान् है धूम होने के कारण' इस अनुमान में धूम साधन है। उसका पर्वत (पक्ष) में पाया जाना या रहना पक्षधर्मिता है। जहाँ जहाँ धूम होता है वहाँ वहाँ वह्नि होती है यह व्याप्ति धूम का अन्वय-सम्बन्ध स्थापित करती है अतः हेतु अन्वयी कहलाता है। जहाँ जहाँ वह्नि का अभाव होता है वहाँ वहाँ धूम का अभाव होता है यह अभाव-व्याप्ति धूम को व्यतिरेकी बनाती है। किसी के रहने पर किसी का रहना अन्वय है किसी के अभाव में किसी का अभाव व्यतिरेक है। यत्सत्त्वे यत्सत्त्वमन्वयः। यदभावे यदभावो व्यतिरेकः।

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोज्ज्वलनपरिपिङ्गाश्च[1] ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे[2] स्मरदवः ॥१९६॥

अत्र धूमस्फुलिङ्गकपिलदिक्त्वानि वह्निलिङ्गानि त्रिरूपत्वाद्दवशब्द-प्रतिपादितं वह्निं गमयन्तीत्यनुमानम् । रूपकमूलत्वेनालंकारान्तरगर्भी[3]-कारेण विच्छित्त्याश्रयणात्तर्कानुमानवैलक्षण्यम् ।

क्वचित्तु शुद्धमपि भवति । यथा[4]—

चूँकि मंडराते बादलों के धुंआ ने आकाश के पोर भर डाले हैं, और चूँकि जुगनू चिनगारियों की तरह बन गए हैं, और चूँकि दिशाएँ बिजली-ज्वाला की चमक से पिंगल हो गई हैं इससे मुझे लगता है कि पथिकरूपी वृक्ष-खण्ड में स्मर-दावाग्नि लग गई है ॥१९६॥

इस श्लोक में धुंआ, चिनगारी तथा पिंगल दिशा का स्वरूप वह्नि के लिंग (गमक) हैं, जो त्रिरूप (पक्षधर्मी, अन्वयी तथा व्यतिरेकी) होने से दव शब्द द्वारा वर्णित वह्नि का अनुमान कराते हैं, अतः यहाँ अनुमान (अलंकार) है।

रूपकमूलक होने से, दूसरे अलंकारों की भंगिमा होने के कारण तथा चमत्कार पर अवलम्बित होने के नाते (अनुमानालंकार का) तार्किक अनुमान से भेद होता है।

और कभी यह अलंकार शुद्ध (दूसरे अलंकारों की छाया के विना) भी होता है। उदाहरण के लिए—

यथा रन्ध्रमिति। जलदधूमस्य व्योमस्थगनं खद्योतानां स्फुलिङ्गायमानता ककुभां विद्युज्ज्वालापिङ्गता च। पथिकतरुषण्डे स्मरदावानललग्नं लिङ्गम्। योजयति—अत्र धूमेत्यादि। रूपकमूलत्वमेवालङ्कारान्तरगर्भीकारः। अलङ्कारान्तरविविक्ततयापि दर्शयितुमाह—क्वचित्त्विति।

---

१. °लोल्लसन्° अ० ना०।
२. °खण्डे—नि०।
३. °भङ्गी°—नि०।
४. यथा—शा१ नास्ति।

यत्रैता लहरीचलाञ्चलदृशो[1] व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥१९७॥

अत्र योषितां भ्रूव्यापारेण मार्गणपतनं स्मरपुरोगामित्वे साध्येऽनलंकृतमेव साधनमिति शुद्धमनुमानम्। प्रौढोक्तिमात्रनिष्पन्नार्थनिष्ठत्वेन च विच्छित्तिविशेषाश्रयणाच्चारुत्वम्।

अयमत्र पिण्डार्थः—इहास्ति प्रत्याय्यप्रत्यायकभावः। अस्ति च समर्थ्यसमर्थकभावः। तत्राप्रतीतप्रत्यायने प्रत्याय्यप्रत्यायकभावः। प्रतीत-

लहरियों की भाँति चलाचल नयनों वाली ये जहाँ भी भौहें चलाती हैं वहीं पर चूँकि हरवार (काम के) मर्मभेदी ये बाण गिरते हैं इससे लगता है कि धनुष पर प्रत्यंचा खींचता हुआ, बाणों पर बार-बार हाथ फड़काता हुआ, (प्रेमी जनों पर) गुस्सैल, पर इन (युवतियों) का आज्ञापालक कामदेव सचमुच सदा इनके आगे ही आगे दौड़ा करता है ॥१९७॥

इस उदाहरण में युवतियों द्वारा भौंह चलाने पर बाण का गिरना, कामदेव के आगे दौड़ना रूप साध्य का, किसी दूसरे अलंकार से अमिश्रित साधन है अतः शुद्ध अनुमान है। केवल प्रौढोक्ति (कविकल्पना) से सिद्ध अर्थ (न कि किसी दूसरे अलंकार की छाया) पर अवलम्बित होने से और एक विशेष प्रकार के (काव्यगत) सौन्दर्य पर निर्भर होने के नाते (इस अलंकार में) चारुता या चमत्कार होता है।

निष्कर्ष यह कि यहां प्रत्याय्य-प्रत्यायक-भाव होता है साथ ही समर्थ्य-समर्थकभाव भी। प्रत्याय्यप्रत्यतायक-भाव वहां होता है जहां अप्रतीत (अज्ञात) का प्रत्यायन (ज्ञापन) हो। ज्ञात का यदि ज्ञापन होता है तो

यत्रैता इति। लहरी- वच्चलाश्चलदृशो यासां ताः। यत्र भ्रूव्यापारः तत्रैव मागणपतनं स्मरस्याग्रगमने शुद्धतया लिङ्गम्। तदेतदाह- अत्रेति। अनलङ्कृतमेव रूपकाद्यसंकीर्णमेव। तर्कानुमानवैलक्षण्यायाह—प्रौढोक्तीति। मात्रग्रहणादलङ्कारान्तरापोहः। चारुत्वं न तु तर्कानुमानवन्निश्चमत्कारता।

अथानुमानकाव्यलिङ्गार्थान्तरन्यासानां विषयं विवेचयति—अयमत्रेत्यादि। पिण्डार्थः—अवान्तरविशेषनिर्व्यपेक्षो निष्कृष्टार्थः। अप्रतीतः प्रत्याय्यते चेत्

१. °चलाचल°—नि०।

प्रत्यायने तु समर्थ्यसमर्थकभावः। तत्र प्रत्याय्यप्रत्यायकभावेऽनुमानम्। समर्थ्यसमर्थकभावे तु यत्र पदार्थो हेतुस्तत्र हेतुत्वेनोपादाने 'नागेन्द्रहस्तास्त्वचि कर्कशत्वात्'[1] [2]इत्यादाविव न कश्चिदलंकारः। यत्र तूपात्तस्य हेतुत्वं यथोदाहृते विषये 'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षाः'[3] इत्यादौ, तत्रैकं[4] काव्यलिङ्गम्। यत्र तु वाक्यार्थो[5] [6]हेतुस्तत्र [7]हेतुत्वप्रतिपादकमन्तरेण हेतुत्वेनोपन्यासे[8] काव्यलिङ्गमेव। तटस्थत्वेनोपन्यस्तस्य[9] तु [10]हेतुत्वेऽर्थान्तरन्यासः। एवं चास्यां प्रक्रियायां कार्यकारणवाक्यार्थयोर्हेतुत्वे काव्यलिङ्गमेव पर्यवस्यति। [11]समर्थ्यवाक्यार्थस्य सापेक्षत्वात्।

समर्थ्यसमर्थकभाव होता है। समर्थ्यसमर्थकभाव में जहां पदार्थ हेतु (मात्र) हो वहां हेतु-रूप का उपादान[12] जैसे कि 'हाथी की सूंड़ की चमड़ी कठोर होने से' इस उदाहरण में कोई अलंकार नहीं है। पर जहाँ किसी उपात्त (पदार्थ) को हेतु बनाया जाए जैसे कि पूर्वोक्त उदाहरण 'हिरनियां दाभ से उदासीन थीं' आदि में, वहाँ काव्यलिंग (वाक्यार्थगत) ही है। और जहां तटस्थरूप में उपन्यस्त (वाक्यार्थ) हेतु बने वहां अर्थान्तिरन्यास होता है। इस प्रक्रिया के अनुसार कार्यकारणभाव तथा वाक्यार्थ की हेतुता में काव्यलिंग ही होगा क्योंकि समर्थ्य वाक्यार्थ सापेक्ष होता है और (वाक्यार्थ में) ताटस्थ्य भी नहीं

प्रत्याय्यप्रत्यायकभावस्तदानुमानम्। प्रतीतः समर्थ्यते चेत् समर्थ्यसमर्थकभावः। तदा पदार्थस्य त्वतलादिशिरस्कतया हेतुत्वेनोपादाने न कश्चिदलङ्कारः। यथा नागेन्द्रहस्ता इत्यादौ कर्कशत्वादूर्वोरुपमानबाह्या इति हेतुहेतुमद्भावस्य लौकिकत्वात्। यदा त्वतलाद्यसंस्पर्शेनोपात्तस्य पदार्थस्य हेतुत्वं तदा मृग्यश्च दर्भाङ्कुरेत्यादौ पदार्थनिबन्धनमेकं काव्यलिङ्गम्। यदा पुनर्वाक्यार्थो हेतुत्व-

---

१. एकान्तशैत्यात् कदलीविशेषाः—इतिद्वितीयोऽपि पादः अ०पुस्तके निविष्टः।
२. इत्यत्र न—नि०।
३. निर्व्यपेक्षाः—शा१ नास्ति।
४. तत्रैव—अ० नि०।
५. वाक्यार्थस्य—अ० ना०।
६. हेतुत्वम्—अ० ना०।
७. हेतुप्रतिपादक°—नि०।
८. हेतुत्वायो°—नि० ना० शा१।
९. °न्यस्तहेतु°—शा१।
१०. हेतुत्वेनार्था°—शा० ना० शा१।
११. °समर्थक°—ना०।
१२. 'कठोर होने से' पंचमी विभक्ति का यह रूप कठोरता का हेतु-रूप में उपन्यास करता है।

**ताटस्थ्याभावात्। ततश्च सामान्यविशेषभावोऽर्थान्तरन्यासस्य विषयः। यत्पुनरर्थान्तरन्यासस्य कार्यकारणगतत्वेन समर्थकत्वमुक्तम्, तदुक्तलक्षणं काव्यलिङ्गमनाश्रित्य तद्विषयत्वेन लक्षणान्तरस्यौद्भटैराश्रितत्वात्।**

**उक्तलक्षणाश्रयणे[1] तु [2]यत्त्वन्नेत्रेत्यादिर्विविक्तो विषयः काव्यलिङ्गस्यार्थान्तरन्यासदर्शित[3] इति कार्यकारणयोः समर्थ्यसमर्थकत्वमर्थान्तरन्यासे पूर्वं दर्शितमितीयं[4] गमनिकाश्रयितव्या।**

रहता है। अत एव सामान्य-विशेषभाव अर्थान्तरन्यास का विषय होता है। अत: अर्थान्तरन्यास का कार्य तथा कारण के समर्थक (कार्य द्वारा कारण का तथा कारण द्वारा कार्य का समर्थन) रूप में उल्लेख, काव्यलिंग के उपर्युक्त लक्षण को छोड़कर किया गया था क्योंकि उद्‌भट ने कार्यकारणभाव को काव्यलिंग का विषय बताकर दूसरा लक्षण[5] दिया है। पर यदि काव्यलिंग का उपर्युक्त स्वरूप (जिसके अनुसार काव्यलिंग में, तटस्थ न होने पर, वाक्यार्थ का हेतुरूप में उपचार होता है) मान लिया जाए तो 'यत्त्वन्नेत्र' (श्लोक १९२) आदि काव्यलिंग का, अर्थान्तरन्यास में बताए गए विषय से, स्वतन्त्र क्षेत्र होगा। कार्य तथा कारण का समर्थ्यसमर्थकभाव अर्थान्तरन्यास में होता है, यह पहले बताया जा चुका है। इस तरह की व्यवस्था (इन अलंकारों का विषय-विभाग समझने के लिए) अपनानी चाहिए।

**प्रतिपादकयच्छब्दादिप्रयोगमन्तरेण हेतुत्वेनोपादीयते तदा वाक्यार्थनिबन्धनमन्यत् काव्यलिङ्गम्। यदा ताटस्थ्येनोपात्तस्य वाक्यार्थस्यार्थपर्यालोचनया हेतुत्वं तदा अर्थान्तरन्यासः। इत्थं च सति वाक्यार्थनिबन्धनं काव्यलिङ्गं कार्यकारणभाव एव भवति। तथात्व एव ताटस्थ्यसम्भवात्। यत्पुनः कार्यकारणगतत्वेनार्थान्तरस्य समर्थकत्वं तदुक्तलक्षणं काव्यलिङ्गमप्यपेक्ष्यैवाचार्यैर्लक्षणान्तर-**

---

१. °श्रमेण—शा०।

२. °न्नेत्र समानकान्तीति—ना०। °न्नेत्रेति—अ०।

३. °न्यासाद्°—अ०।

४. °मितीयती—शा१ ना०।

५. श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा।
हेतुतां प्रतिपद्येत काव्यलिंगं तदुच्यते॥

—काव्यालंकारसंग्रह, ६।१४।

एवं तर्कन्यायमूलमलंकारद्वयं[1] प्रतिपादितम्। अधुना वाक्यन्याय-मूला अलंकारा कथ्यन्ते[2]—

**उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो[3] यथासंख्यम् ॥सू० ५९॥**

ऊर्ध्वं निर्दिष्टा उद्दिष्टाः। पश्चान्निर्देशोऽनुनिर्देशः[4]। स चार्थादर्थान्तर-

इस प्रकार तर्कन्यायमूलक दो अलंकारों (काव्यलिंग तथा अनुमान) का विवेचन हो चुका है। अब वाक्य न्याय-मूलक अलंकारों का निरूपण कर रहे हैं।

उद्दिष्ट अर्थों का क्रमशः अनुनिर्देश यथासंख्य है ॥सू० ५९॥
उद्दिष्ट का अर्थ है पहले बताए गए। अनुनिर्देश का अर्थ है बाद में बताना। यह (अनुनिर्देश) एक अर्थ से दूसरे अर्थ में होता है क्योंकि उद्दिष्ट का ही यदि

करणात्। इत्थं च सत्युक्तलक्षणाश्रयणे यत् त्वन्नेत्रेत्यादौ अर्थान्तरन्यासविविक्तं काव्यलिङ्गमेव। कार्यकारणयोस्तु समर्थकत्वमर्थान्तरन्यासे दर्शितचरमिति गतिरियती विषयविभागायाश्रयितव्या।

अनुमानं तु साध्याय साधनस्योपवर्णना।
तत्सङ्कीर्णत्वशुद्धत्वविच्छित्त्यान्यविलक्षणम् ॥
अप्रतीतप्रतीतौ स्यादनुमानव्यवस्थितिः।
पदार्थाद्वाथ वाक्यार्थान्निर्देशे सति हेतुतः ॥
समर्थनं प्रतीतस्य काव्यलिङ्गद्वयं मतम्।
भवेदर्थान्तरन्यासस्ताटस्थ्ये हेतुभावतः ॥
कार्यकारणभावे तु तस्योक्तं लक्षणान्तरम्।

सङ्गत्यन्तरायाह—एवं तर्केति। तत्र यथासंख्यार्थं सूत्रम्—
"उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथासंख्यम्" ॥

प्राङ्निर्दिष्टानां पश्चान्निर्दिष्टैः क्रमेण सम्बन्धो यथासंख्यालङ्कारः। व्याचष्टे—ऊर्ध्वमित्यादि। ऊर्ध्वं प्रागित्यर्थः। स चेति। अनुनिर्देशोऽर्थान्तरगतो न तूद्दिष्टार्थगतः। सामर्थ्यात् उद्दिष्टानुनिर्देश्ययोः सापेक्षत्वलक्षणात्।

---

1. द्वयमिह—नि० अ०।
2. उच्यन्ते—अ० नि०।
3. °णानूद्देशो—अ०। °ण निर्देशः—शा०।
4. °नूद्देशः—नि०।

गतः। संबन्धश्चात्र सामर्थ्यात्प्रतीयते। ऊर्ध्वं निर्दिष्टानामर्थानां पश्चान्निर्दिष्टैरर्थैः क्रमेण संबन्धो यथासंख्यमिति वाक्यार्थः। अन्ये त्विममलंकारं क्रमसंज्ञयाभिदधिरे। तच्च यथासंख्यं शाब्दमार्थं चेति द्विधा। शाब्दं यत्रासमस्तानां पदानामसमस्तैः[१] पदैरर्थद्वारकः संबन्धः, तत्र क्रमसंबन्धस्यातिरोहितस्य प्रत्येयत्वात्। आर्थं तु यत्र समासः क्रियते, तत्र समुदायस्य समुदायेन सह संबन्धस्य [२]शाब्दत्वादर्थानुगमपर्यालोचनेन[३] त्ववयवगतः क्रमसंबन्धः प्रतीयते [४]तेनात्र यथासंख्यार्थत्वम्[५]। [६]आद्यो यथा—

अनुनिर्देश हो तो पुनरुक्ति हो जाएगी। इन दोनों (अर्थात् पूर्व-निर्दिष्ट के अर्थ तथा उसके अनुनिर्देश के अर्थ का परस्पर) का सम्बन्ध सामर्थ्य के कारण ज्ञात होता है। पूर्वनिर्दिष्ट अर्थों का पश्चात् निर्दिष्ट अर्थों के साथ क्रमशः सम्बन्ध यथासंख्य है—यह हुआ वाक्यार्थ।

दूसरे (आचार्य वामन) ने इस अलंकार का निरूपण क्रम नाम से किया था[७]। यह यथासंख्य शाब्द तथा आर्थ दो प्रकार का है। शाब्द वहां होता है जहाँ असमस्त पदों का असमस्त पदों के साथ अर्थ द्वारा सम्बन्ध होता है। यहां क्रम का सम्बन्ध छिपा नहीं होता है अतः शीघ्र समझा जा सकता है। जहाँ समास हो वहां आर्थ (यथासंख्य) होता है। इसमें एक समुदाय का दूसरे समुदाय के साथ सम्बन्ध शाब्द होता है अतः (समुदाय के) अवयव में विद्यमान क्रम-सम्बन्ध का ज्ञान अर्थ का अनुसन्धान करने से हो पाता है। इसलिए ऐसे स्थलों में यथासंख्य आर्थ होता है। प्रथम का उदाहरण—

**सम्बन्धप्रतीतिं निष्कर्षति—ऊर्ध्वनिर्दिष्टानामिति। वाक्यार्थः सूत्रात्मनो वाक्यस्यार्थः। अतः क्रमविशेषोऽयम्। अन्ये तु क्रम इत्येवाभिदधिरे। द्वैविध्यमाह—तच्चेति। आद्यस्य लक्षणमाह—शाब्दं यत्रेति। व्यस्तानां व्यस्तैरर्थादभिसम्बन्धे शाब्दक्रमावलम्बिनः सम्बन्धस्यातिरोधानप्रतीतिकत्वाच्छाब्दता। द्वितीयं लक्षयति—आर्थं त्विति। समुदायस्य समुदायेन सम्बन्धे शाब्देऽर्थपर्यालोचनयाऽवयवक्रमसम्बन्ध इत्यार्थता।**

१. तैरेव—अ०। २. °र्थानुगुण्य—अ०। °र्थावगम°—नि०।
३. °लोचनया—नि०।
४. तथात्र—नि०। ततोऽत्र—अ०।
५. °संख्यया°—अ०। ६. आद्यस्योदाहरणम्—अ० नि०।
७. उपमेयोपमानानां क्रमसम्बन्धः क्रमः। काव्यालंकारसूत्रवृत्ति, ४।३।१७।

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां[१]
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो [२]मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥१९८॥

अत्र [३]लावण्यौकःप्रभृतीनामिन्द्वादिभिः क्रमसंबन्धस्याव्यवहितत्वेन प्रतीतेः शाब्दं यथासंख्यम् । द्वितीयो[४] यथा—

कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः ।
[५]जलनिधिगिरिकमलस्था हरिहरचतुरानना[६] ददतु[७] ॥१९९॥

देव ! जब विधाता ने सौन्दर्य के निधान, महनीय प्रतापी, त्यागियों में शिरोमणि, पृथ्वी के भार को ढोने में समर्थ भुजदण्ड वाले तुम्हें बना डाला फिर चन्द्रमा को क्यों गढ़ा ? यह सूरज क्यों बनाया ? इस चिन्तामणि को क्यों पैदा किया ? और इन कुलाचलों की भी व्यर्थ ही क्योंकर रचना की ? ॥१९८॥

इस उदाहरण में सौन्दर्य के निधान आदि का चन्द्रमा आदि के साथ क्रमशः सम्बन्ध निर्बाध रूप में प्रतीत होता है, अतः शाब्द यथासंख्य है ।

दूसरे (आर्थ यथासंख्य) का उदाहरण—

काजल, हिम और सोने की कान्ति वाले, गरुड़, वृषभ और हंस के वाहन वाले, समुद्र, पर्वत तथा कमल पर रहने वाले विष्णु, शंकर तथा ब्रह्मा तुम लोगों का कल्याण करें ॥१९९॥

लावण्येति – लावण्यप्रभा त्यागावनीभरक्षमत्वशालिनि त्वयि सतीन्दुपूषा-चिन्तारत्नकुलक्ष्माभृतां नैरर्थक्यम् । योजयति—अत्र लावण्यौकस्त्वेत्यादि ।

कज्जलेति । अत्रार्थत्वं योजयति—कज्जलादीनामित्यादि । श्रुत्या शब्देन समुदायगतः सम्बन्धः ।

प्रागुक्तानामनुक्तैस्तु संबन्धः क्रमिको यदा ।
यथासंख्यं तदा शाब्दमार्थञ्चेति द्विधा मतम् ॥

---

१. मानिनां—अ० शा१ । २. वृथैव—नि० । ३. °कस्त्वप्र°—अ० ।
४. द्वितीयस्य यथा—अ० । द्वितीये—शा० । केवलं 'यथा' नि० ।
५. जलधिगिरिकमलासना—अ० शा० ।
६. °कमलासना—अ० नि० । ७. दधतु—शा१ ।

**अत्र कज्जलादीनां सुपर्णादिभिः संबद्धानां जलनिध्यादिभिः सह संबन्धे[१] हरिप्रभृतिभिः संबन्धः श्रुत्या समुदायनिष्ठः प्रतीयते। अर्था-[२]नुगमानुसारेण त्ववयवानां क्रमसंबन्धावगतिरित्यार्थं यथासंख्यम्।**

**एकमनेकस्मिन्ननेकमेकस्मिन्[३] क्रमेण पर्यायः ।।सू० ६०।।**

**क्रमप्रस्तावादिदमुच्यते। एकमाधेयमनेकस्मिन्नाधारे यत्तिष्ठति स एकः[४] पर्यायः। नन्वेकमनेकगोचरमिति प्रागुक्तेन[५] लक्षणेन विशेषालंकारोऽत्रोक्तः। तत्किमर्थमिदमुच्यते इत्याशङ्क्योक्तम्—क्रमेणेति। इह च [६]क्रमप्रतिपादनादर्थात्तत्र यौगपद्यप्रतीतिः। तेनास्य ततो विविक्तविषयत्वम्। तथा—**

इस उदाहरण में सुनने से (शब्दतः) गरुड़ आदि से सम्बद्ध काजल आदि का समुद्र आदि के साथ सम्बन्ध तथा विष्णु आदि के साथ सम्बन्ध समुदाय-गत प्रतीत होता है। अर्थ का अनुगमन करने पर अवयवों का क्रमशः सम्बन्ध ज्ञात होता है अतः यथासंख्य आर्थ है।

एक का अनेक में और अनेक का एक में क्रमशः रहना पर्याय है ।।सू० ६०।।

क्रम का प्रसंग होने से इस (अलंकार) का निरूपण किया जा रहा है। एक आधेय का अनेक आधार में रहना, यह प्रथम पर्याय है। पर 'एक का अनेक में पाया जाना' इस पूर्वोक्त लक्षण से तो यहाँ विशेषालंकार का ही प्रतिपादन होता है, फिर इस (नए अलंकार) को बताने की क्या आवश्यकता है? इस शंका को ध्यान में रखकर ही (पर्याय के लक्षण में) 'क्रमशः' रखा गया है। यहाँ क्रम होता है, इससे स्पष्ट है कि विशेषोक्ति में यौगपद्य की प्रतीति होती है (क्रम का ज्ञान नहीं होता है)। अतएव (पर्याय अलंकार) का क्षेत्र उस (विशेषोक्ति) से स्वतन्त्र है। तथा—

**पर्यायार्थं सूत्रम्—**

**"एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः" ।।**

**एकस्यानेकाधारत्व एकः पर्यायः। अनेकस्यैकाधारत्वे द्वितीयः। ससङ्गतिकं व्याचष्टे—क्रमप्रस्तावादित्यादि। क्रमग्रहणस्य प्रयोजनायाह—नन्वेकमित्यादि। एकस्यानेकगोचरत्वलक्षणविशेषालङ्कारव्यावृत्त्यै क्रमग्रहणं**

---

१. सम्बन्धो—नि०। २. °नुगति°—ना० शा १।
३. °न् वा—अ०। ४. एकः सः—ना०।
५. प्राक्तनेन—नि०। ६. क्रमोपादा°—नि० शा०।

**एकस्मिन्नाधारेऽनेकमाधेयं[1] स द्वितीयः ॥सू० ६१॥**

पर्यायः। नन्वत्र समुच्चयालंकारो वक्ष्यते इत्येतदर्थमपि[2] क्रमेणेति योज्यम्। अत एव 'गुणक्रियायौगपद्यं समुच्चयः'[3] इति समुच्चयलक्षणे यौगपद्यग्रहणम्। अत एव क्रमाश्रयणात्पर्याय इत्यन्वर्थाभिधानम्[4]।

विनिमयाभावात्परिवृत्तिवैलक्षण्यम्। तस्या हि विनिमयो लक्षणत्वेन वक्ष्यते। तत्रानेकोऽसंहतरूपः संहतरूपश्चेति द्विविधः। [5]तच्च

एक आधार में अनेक आधेय का रहना द्वितीय (पर्याय) है ॥सू० ६१॥

चूंकि इस प्रकार की स्थिति में समुच्चय अलंकार निरूपित होगा इसलिए इस (लक्षण) में भी 'क्रमशः' (पद) का प्रयोग करना चाहिए। गुण तथा क्रिया का युगपद्भाव समुच्चय होता है। इस समुच्यय-लक्षण में इसीलिए युगपद्भाव (यौगपद्य) का प्रयोग किया गया है। अस्तु! क्रम (परिपाटी) होने से पर्याय चरितार्थ संज्ञा है।

विनिमय (अदला-बदली) न होने से परिवृत्ति (अलंकार) से (पर्याय अलंकार का) भेद है। उस (परिवृत्ति अलंकार) का स्वरूप तो विनिमय है, यह बताया जाएगा।

इनमें से 'अनेक' असंघातरूप (पृथग्वृत्ति) तथा संघातरूप इस प्रकार दो

कृतमित्यर्थः। एवं तर्हि विशेषालङ्कारे यौगपद्यग्रहणं किं न कृतमित्यत आह—इह चेति। इह क्रमप्रतिपादनात् तत्र यौगपद्यं लक्षणत्वेनार्थात् सिध्यतीत्यर्थः। अतो विविक्तविषयता। द्वितीयमाह—**तथा एकस्मिन्निति**। अत्र क्रमग्रहः। क्रमग्रहणात् समुच्चयालङ्कारव्यावृत्तिरित्याह—**नन्वत्रेति**। वक्ष्यमाणे समुच्चये यौगपद्यं लक्षणत्वेन ग्रहीष्यत इत्याह—**अत एव गुणेति**। लक्ष्यपदं निर्वक्ति—**अत एव क्रमेति**। पर्यायस्य क्रमात्मकत्वात् परिवृत्त्यलङ्कारतो वैधर्म्यमाह—**विनिमयेति**। अस्य चातुर्विध्यं दर्शयति—**तत्रानेक इति**। इह योऽ-

१. यत् सः—नि०। यत् तिष्ठति सः—अ०। अ० पुस्तके द्वितीयः पर्यायोऽयं न सूत्रतयोपात्तः। सूत्रत्वेनोपादाने 'पर्याय' इतिशब्दो नापेक्षितः। मया त्वत्र वृत्तिभागे निवेशितः।

२. अपि—शा० ना० शा१ नास्ति।

३. समुच्चयः—शा१ नास्ति।

४. °न्वर्थमभि°—अ० नि०।

५. तत्र—अ० ना०।

द्वैविध्यमाधाराधेयगतमिति चत्वारोऽस्य[१] भेदाः। क्रमेणोदाहरणानि[२]—

नन्वाश्रयस्थितिरियं किल कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥२००॥

[३]विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥२०१॥

तरह का होता है। ये दोनों भेद आधार (आश्रय) तथा आधेय (आश्रित) में रहते हैं अतः इस (अनेक) के चार भेद होते हैं।[४] क्रमशः उदाहरण —

रे हलाहल ! एक के बाद एक बढ़-चढ़कर ऊंचा स्थान पाना तुम्हें किसने सिखाया है ? क्योंकि पहले रहते थे समुद्र के पेट में, फिर शंकर के कण्ठ में और अब रहने लगे हो दुष्टों की जबान पर ॥२००॥

उस पार्वती ने विसृष्ट राग वाले अधरोष्ठ से और स्तनों के अंगराग से अरुणित गेंद से निवृत्त हाथ को—जिसकी उंगलियाँ कुश की नोकों से क्षतविक्षत हो चुकी थी—रुद्राक्षमाला का प्रेमी बना दिया ॥२०१॥

यमनेकोऽर्थः स पृथग्वृत्तिः संघातात्मा च। द्विविधोऽप्याधार आधेयश्चेति चत्वारो भेदाः।

नन्वाश्रयेति। रे कालकूट तवाश्रयेषु वृत्तिरुत्तरोत्तरविशिष्टपदन्यासः केनोपदिष्टा। यतः प्राक् हृदये, तदपेक्षयोपरितने कण्ठेऽवात्सीः। सम्प्रति तु कण्ठादप्युपरितन्यां वाचि वससि। अत्रार्णवादिराधारोऽनेकः पृथग्वृत्तिः।

विसृष्टरागादिति। अत्राधरकन्दुकौ कराधारौ निवृत्तिक्रियां प्रत्यपादानत्वेन संहतौ। निवृत्तेरनेकत्वेनाविवक्षणात्।

---

१. अस्य—शा० ना० पुस्तकयोर्नास्ति। भा२ पुस्तकानुसारं 'तस्येति'।

२. °दाहरणम्—अ०।

३. निसर्ग°—शा० (?)। विमृष्ट° शा१। निसृष्ट°—अ०।

४. चार भेदः—

क—असंहतरूप अनेक आधार
ख—संहतरूप अनेक आधार
ग—असंहतरूप अनेक आधेय
घ—संहतरूप अनेक आधेय

निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः[१] स वाह्यते राजपथः शिवाभिः ॥२०२॥
यत्रैव मुग्धेति कृशोदरीति प्रियेति कान्तेति महोत्सवोऽभूत् ।
तत्रैव दैवाद्वदने मदीये पत्नीति भार्येति गिरश्चरन्ति ॥२०३॥

अत्र कालकूटमेकमनेकस्मिन्नसंहते [२]आश्रये क्रमेण स्थितिमन्निबद्धम् । करश्चैकोऽनेकस्मिन्संहते क्रमवान् । अधरकन्दुकयोर्निवृत्त्य[३]-पादानतया संहतत्वेन स्थितत्वात् । अभिसारिकाः शिवाश्चानेकस्वभावा असंहतरूपा एकस्मिन्नाश्रये राजपथे क्रमवर्तिन्यः । [४]वदने चैकस्मिन्नाश्रये मुग्धत्वादि-वर्गः पत्नीत्वादिवर्गश्च वर्गत्वादेव संहतरूपोऽनेकः क्रमवानुपनिबद्धः ।

नूपुरों की छमछम करने वाली अभिसारिकाएं जिस राजपथ पर रातों में घूमा करती थीं उस पर हू हू करते मुखों की लौ से मांस की तलाश में सियारिनें घूमा करती हैं ॥२०२॥

जहाँ मुग्धा, कृशोदरी, प्रिया, कान्ता इस रूप में (कहने का) महोत्सव चला करता था उसी मुंह से दैवात् पत्नी और भार्या की आवाजें निकला करती हैं ॥२०२॥

यहाँ (प्रथम उदाहरण में) एक हलाहल अनेक असंहत (पृथक्) आधारों (समुद्र का पेट, शंकर का कण्ठ तथा दुष्टों की जबान) में क्रमशः रहता हुआ बताया गया है। (दूसरे उदाहरण में) एक हाथ संहत (वर्ग या समुदाय में रहने वाले) अनेक में क्रमशः उपनिबद्ध है क्योंकि अधरोष्ठ तथा गेंद निवृत्ति के अपादान होने के रूप में संहत होकर (या एक समुदाय में स्थित) हैं। (तीसरे उदाहरण में) अभिसारिकाएं तथा सियारिन भिन्न (अनेक) स्वभाव हैं, असंहत हैं, और एक आश्रय राजपथ पर क्रमशः रहती हैं। (अन्तिम उदाहरण में) मुग्धा आदि का वर्ग तथा पत्नी आदि का वर्ग, वर्ग होने के कारण ही, संहतरूप अनेक है जो मुखरूप एक आधार में क्रम से उपवर्णित है।

निशास्विति । सञ्चरः सञ्चाराधिष्ठानम् । अत्राभिसारिकाशिवारूप-मनेकमाधेयं पृथग्वृत्तिः । यत्रैवेति । अत्र मुग्धत्वादिकं पत्नीत्वादिकं त्वनेकमाधेयं वर्गत्वावस्थायीति संघातवृत्ति । चतुर्ष्वपि योजयति—अत्र कालकूटमित्यादि ।

---

१. विशिता°—ना० । २. कारणे आश्रये—ना० ।
३. निवृत्त्यु°—नि० ना० । ४. वचने—नि० ना० ।

**समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः ॥सू० ६२॥**

विनिमयोऽत्र किंचित्त्यक्त्वा कस्यचिदादानम्। समेन तुल्यगुणेन [1]त्यज्यमानेन तादृशस्यैवादानम्। तथाधिकेनोत्कृष्टगुणेन दीयमानेन न्यूनस्य हीनगुणस्य[2] परिग्रहः[3]। एवं न्यूनेन हीनगुणेन त्यज्यमानेनाधि[4]कस्योत्कृष्टगुणस्य स्वीकारः। तदेषा त्रिप्रकारा परिवृत्तिः। क्रमप्रतिभाससंभवात्पर्यायानन्तरमस्या लक्षणम्। समपरिवृत्तिर्यथा—

समान, न्यून या अधिकका समान, या अधिक न्यून से विनिमय परिवृत्ति है ॥सू० ६२॥

विनिमय से यहाँ अभिप्राय है एक को छोड़कर दूसरे का ग्रहण। समान को—समान गुण वाले को - छोड़कर उसी के समान का ही ग्रहण, तथा अधिक को—उत्कृष्ट-गुण को—देकर न्यून को—कमगुण वाले को—बदले में लेना, इसीप्रकार न्यून या हीन-गुण को छोड़ कर अधिक या उत्कृष्ट गुण वाले को स्वीकार करना, इस प्रकार परिवृत्ति तीन प्रकार की है।[5] इस (अलंकार) का स्वरूप-निरूपण पर्याय के बाद किया गया है क्योंकि इसमें क्रम की अनुभूति होना सम्भव है। समपरिवृत्ति (समान का समान से विनिमय) का उदाहरण—

पर्याय एकोऽनेकस्मिन्नेकत्रानेक इत्यपि।
द्विधा क्रमवशादेतौ न विशेषसमुच्चयौ॥
नेयं विनिमयाभावात् परिवृत्तिर्भिदास्त्विह।
चतस्रोऽनेकरूपस्य पृथक् संघातवर्तनात्॥
पृथक् संघातवृत्तित्वादनेकोऽर्थो द्विधा स च।
आधाराधेयभावस्थश्चतस्रोऽस्य भिदास्ततः॥

परिवृत्त्यर्थं सूत्रम्—

"समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः॥"

समस्य समेन विनिमय एका परिवृत्तिः। न्यूनस्याधिकेन द्वितीया। अधिकस्य न्यूनेन तृतीया। व्याचष्टे—विनिमयोऽत्रेति। सङ्गतिमाह—क्रमप्रतिभासेति।

---

१. त्यज (?) मानेन—शा१।
२. न्यूनस्य गुणहीनस्य—नि०। न्यूनस्य हीनगुणस्य—अ०।
३. परिग्रहणम्—अ०। शा० (?)। ४. °अधिकगुणस्योत्कृष्टस्य—नि०।
५. (क) समान का समान से विनिमय। (ख) अधिक का न्यून से विनिमय। (ग) न्यून का अधिक से विनिमय।

उरो दत्त्वामरारीणां येन युद्धेष्वगृह्यत ।
हिरण्याक्षवधाद्येषु[1] यशः साकं जयश्रिया ॥२०४॥

अत्रोरोयशसोस्तुल्यगुणत्वम् । अधिकपरिवृत्तिर्यथा—

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे[2] [3]स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥२०५॥

अत्रोत्कृष्टगुणैराभरणैर्न्यूनगुणस्य वल्कलस्य परिवृत्तिः । न्यूनपरिवृत्तिर्यथा—

तस्य [4]च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यते बुधैः ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥२०६॥

जिसने हिरण्याक्ष आदि का वध करने में दैत्यों को हृदय देकर बदले में जयश्री के साथ कीर्ति ले ली ॥२०४॥

इस उदाहरण में हृदय और कीर्ति समानगुण हैं। अधिक-परिवृत्ति (न्यून का अधिक से विनिमय) का उदाहरण—

आखिरकार तुमने यौवन में आभूषण छोड़कर बुढ़ौती में अच्छे लगने वाले वल्कल क्यों पहिन रखे हैं ? तुम्ही बताओ कहीं प्रदोष में चन्द्रमा और नक्षत्रों से छिटकी रात अरुण का वरण करती है ॥२०५॥

इस उदाहरण में उत्कृष्ट गुण वाले आभूषणों का कम गुण वाले वल्कल से विनिमय है। न्यूनपरिवृत्ति (न्यून का अधिक से विनिमय) का उदाहरण—

उस बूढ़े जटायु की मृत्यु का समझदार लोगों को क्या अफ़सोस होगा जिसने अपना जर्जर शरीर देकर चन्द्रकिरण-सी धवल कीर्ति खरीद ली है ॥२०६॥

**उरो दत्त्वेति ।** हिरण्याक्षवधाद्येषु युद्धेषूरो दत्त्वा दैत्यानां यशो गृहीतम् । **योजयति—अत्र उर इति ।**

**किमितीति ।** अरुणाय न कल्पत इत्यर्थः । **योजयति—अत्रोत्कृष्टेति ।**

**तस्य हीति ।** प्रवयस्त्वात् स्वर्गमुपेयुषो न शोच्यं किञ्चित् । **योजयति—अत्र कलेवरेणेति ।**

---

१. °ह्यो°—नि० ।  २. प्रदोषेषु—अ० ।
३. विकीर्णतारका—अ० । °तारके—शा१ ।
४. हि—अ० ।

अत्र [१]कलेवरेण न्यूनगुणेन यशस उत्कृष्टगुणस्य विनिमयः ।

दत्त्वा दर्शनमेते मत्प्राणा वरतनु त्वया क्रीताः ।
किं त्वपहरसि मनो यद्ददासि रणरणकमेतदसत् ॥२०७॥

[२]अत्राद्येऽर्धे समपरिवृत्तिः । [३]द्वितीयेऽर्धे न्यूनपरिवृत्तिः ।

**एकस्यानेकत्र [४]प्राप्तावेकत्र[५] नियमनं परिसंख्या ॥सू० ६३॥**

एकानेकप्रस्तावादिह वचनम् । एकं वस्तु यदानेकत्र युगपत्संभाव्यते, तदा [६]तस्यैकत्रासंभाव्ये द्वितीयपरिहारेण नियमनं परिसंख्या ।

यहां न्यूनगुण का उत्कृष्टगुण कीर्ति से विनिमय है ।

वरतनु ! दर्शन देकर तुमने मेरे प्राण खरीद लिए हैं । पर इस झूठी उत्कंठा को पैदा कर तुम मेरा मन ही खींचे लिए जा रही हो ॥२०७॥

इस ( श्लोक ) के प्रथमार्ध में समपरिवृत्ति है, और द्वितीयार्ध में न्यूनपरिवृत्ति ।

एक के अनेकत्र पाए जाने पर एकत्र नियमन परिसंख्या है ॥सू० ६३॥

एक और अनेक की चर्चा के कारण (इस अलंकार का) यहाँ निरूपण हो रहा है । जब एक वस्तु अनेकत्र एक साथ सम्भावित हो तो उसका एक स्थान

द्वैरूप्येणोदाहरति—दत्त्वेति । दर्शनप्राणयोः समता मनोव्यपेक्षया रणरणकस्य न्यूनता । योजयति—अत्राद्य इति ।

परिवृत्तिर्विनिमयस्त्रिधा सेयं समादिभिः ।

परिसंख्यार्थं सूत्रम्—

"एकस्यानेकत्र प्राप्तौ एकत्र नियमनं परिसंख्या ॥"

अनेकत्र प्राप्नुवत एकस्यैकत्र नियमनं परिसंख्या । एकतरत्र वर्जनेनान्यतरत्र संख्यानात् । ससङ्गतिकं व्याचष्टे—एकानेकेत्यादि । असम्भाव्ये

---

१. नि० पुस्तके इयमस्ति वाक्ययोजना—'हीनगुणेन कलेवरेणोत्कृष्टगुणस्य यशसो विनिमयः' । २. अत्र पूर्वार्धे—अ० । आद्येऽर्धे—नि० ।

३. उत्तरार्धे—अ० । द्वितीयार्धे—नि० । ४. °नेकप्रा°—नि० ।

५. °नेकप्रस्तावे एकत्र—ना०, शा०, शा१ । जयरथटीकायां 'प्राप्तौ'—इति प्रतीकोपादानात्, अ० नि० पुस्तकानुरोधाच्च 'प्राप्तौ' इत्येव पाठोऽत्र स्वीकृतः ।

६. तस्यासम्भाव्ये एकत्र—इति क्रमः ना०, शा०, शा१ । °असम्भाव्ये—अ० नास्ति ।

[1]कस्यचित्परिवर्जनेन कुत्रचित्संख्यानं वर्णनीयत्वेन गणनं परिसंख्या। सा चैषा प्रश्नपूर्विका तदन्यथा [2]वेति प्रथमं द्विविधा[3]। प्रत्येकं च वर्जनीयत्वेऽस्य[4] शाब्दत्वार्थत्वाभ्यां द्वैविध्यमिति चतुःप्रभेदा [5]परिसंख्या क्रमेण यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥२०८॥

पर – असंभाव्य (कवि-प्रतिभाप्रसूत होने से लोकोत्तर) में – (किसी) दूसरे को छोड़कर नियमन परिसंख्या है। किसी एक का निराकरण कर किसी दूसरे का संख्यान—वर्णनीय रूप में गणना—परिसंख्या (कहलाती) है। और यह (परिसंख्या) प्रश्नपूर्वक हो सकती है और बिना प्रश्नपूर्वक भी। इस प्रकार प्रथमतः दो प्रकार की है। (दोनों में से) प्रत्येक के वर्जनीय (निषेध्य) शब्द और (वर्ज्नीय) अर्थ के रूप में दो-दो भेद होते हैं। इस प्रकार परिसंख्या के चार भेद होते हैं।[6] क्रमशः उदाहरण—

इस संसार में टिकाऊ गहना कौन है? कीर्ति, न कि रत्न। क्या करना उचित है? आर्यजनों के द्वारा आचरित अच्छा कार्य न कि बुरा। कौन सा नेत्र अबाधित है? बुद्धि, न कि चर्मचक्षु। तुम्हें छोड़ कर अच्छाई और बुराई का भेद किसे मालूम है ॥२०८॥

**स्थूलदृशा सम्भावयितुमशक्ये। निर्वक्ति – परीति। परीत्युपसर्गो वर्जनवृत्तिरित्यर्थः। भेदानाह – सा चैषेति। प्रश्नपूर्विका शाब्दी, तथैवार्थी, अप्रश्नपूर्विका शाब्दी, तथैवार्थीति चतुर्धा।**

**किं भूषणमिति। आर्यैराचरितम्। इयं प्रश्नपूर्विका शब्दोपात्तवर्ज्या।**

---

१. कस्यचित्—अ० नास्ति। परिवर्जने कस्यचिद्वर्जने—शा१। कस्यचित् ……परिसंख्या—ना० नास्ति।

२. चेति—अ० ना।
३. द्विधा—अ० नि०।

४. परिवर्जनीयस्य—अ०।
५. परिसंख्या—नि० नास्ति।

६. (क) प्रश्नपूर्विका शाब्दी परिसंख्या।
(ख) प्रश्नपूर्विका आर्थी ,, ।
(ग) अप्रश्नपूर्विका शाब्दी ,, ।
(घ) अप्रश्नपूर्विका आर्थी ,, ।

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते [१]ध्येयं चरणयुगलं कौस्तुभभृतः ।
[२]किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥२०९॥
भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥२१०॥
कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥२११॥

[३]अत्रालौकिकं वस्तु गृह्यमाणं वस्त्वन्तरव्यवच्छेदे[४] पर्यवस्यतीति व्यवच्छेद्यं वस्त्वन्तरं [५]शाब्दमार्थं [६]वेति नियमाभावः। अलौकिकत्वाभिप्रायेणैव क्वचित्प्रश्नपूर्वकं ग्रहणम्। यथा—

मनुष्यों द्वारा सेव्य क्या है ? गंगा का पवित्र तट। एकान्त में किसका ध्यान करना चाहिए ? कौस्तुभधारी (विष्णु) के चरणयुगल का। आराधना के योग्य क्या है ? पुण्य। चाह किस (वस्तु) की करनी चाहिए ? करुणा की। इन्हीं (वस्तुओं) में रमने से मन को अनन्त मुक्ति मिल सकती है ॥२०९॥

महापुरुषों की भक्ति प्रायः शंकर में होती है, वैभव में नहीं। व्यसन शास्त्र में होता है, काम की अस्त्रभूत युवतियों में नहीं। चिन्ता कीर्ति की होती है, देह की नहीं ॥२१०॥

(प्रेयसि) तेरे केशपाश में कुटिलता, हाथ पैर और अधर में राग, कुचों में कड़ापन और आंखों में तरलता रहा करती है ॥२११॥

उपर्युक्त उदाहरणों में अलौकिक (चारु या कविकल्पित) वस्तु का ग्रहण दूसरी (सामान्य) वस्तु का परिणामतः निराकरण कर देता है। अतः जिस वस्तु का निषेध होता है वह शाब्द हो अथवा आर्थ इसका कोई नियम नहीं है।

**किमासेव्यमिति। यदासक्त्या द्युसरिदादिसमासङ्गेन। इयं प्रश्नपूर्विका अर्थाक्षिप्तवर्ज्या।**

**भक्तिर्भव इति। युवतिरूपे कामास्त्रे। इयमप्रश्ना शाब्दवर्ज्या। कौटिल्यमिति। इयमप्रश्ना आर्थवर्ज्या। अत्र योजनस्य सुज्ञानत्वात् न्यायसञ्चारायाह—अत्रालौकिकमिति। अलौकिकग्रहो हि लौकिकं**

१. सेव्यं—अ०। २. किमापाद्यं—अ०।
३. अत्र चा°—अ० नि०। ४. परिच्छेदे—शा१।
५. वस्त्वन्तरशब्दमात्रं—नि०। ६. चेति—अ०, ना०।

विलङ्घयन्ति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि ।
विभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः ॥२१२॥

[1]तथा—'चित्रकर्मसु वर्णसंकरो, यतिषु दण्डग्रहणानि'[2] इत्यादौ[3] श्लेषसंपृक्तत्वमस्या अत्यन्तचारुत्वनिबन्धनम् । अत्र च नियमपरिसंख्ययोर्वाक्यवित्प्रसिद्धं लक्षणं नादरणीयमिति ख्यापनाय नियमनं परि-

चारुता के कारण ही प्रश्नपूर्वक (विधि) को एकत्र अपनाया गया है (प्रश्नपूर्वक परिसंख्यान में सौन्दर्य होता है इसीलिए उसका भेद माना गया है)। (श्लिष्ट परिसंख्या का उदाहरण) जैसे –

जिस (नगरी) में विलासिनी स्त्रियों के नयनकमल श्रुतिमार्ग (वेदमर्यादा तथा कर्णप्रान्त) का उल्लंघन करते हैं और जिसमें महाकाल के जटाजूट का अर्धचन्द्र भी टेढ़ापन धारण कर लेता है ॥२१२॥

तथा—

'(इस नगरी में) चित्ररचनाओं में (ही) वर्ण (रंग) का संकर होता है (वर्णों – जातियों का संकर नहीं होता है) सन्यासियों द्वारा ही दण्डग्रहण होता है (राजदण्ड नहीं दिया जाता है)…'इत्यादि (उदाहरण) में श्लेष का योग इस (अलंकार) में अत्यधिक सौन्दर्य ला देता है। इस संदर्भ में नियम तथा परिसंख्या का मीमांसकों में प्रसिद्ध लक्षण लागू नहीं होता है[4], यह बताने के

व्यवच्छिनत्त्येव विरोधात् । अतो व्यवच्छेद्यं शाब्दमार्थं वेति भेदद्वयोदयः । अलौकिकस्याप्रसिद्धेः (? स्य प्र) क्वचित् प्रश्नोऽन्यथा चेति चातुर्विध्यम् । श्लेषभित्तिकतया दर्शयति—विलङ्घयन्तीति । श्रुतिवर्त्म कर्णोपकण्ठो वेदमार्गश्च । वक्रिमा अरालता दौश्शील्यं च । चित्रकर्मस्विति । गद्ये वर्णाः वलक्षादयो द्विजादयश्च । दण्डो यष्टिः शास्तिश्च । अत्र श्लेषः पूर्वमसिद्ध इति न बाधकः अपि तु चारुतावह इत्याह श्लेषसंपृक्तत्वमिति । अलौकिकतां दर्शयितुमाह – अत्र चेति । पाक्षिकत्वे नियमः, अनेकत्र युगपत्प्राप्तौ परि-

१. यथा—नि० (तथा—इति स्थाने)
२. °ग्रहणादौ श्लेष°—शा१ । ३. इत्यादि—नि० ।
४. मीमांसकों के अनुसार अत्यन्त अप्राप्त अर्थात् नियमेन अज्ञात में विधि, पक्षतः प्राप्त में नियम तथा एकत्र एवं अन्यत्र अर्थात् अनेकत्र युगपत् प्राप्ति में 'परिसंख्या' मानी जाती है ।

**संख्येति सामानाधिकरण्येनोक्तिः। अत एवात्र[1] पाक्षिक्यपि[2] प्राप्तिः स्वीक्रियत इति युगपत्संभावनं प्रायिकम्।**

लिए ही नियम तथा परिसंख्या का समानाधिकरण (एक विभक्ति) से निर्देश किया गया है। इस प्रकार पक्षतः प्राप्त (नियम) को भी इस अलंकार में स्वीकार किया जाता है। अतः 'युगपत् की संभावना' प्रायिक या सामान्य है (किन्तु निश्चित या नियत नहीं है)।

**संख्येति हि वाक्यवित्प्रसिद्धं लक्षणम्। तद्वैलक्षण्याय नियमनसामानाधिकरण्यं यत इत्थमतः पाक्षिकप्राप्तिरूपं नियमलक्षणमपि स्वीक्रियत इति युगपत् सम्भावनात्मकं परिसंख्यालक्षणमिह प्रायिकम्।**

**परिसंख्या त्वनेकत्र प्राप्तस्यैकत्र यन्त्रणम्।**
**चतुर्धा प्रश्नवर्ज्योक्त्योर्भावाभावादियं मता ॥**
**न परं युगपत् प्राप्तिः पक्षेऽपि प्राप्तिरिष्यते।**
**परिसंख्यानियमयोरतोऽत्रालौकिकी स्थितिः ॥**

**अर्थापत्त्यर्थं सूत्रम्—**

---

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते ॥

उदाहरण के लिए 'व्रीहीनवहन्ति' में विधि है, क्योंकि यहाँ जौ के अवघात का विधान है। 'समे देशे यजेत्' में नियम है क्योंकि सम तथा विषम इन दो पक्षों में से एकत्र नियमन है। 'पंच पंच नखाः भक्ष्याः'—पाँच पाँच नखवालों को खाना चाहिए —इसमें परिसंख्या है क्योंकि यहाँ अर्थान्तर का निषेधमात्र अभीष्ट है। आलंकारिक नियम और परिसंख्या दोनों को ही एक अर्थ में ग्रहण करते हैं क्योंकि उनके अनुसार दोनों में ही किसी एक या अनेक का निषेध समान तत्त्व है। नियम में दो में से एक का निषेध होता है तो परिसंख्या में विधि नहीं अपितु निषेध अभीष्ट रहता है।

१. अत्र—नि० नास्ति।

२. पाक्षिकप्राप्तिरपि—अ०।

## दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः ।।सू० ६४।।

**दण्डापूपयोर्भावो दण्डापूपिका। 'द्वन्द्वमनोज्ञादिभ्यश्च' (५-१-१३३) इति वुञ्। पृषोदरादित्वाच्च वृद्ध्यभावः। यथा अहमहमिकेत्यादाविति केचित्। अन्ये तु दण्डापूपौ विद्येते यस्यां नीतौ[1] सा दण्डापूपिका नीतिः। एवमहं शक्तोऽहं शक्तोऽस्यामिति अहमहमिकेतिवन्मत्वर्थी[2]-यष्ठन्नित्याहुः। अपरे तु[3] दण्डापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ'[4] (५-३-९६) इति कनं वर्णयन्ति। अत्र हि[5] मूषककर्तृकेण दण्डभक्षणेन**

दण्डापूपिका[6] से दूसरे अर्थ का आपादन (सिद्धि)अर्थापत्ति है ।।सू० ६४।।

दण्ड और अपूप (पुआ) में 'द्वन्द्वमनोज्ञादिभ्यश्च' (५।१।१३३) से भाव में वुञ् करने पर 'दण्डापूपिका' बनेगा। पृषोदरादि होने से इसमें वृद्धि नहीं होगी जैसे अहमहमिका आदि में, यह कुछ लोगों का मत है। दूसरे आचार्य कहते हैं कि दण्ड और अपूप जिस नीति (न्याय) में हो वह 'दण्डापूपिका नीति' कहलाती है। 'मैं समर्थ हूँ, मैं इसे करने में समर्थ हूँ' इस प्रकार अहमहमिका की भाँति मत्वर्थ ठन् प्रत्यय (दण्डापूपिका शब्द सिद्ध करने में) लगेगा। दूसरों का कहना है कि दण्डापूपिका 'दण्ड और अपूप की तरह' (इस समास से) इवे प्रतिकृतौ' (५, ३, ९६) सूत्र से कन् प्रत्यय होगा। चूहे के द्वारा डंडा खा लेने से उसके साथ बँधे पुआ का खा लेना अर्थतः सिद्ध होता है।

**"दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः ।।"**

**यथा दण्डभक्षणेनापूपभक्षणं कैमुत्येनापतति तथार्थान्तरस्यापतनमर्थापत्तिः। व्याचष्टे—दण्डापूपयोरिति। "द्वन्द्वमनोज्ञेति" वुञ्सिद्धौ पृषोदरादित्वेन वृद्ध्यभावे अहमहमिकादिनयेन दण्डापूपिकेति केचित्। अन्ये तु मत्वर्थीये ठनि रूपसिद्धिमिच्छन्ति। स्वसम्मतिमाह—अपरे त्विति। अपरे पुन"रिवे प्रतिकृता"विति कनोपमार्थत्वेन वर्णयन्ति। निष्कर्षार्थमाह—अत्रेति। अनुमानशङ्कां**

---

१. नीतौ—शा० ना० नास्ति। २. °तिम°—अ०।
३. तु—नि० नास्ति। ४. इवे प्रतिकृतौ कन्—शा१।
५. हि—शा० ना० नास्ति।
६. दण्डापूपिका वह तर्कप्रणाली है जिसके अनुसार आधेयरूप वस्तु उसी प्रकार स्वतः सिद्ध मानी जा सकती है जिस प्रकार किसी डंडे के गायब हो जाने पर उसमे बँधे हुए मालपुए का गायब होना।

**तत्सहभाव्यपूपभक्षणमर्थात्सिद्धम् । एष न्यायो दण्डापूपिकाशब्देनोच्यते । ततश्च[1] यथा दण्डभक्षणादपूपभक्षणमर्थायातं[2] तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायत्वलक्षणात् यदर्थान्तरमापतति, सार्थापत्तिः ।**

**न चेदमनुमानम् । समानन्यायस्य[3] संबन्धरूपत्वाभावात् । असंबन्धे चानुमानानुत्थानम्[4] । अर्थापत्तिश्च वाक्यविदां न्याय इति तज्जातीय[5]-त्वेनेहाभिधानम् । इयं च द्विविधा[6] । प्राकरणिकादप्राकरणिकस्यार्थस्या-**

इसी न्याय के लिए दण्डापूपिका शब्द है । अतः जिस प्रकार डंडा खा लेने से मालपुआ का खा लिया जाना (अर्थबल से) मालूम हो जाता है उसी प्रकार किसी अर्थ को सिद्ध करने में समर्थ होने से, तुल्य न्याय के आधार पर, दूसरे अर्थ की प्रतीति हो जाना ही अर्थापत्ति (अलंकार) है ।

यह अनुमान (अलंकार) से भिन्न है क्योंकि तुल्य न्याय में संबंध (नियत) नहीं होता है ।[7] और सम्बन्ध न रहने पर अनुमान का उदय नहीं हो सकता है । अर्थापत्ति मीमांसकों का न्याय है, उसी जाति की होने से यहाँ (वाक्य-न्यायमूलक अलंकारों के संदर्भ में इसका) निरूपण हुआ है । यह दो प्रकार

**निराचष्टे—न चेदमिति । समानन्यायस्य दण्डापूपवृत्तस्य । सङ्गतिमाह—अर्थापत्तिश्चेति । त ज्ञाते न्न (? तज्जाती) येन तत्सम्बन्धितया ।**

---

१. तथा च—ना० ।
२. °र्थादापतितं—अ० ।
३. समन्यायस्य—नि० ।
४. °नात्—नि० ।
५. तन्नयेने°—अ० । तत्प्रतीयत्वेन°—शा० ।
६. द्विधा—नि० ।
७. दण्ड खा लेने से अपूप का खा लेना समान न्याय के कारण उचित अवश्य है पर निश्चित नहीं है । सम्भव है कि दण्ड को खा लेने पर भी अपूप के इधर उधर हट जाने से या और किसी कारण से अपूप का भक्षण न हो अतः तुल्य न्याय के उदाहरणों में आने वाली दो वस्तुओं में सम्बन्ध का होना निश्चित नहीं होता है पर अनुमान में एक अर्थ से दूसरे अर्थ का ज्ञान, दोनों में नियत सम्बन्ध होने के कारण, निश्चित रहता है ।

[1]पतनमेकः प्रकारः। अप्राकरणिकात्प्राकरणिकस्यार्थापतनं[2] द्वितीयः। आद्यो यथा—

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥२१३॥

अत्र विभुवृत्तान्तः[3] प्राकरणिको लोकवृत्तान्तमप्रकारणिकमर्थादाक्षि[4]-पति। द्वितीयो यथा—

धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यम्।
रिपुसंज्ञकेषु गणना कैव[5] वराकेषु काकेषु ॥२१४॥

की है। प्रकृत से अप्रकृत अर्थ की सिद्धि, एक भेद है। और अप्रकृत से प्रकृत अर्थ की सिद्धि दूसरा भेद है।

प्रथम जैसे—

पार्वती-समागम के लिये उत्कण्ठित शिव भी उन दिनों को बड़ी मुशकिल से बिता सके। भला कौन दूसरा है जिसे ये भाव (स्त्रियाँ आदि विषय) अधीर नहीं बना देंगे, जब कि उस विभु को भी नहीं छोड़ते हैं ॥२१३॥

यहाँ विभु का वृत्तान्त प्रकृत है, जो अप्रकृत लोकव्यवहार का अर्थबल से आक्षेप कर लेता है। दूसरा जैसे—

भुजदण्ड से सुशोभित राजा के द्वारा धनुष धारण कर लेने पर पर्वत झुक नहीं जाते यही आश्चर्य है। शत्रु कहलाने वाले उन वराक कौओं की क्या गिनती? २१४॥

भेदायाह—इयं चेति।

पशुपतिरिति। उत्क उन्मनाः। विप्रकुर्युः वाढं विकुर्युः। अमी भावा वनितादयः। अप्राकरणिकापातं दर्शयति—अत्र विभुमिति।

धृतधनुषीति। स्थिरा अपि प्रह्वीभवन्ति, लोलेषु का कथा। अत्र प्राकरणिकार्थापातः। विच्छित्त्यन्तरायाह—क्वचित् त्विति।

---

१. °पतने—अ°। °कस्यार्थाप°—नि०।
२. °पतनं द्वितीयः प्रकारः।—नि०। ३. °वृत्तः—नि०।
४. अर्थात्—शा० ना० शा१ नास्ति।
५. क इव—नि०।

अत्र शैलवृत्तान्तोऽप्राकरणिकः[१] प्राकरणिकं[२] रिपुवृत्तान्तमर्थादाक्षिपति। [३]क्वचिन्न्यायसाम्ये[४] निमित्तं श्लेषेण [५]निर्दिश्यते—

अलंकारः शङ्काकरनरकपालं परिजनो[६]
विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः[७]।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि प्रभवति वयं के पुनरमी ॥२१५॥

अत्र विधौ वक्रे इति श्लिष्टम्। अप्राकरणिकाच्च [८]स्थाणुवृत्तान्तात्प्राकरणिकार्थापतनम्।

यहाँ पर्वतों का अप्रकृत वृत्तान्त शत्रुओं की हालत का अर्थबल से आक्षेप कर लेता है (जब पर्वत तक झुक जाते हैं तो फिर शत्रुओं का तो झुक जाना स्वतः सिद्ध है)। कभी कहीं समान न्याय होने का निमित्त श्लेष (श्लिष्ट अतिशयोक्ति) द्वारा निर्दिष्ट होता है।

जिस शिव का आभूषण भयंकर कपाल है, जिसके भृंगी (नामक) परिजन के अंग शीर्ण हैं, जिसका धन (केवल) एक बूढ़ा बैल है; यदि (उस) महादेव के मस्तक पर स्थित विधु (चन्द्रमा) के टेढ़े हो जाने पर उसकी यह हालत हो जाती है तो फिर विधि (भाग्य) के टेढ़े होने पर हमलोगों का क्या होगा ? २१५॥

यहाँ 'विधौ वक्रे' यह (अंश) श्लिष्ट है, और महादेव के अप्रकृत वृत्तान्त से प्रकृत अर्थ की प्रतीति होती है।

अलङ्कार इति। शङ्काकरं किमयं सेव्य उत नेति शङ्काजनकम्। विधुरिन्दुः, विधिर्दिष्टम्। शेषतः (? श्लेषेण) प्राकरणिकापातमाह—अत्र विधाविति।

अर्थापत्तिस्तु कैमुत्येनान्यार्थापात इष्यते।
प्रकृताप्रकृत(? ता)पातादियं च द्विविधा मता॥

---

१. अप्राकरणिकः—ना० शा० नास्ति।

२. रिपुवृत्तान्तं प्राकरिणकम्—अ० नि० पुस्तकयोर्वाक्ययोजना।

३. क्वचिच्च—अ०।

४. °साम्यस्य—अ०।

५. गम्यते—अ० नि०।

६. परिकरो—नि०।

७. बहुवयाः—अ०।

८. °णिकस्थाणु°—नि०।

## तुल्यबलविरोधो विकल्पः ।।सू० ६५।।

विरुद्धयोस्तुल्यप्रमाणविशिष्टत्वात्तुल्यबलयोरेकत्र[1] युगपत्प्राप्तौ विरुद्धत्वादेव यौगपद्यासंभवे विकल्पः। औपम्यगर्भत्वाच्चात्र चारुत्वम्। यथा—'नमन्तु[2] शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा' इत्यादि। अत्र प्रतिराजकार्ये नमने शिरसां धनुषां च तुल्यप्रमाणविशि[3]ष्टत्वम्। संधिविग्रहौ चात्र क्रमेण [4]तुल्यप्रमाणे,[5] प्रतिराजविषयत्वेन स्पर्धया द्वयोरपि संभाव्यमानत्वात्[6]। द्वौ चेमौ विरुद्धाविति नास्ति

दो समान बलवालों का विरोध विकल्प है ।।सू० ६५।।

दो विरोधियों के—जो समान प्रमाण से विशिष्ट होने से समान बल वाले होते हैं—एकत्र पाए जाने पर(परस्पर)विरोध होने से एक साथ रह पाना(जहाँ) सम्भव न हो तो (वहाँ) विकल्प (अलंकार) होता है। औपम्यनिष्ठ होने के कारण इसमें चारुता होती है। जैसे—'सिर को झुकाओ या धनुष को, आज्ञा को कान का आभूषण बनाओ या प्रत्यंचा को' इत्यादि (उदाहरण) में प्रतिपक्षी राजा द्वारा कार्यरूप में धनुष या सिर का झुकाना यहाँ दोनों ही समानबल हैं। सन्धि या विग्रह (सिर झुकाना सन्धि के लिए और धनुष को झुकाना विग्रह के लिए) दोनों ही क्रमशः समान प्रमाण हैं क्योंकि प्रतिपक्षी राजा के साथ स्पर्धा के कारण दोनों (सन्धि एवं विग्रह) की संभावना

विकल्पार्थं सूत्रम्—

"तुल्यबलविरोधे विकल्पः।"

विरुद्धयोस्तुल्यबलयोर्युगपत्प्राप्तौ विकल्पः। व्याचष्टे—विरुद्धयोरिति। तुल्यप्रमाणविशिष्टता तुल्यबलत्वे हेतुः। वैलक्षण्यं दर्शयति—औपम्यगर्भत्वादिति। लौकिकविकल्पस्यातथात्वात्। नमन्त्विति। सन्धौ शिरसां नतिः, विग्रहे धनुषाम्। एवमाज्ञामौर्व्योः कर्णपूरीकरणमपि। व्याचष्टे—अत्र प्रतिराजेति। नमनमिह प्रतिराजानां कार्यं, तत्र शिरांसि धनूंषि च सन्धिविग्रहप्रमाणकतया तुल्यबलानि विरुद्धत्वाद् युगपत् प्राप्त्ययोगे प्राप्नुवन्ति।

---

१. °श्लिष्टत्वात्°—ना० शा० शा १। २. नमयन्तु—अ०।
३. °श्लिष्टत्वम्—नि० शा१। ४. तुल्ये प्र०—अ०।
५. °प्रमाणेन—ना०।
६. सम्भाव्यत्वात्—अ०।

तयोर्युगपत्प्रवृत्तिः । [1]प्राप्नुवतश्चात्र[2] युगपत्प्रकारान्तरस्यानाशङ्क्यत्वात् । ततश्च न्यायप्राप्तो विकल्पः । नमनकृतं च तयोः सादृश्यमित्यलंकारता । एवं कर्णपूरीक्रियन्तामित्यादौ योजनीयम् । औपम्यगर्भत्वाच्चात्र[3] चारुत्वम् । क्वचिच्छ्लेषावष्टम्भेनाप्ययं[4] दृश्यते । यथा—

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं[5] नेत्रे तनुर्वा हरेः ॥२१६॥

की जा सकती है । ये दोनों परस्पर विरोधी है अतः इनकी एक साथ प्रबृत्ति नहीं हो सकती । और एक साथ प्राप्ति होने पर किसी दूसरे प्रकार (अलंकार भेद) की शंका नहीं की जा सकती है । अतः विकल्प न्यायतः प्राप्त है । चूँकि इन दोनों (सिर तथा धनुष) का सादृश्य 'झुकाना' (साधारण धर्म) से उत्पादित है, अतः इसमें अलंकारता है । इसी प्रकार 'कान का आभूषण बनाओ' इत्यादि में (अलंकार की) योजना कर लेनी चाहिए । सादृश्यगर्भता होने से इसमें चारुता है । कहीं यह (अलंकार) श्लेष के सहारे भी दिखाई देता है । जैसे—

भक्ति से झुकी दृष्टि से प्यार करने वाले, नील कमल से होड़ लगाने वाले, अभिलषित प्राप्ति के लिए समाधिस्थ योगियों द्वारा ध्यान का अवलम्बन बने हुए, सौन्दर्य के खान, लक्ष्मी की आँखों में रसिकता का संचार करने वाले, विष्णु के नेत्र अथवा उनका शरीर (तनु) आप लोगों की सांसारिक व्यथा दूर करे ॥२१६॥

**अतः साधनबाधनादिरूपगत्यन्तराभावाद् विकल्पः । वैधर्म्यं योजयति—नमनकृतमिति । एवं कर्णपूरीकरणेऽपि । वैचित्र्यान्तरायाह—औपम्येति । भक्तिप्रह्वेति । प्रणयिनी स्पर्धिनीत्यादौ प्रथमाद्विवचनैकवचनयोर्नपुंसकस्त्रीलिङ्गयोश्च श्लेषः । नीते हितेति, नीता ईहितेति च पदभङ्गः । निधी इति निधिरिति च ।**

---

१. प्राप्नुवतः—इति स्थाने 'ततश्च'—ना० ।
२. °तश्च युगपत् प्रवृत्तिम्—अ० । शा१ (?) ।
३. अत्र—ना० शा० शा१ नास्ति ।
४. °वलम्बनेना°—नि० । ५. °हरणम्—ना० ।

अत्र नेत्रे तनुर्वेति विकल्पः। उत्तमत्वाच्च [1]तुल्यप्रमाणश्लिष्टत्वम्। न चात्र समुच्चये वाशब्दः। संभवन्त्यामपि गतौ महाकविव्यवहारे तथा[2] प्रयोगाभावात्। ननु विरोधनिमित्तको[3] विकल्पः। कथं चात्र विरोधः। नैतत्। तनुमध्ये नेत्रयोः प्रविष्टत्वात्तयोः पृथगभिधानमेव न कार्यम्। कृतं च 'तत्स्पर्धिभावमेव'[4][5] गमयति। स्पर्धिभावाच्च[6] विरुद्धत्वम्। नेत्रे अथवा समस्तमेव शरीरमित्यर्थावगमे विरोधस्य

यहाँ नेत्र अथवा तनु में विकल्प है। (दोनों के ही) श्रेष्ठ होने से समान बल का श्लेष है। [7]यहाँ अथवा का प्रयोग समुच्चय के लिए नहीं हुआ है। यद्यपि यह हो सकता है (अर्थात् 'वा' का समुच्चय अर्थ लिया जा सकता है) किन्तु महाकवियों की परिपाटी में इस प्रकार का प्रयोग नहीं देखा जाता है। यह शंका की जा सकती है कि विकल्प का हेतु विरोध है और इस उदाहरण में (जहाँ नेत्र और तनु का वर्णन है) विरोध किस प्रकार है ? यह (शंका उचित) नहीं है। शरीर में नेत्र भी शामिल हैं, अतः उन्हें पृथक् रूप से बताना ही नहीं चाहिए। यदि (पृथक्) बताया जाता है तो उन दोनों की स्पर्धा का ही परिचायक होता है। स्पर्धा का होना ही विरोध का होना है। 'नेत्र अथवा सारा शरीर' यह अर्थ समझ लेने पर विरोध स्पष्ट हो जाता है। यह विरोध, इस उदाहरण में

योजयति—अत्र नेत्रे तनुरिति। समुच्चयभ्रमो मा भूदित्याह—न चेति। अनुशासनाद् गतिसम्भवेऽपि कविप्रयोगाभावान्न समुच्चयः। अप्रयुक्तदोषापत्तेः लक्षणे न्यूनतामाशङ्कते—नन्विति। परिहरति—नैतदिति। नेत्रे अथवेति

---

१. तुल्यप्रमाणम्—नि०। तुल्यप्रमाणविशिष्टत्वम्—अ०। तुल्यप्रमाणशिष्टत्वम्—शा१।

२. तथा—अ० पुस्तके, शा (?) पुस्तके च नास्ति।

३. °निमित्तः—नि०।

४. सत्—अ०।

५. °भाव ग°—अ०। °भावं ग°—नि०।

६. °भावश्च—नि०।

७. श्लोक में पठित 'प्रणयिनी' 'स्पर्धिनी' आदि विशेषणपदों में श्लेष से 'नेत्र' पद के अनुसार नपुंसक लिंग, तथा प्रथमा विभक्ति का द्विवचन है और तनु शब्द के अनुरूप स्त्रीलिंग और प्रथमा विभक्ति का एक वचन है।

सुप्रत्येयत्वात्[1]। स चात्र श्लेषाच्छ्लिष्टः[2], लिङ्गश्लेषस्य वचनश्लेषस्य चात्र दृष्टेः। तस्मात्समुच्चयप्रतिपक्षभूतो विकल्पाख्योऽलंकारः पूर्वैरकृतविवेकोऽत्र दर्शित इत्यवधातव्यम्[3]।

**गुणक्रियायौगपद्यं समुच्चयः ॥सू० ६६॥**

गुणानां वैमल्यादीनां यौगपद्येनावस्थानम्[4], तथैव[5] क्रियाणां च समुच्चयोऽलंकारः। विकल्पप्रातिपक्ष्येणास्य[6] स्थितिः। क्रमेण यथा—

विदलितसकलारिकुलं तव बलमिदमभवदाशु[7] विमलं च।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥२१७॥

श्लेष द्वारा होने से, श्लिष्ट है, क्योंकि यहां लिंग-श्लेष तथा वचनश्लेष दिखाई देता है। अस्तु, समुच्चय का प्रतिपक्षी विकल्प नामक अलंकार, जिसका विवेचन पूर्वाचार्यों ने नहीं किया था, यहां (मेरे द्वारा) बताया गया है; यह ध्यान में रखना चाहिए।

गुण तथा क्रिया का साथ-साथ रहना समुच्चय है ॥सू० ६६॥

गुणों का—विमलता आदि का—और इसी प्रकार क्रियाओं का साथ-साथ रहना समुच्चय अलंकार है। इसकी स्थिति (अर्थात् यहाँ निरूपण) विकल्प के प्रतिपक्षी होने से है। क्रमशः उदाहरण—

राजन्! शत्रुओं के समग्र वंश को नष्ट करने वाली तुम्हारी सेना तो शीघ्र ही विमल हो गई थी। और (शत्रुओं के) वे दुर्दान्त मुख मलिन पड़ गए थे ॥२१७॥

विकल्पस्वरूपोन्मीलनम्। श्लेषानुगममुद्घाटयति—स चात्रेति। निगमयति—तस्मादिति। स्वोपज्ञ इत्याह—पूर्वैरिति।

विरोधे तुल्यबलयोर्विकल्पः सन्निपातिनोः।
अश्लेषश्लेषभित्तित्वाद् द्विधायमुपवर्ण्यते ॥

समुच्चयार्थं सूत्रम्—

"गुणक्रियायौगपद्यं समुच्चयः" ॥

गुणानां क्रियाणां च यौगपद्यं समुच्चयः। व्याचष्टे—गुणानामिति। विकल्पेति सङ्गतिकथनम्। विग(द)लितेति। प्रखलमुखानि दुर्दान्तप्रचुराणि।

---

१. सुप्रत्ययत्वात्—अ०।
२. श्लेषाश्लिष्टः—अ०।
३ इत्यवगन्तव्यम्—नि०:
४. °स्थानेन—अ०।
५. च—अ० पुस्तकेऽधिकः।
६. °प्रतिपक्षेण—नि०, ना०।
७. °मिदमभवदद्य—अ०। °मिदमाशु—नि०।

अयमेकपदे तया वियोगः प्रियया [१]चोपनतोऽतिदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च [२]निरातपत्वरम्यैः ॥२१८॥

[३]एतद्विभिन्नविषयत्वेनोदाहरणद्वयम् । एकाधिकरणत्वेनाप्ययमलंकारो दृश्यते । यथा—

बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद्विदधाति सा विधुरिता साधो तदाकर्ण्यताम् ।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति भ्राम्यति
[४]प्रेङ्खत्युल्लिखति प्रणश्यति दलत्युन्मूर्छति [५]त्रुट्यति ॥२१९॥

एवं गुणसमुच्चयेऽप्युदाहार्यम् । केचित्पुनर्न केवलं गुणक्रियाणां व्यस्तत्वेन समुच्चयो, यावत्समस्तत्वेनापि भवतीति वर्णयन्ति । [६]उदाहरन्ति च—

इस प्रिया (उर्वशी) ने मेरे लिए यह अत्यन्त असह्य वियोग ला दिया है और साथ ही नवीन मेघों के घिर आने से ये दिन भी निरातप से रमणीय होने वाले हैं ॥२१८॥

ये दोनों उदाहरण भिन्न अधिकरण के आधार पर हैं । समान अधिकरण में भी यह अलंकार पाया जाता है । जैसे—

हे सौम्य ! तुम्हारे द्वारा दिल में चुभोए हुए प्रेम नामक नए शल्य से बेहाल वह क्या-क्या करती है, यह सुनलो । वह शय्या पर पड़ी रहती है, सूखी जा रही है, चिन्ता में डूबी रहती है, बकने लग जाती है, फीकी पड़ती जा रही है, चक्कर खाने लग जाती है, कांपने लगती है, जमीन आदि को कुरेदने लगती है मरी जा रही है, गली जा रही है, बेहोश हो जाती है और टूटती चली जा रही है ॥२१९॥

इसी प्रकार गुणों के समुच्चय का भी उदाहरण दिया जा सकता है। कुछ (आचार्य) गुण और क्रिया का पृथक् रूप (असमस्त) में ही नहीं अपितु समस्तरूप में भी समुच्चय होता है, यह मानते हैं और उदाहरण देते हैं—

**अत्र वैमल्यमालिन्ययोः समुच्चयः । अयमिति । एकपदे युगपत् । भवितव्यं भूतमित्यर्थः । अत्रोपनतिभूतिक्रिययोः । वैचित्र्यान्तरायाह—एवमिति । एतद्विभिन्नेति । बिभ्राणेति । शल्यभरणं (?) शयनादिक्रियाहेतुः । अत्र शयना-**

१. °तः सुदुः°—शा० ।　२. निरातपार्धरम्यैः—अ० ।
३. एतद्भिन्न°—अ० ना० ।　४. भ्राम्य°—अ० ।　५. त्रस्यति—अ० ।
६. उदाहरन्ति च—शा० ना० पुस्तकयोर्नास्ति ।

न्यञ्चत्कुञ्चितमुन्मुखं हसितवत्साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादि मुकुलं सप्रेम कम्प्रं[१] स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति[२] विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥२२०॥

तिरछी, कुंचित, उन्मुख, उल्लसित, भावभरी, टेढ़ी बल खाई हुई, फैली हुई, सस्मित, अधमुंदी, प्यारभरी, कम्पित, स्थिर, उद्वर्तित (भौंहतनी), मतवाली, बिखरी, विकसित, गड़ी हुई, तरंगित और सजल चितवन एक है पर शृंगार रस में डूबी होने से उसके (गुण और) व्यापार अनेक हैं ॥२१९॥

दीनामेकाधिकरणतया समुच्चयः । गुणसमुच्चयोऽपि सुज्ञान इत्याह—एवमिति । गुणक्रिययोः संहतयोरपि सम्भवतीति दर्शयति - केचिदिति । न्यञ्चदिति । चक्षुरिह चक्षुर्विकारः । एकैकं चक्षुरन्यक्रियं भिन्नव्यापारं वर्तते । कुतो हेतोः— रसवशात् । रस इह शृङ्गारः । दृग्विकाराणामेषां तदेकनिष्ठत्वात् कथं भिन्नक्रियं न्यञ्चत् न्यञ्चितमित्यर्थः, यदपाङ्गे न्यग्भवति । उक्तं मया भरतसंग्रहे—

"स्यान्न्यञ्चितं न्यञ्चदपाङ्गभाग" इति ।
"अपाङ्गसङ्कोचि तु कुञ्चितं स्यात्" ।

उन्मुखमित्युदञ्चितस्य लक्षणम् ।

"उदञ्चितं तूर्ध्वमपाङ्गसङ्गि निमेषशून्योल्लसितं विहासि ।
साकूतमाकाङ्क्षितभावगर्भमाकेकरं तिर्यगरालतारम् ॥"

व्यावृत्तं वलितम् ।

"तिर्यग् निवृत्तं वलितं विलोक्य प्रेम्णा सुदूरं परिवल्गदुल्कम् (?)" ।

प्रसादि प्रसन्नम् ।

"सभ्रूविलासं स्मयते प्रसन्नं सम्मीलयमानं मुकुलं वदन्ति" ।

सप्रेम प्रेमगर्भम् । "स्यात् प्रेमगर्भं मनसो द्रवाय" ।

कम्प्रम् उत्कम्पम् ।

"उत्कम्पमुत्कम्पितपक्ष्मतारम् । स्थिरं विदूरान्तरितार्थनिष्ठम्" ।

उद्भ्रु उद्वर्तितम् । "उद्वर्तितं तूर्ध्वविकम्पितभ्रु ।"

भ्रान्तं मदमन्थरम् । "विभ्रान्तरक्तं मदमन्थरं स्यात्" ।

अपाङ्गवृत्ति विक्षेपि । "विक्षेपि पार्श्वे यदपाङ्गवृत्ति" ।

विकसत् विकासि । "विकासि दृश्ये सविशेषलक्ष्मम्" ।

मज्जन्निहाञ्चितम् । "नासाग्रनिष्ठं तु निहञ्चिताख्यम्" ।

---

१. °कम्पम्—नि० शा० ना० । २. °वर्ति—अ० ।

अत्राकेकरादयो गुणशब्दा न्यञ्चदित्यादयः क्रियाशब्दा इति [1]सामस्त्येन गुणक्रियायौगपद्यम्। प्रसादिसप्रेमेत्यादीनां समासकृत्तद्धितेषु संबन्धाभिधानमिति संबन्धस्य वाच्यत्वात्। तस्य च सिद्धधर्मरूपत्वेन[2] गुणत्वाद् गुणशब्देन गुणयौगपद्यमत्र[3] द्रष्टव्यम्। एवमयं त्रिधा समुच्चयः।

यहाँ पर 'टेड़ी' ( आकेकर ) आदि गुण-शब्द हैं, तिरछी (न्यंचत्) आदि क्रिया शब्द हैं, इस प्रकार समस्तरूप में गुण तथा क्रिया का सहभाव है। सस्मित (प्रसादि) तथा प्यारभरी (सप्रेम) आदि शब्द समास, कृदन्त तथा तद्धित (के रूपों) में (चितवन के साथ अपना) सम्बन्ध ही बतलाते हैं चूंकि वह सम्बन्ध साक्षात् प्रतीत (वाच्य) होता है और सिद्धरूप होने से गुणरूप होगा अतः गुण शब्द से अभिहित होने के कारण गुणों का यौगपद्य ही माना जाएगा।[4] इस प्रकार यह समुच्चय तीन प्रकार का है।

तरङ्गोत्तरं तरङ्गितम्। "तरङ्गितं यद्द्युतिरूर्मिकल्पा"।
साश्रु उत्कण्ठितम्। "उत्कण्ठितं रागनिबद्धवाष्पम्"।

योजयति - अत्राकेकरेत्यादौ। नन्वाकूतप्रसादप्रेम्णां गुणवचनत्वेऽपि समासतद्धिताद्यर्थैस्तिरोधानमित्यत आह—प्रसादिसप्रेमेत्यादि। समासादयो हि सम्बन्धाभिधायिनः, सम्बन्धश्च सिद्धरूपो गुणात्मा न गुणवचनानां स्वभावं भिनत्ति। साकूतं सप्रेमेति समासः। प्रसादीति तद्धितः। निगमयति — एवमयमिति। व्यस्तत्वेनोभौ समस्तत्वेनैक इति त्रिधा।

"गुणक्रियायौगपद्ये त्रिविधः स्यात् समुच्चयः।"

---

१. समस्तत्वेन—अ०।

२. सिद्धरूपत्वेन—नि०।

३. ०मिति--नि०। अत्र – अ० नास्ति।

४. सम्बन्ध प्रधानतः दो प्रकार का होता है—सिद्ध तथा साध्य। सिद्ध सम्बन्ध गुणरूप होता है और साध्य सम्बन्ध क्रियारूप। समास, कृदन्त तथा तद्धित सम्बन्ध का अभिधान करते हैं, यह सम्बन्ध सिद्धरूप होने के कारण गुणरूप होगा अतः समास कृदन्त तथा तद्धित के शब्द गुण शब्द से अभिहित होंगे। इस प्रकार उपर्युक्त उदाहरण में सस्मित प्रसादि, सप्रेम आदि शब्द गुणरूप हैं।

[1]एकं समुच्चयं [2]त्रिप्रकारभिन्नं लक्षयित्वा द्वितीयं लक्षयति—

**एकस्य सिद्धिहेतुत्वेऽन्यस्य तत्करत्वं च ।।सू० ६७।।**

समुच्चय इत्येव । यत्रैकः कस्यचित्कार्यस्य सिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्योऽपि यदि [3]तत्स्पर्धया तत्सिद्धिं करोति, तदायमपरः समुच्चयः । न चायं समाध्यलंकारेऽन्तर्भवति । तत्र ह्येकस्य कार्यं प्रति पूर्णं साधकत्वम् । अन्यस्तु [4]तत्कार्यसौकर्याय काकतालीयेनापतति, तत्र समा-

तीन भेद वाले एक समुच्चय का स्वरूपविश्लेषण करने के बाद द्वितीय समुच्चय का लक्षण प्रस्तुत कर रहे हैं—

(किसी कार्य की सिद्धि में) एक (कारण) के साधक रहने पर (किसी) दूसरे कारण का भी उसी (कार्य) का साधक होना (द्वितीय समुच्चय है) ।।सू० ६७।।

(यह भी) समुच्चय ही है। जहाँ एक कारण किसी कार्य की सिद्धि के लिए हेतु रूप में प्रकान्त हो वहां यदि दूसरा (कारण) भी स्पर्धा से उस (कार्य) की सिद्धि कर डाले तो वह द्वितीय समुच्चय कहलाता है। इसका समाधि अलंकार में अन्तर्भाव नहीं किया जा सकता है। उसमें तो एक कारण कार्य का पूर्णतया साधक होता है, दूसरा केवल काकतालीय न्याय[5] से आ पड़ता है। ऐसी स्थिति में समाधि (अलंकार) का निरूपण होगा। पर जहाँ खलिहान में एक

समुच्चयान्तरायाह—एकमिति । सूत्रम्—

"एकस्य सिद्धिहेतावन्यस्य तत्करत्वं च" ।।

एकस्मिन् कस्यचित् सिद्धिहेतौ स्पर्धयान्यस्यापि तत्करत्वं समुच्चयः । व्याचष्टे—समुच्चय इत्यादि । इत्येवेत्यनुषङ्गकथनम् । समाधिवैधर्म्यायाह—न चायमिति । एकः पर्याप्तसाधकः, अन्यः काकतालीयवृत्त्या चेत् समाधिः । यथा खले कपोताः स्पर्धया प्रतिस्वमहमहमिकयावतरन्ति तथा भावे समुच्चय

---

1. एवं त्रिप्रकारभिन्नं समुच्चयं लक्षयित्वा—शा१ ।
2. प्रकारत्रयभिन्नम्—अ० । 3. तत्—अ० नास्ति ।
4. अन्यस्तु कार्याय – नि० शा१ । अन्यस्तु सौकर्याय—अ०, शा (?) ।
5. किसी घटना का केवल संयोगवश होना जैसे ताड़ के पेड़ के नीचे कौए के बैठते ही उसके ऊपर ताड़ के पके फल का चू पड़ना काकतालीय न्याय कहलाता है।

धिर्वक्ष्यते। यत्र तु[1] खलेकपोतिकया बहूनामवतारस्तत्रायं समुच्चयः। अतश्चानयोः [2]सुमहान्भेदः। [3]स एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च भवतीति त्रिधा भिद्यते। सतः शोभनस्य सता शोभनेन[4] समुच्चीयमानेन योगे यथा—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा [5]ह्येते भावा अमीभिरयं जनो
व्रजति नितरां दर्पं राजंस्त एव तवाङ्कुशाः ॥२२१॥

साथ कबूतर आ पड़ने की तरह बहुत से (कारण) जुट जाएं वहाँ यह (द्वितीय) समुच्चय होता है। इस प्रकार इन दोनों (अलंकारों) में बहुत बड़ा अन्तर है। यह समुच्चय सद्योग, असद्योग, तथा सत् एवं असत् के योग(सदसद्योग)में होता है इस प्रकार (इसके) तीन भेद हो जाते हैं। सत् अर्थात् शोभन का (दूसरे) सत् या शोभन से समुच्चय के रूप में योग (सद्योग) का उदाहरण—

विमल कुल, सुन्दर शरीर, शास्त्राभ्यास से विशद बुद्धि, विपुल बाहुबल, अपार समृद्धि और अखण्ड प्रभुता—ये ही वे सहज सुन्दर पदार्थ हैं जिनसे कोई भी व्यक्ति अभिमान में चूर हो जाया करता है पर राजन्! वे ही तुम्हारे लिए संयम (अंकुश) का कार्य करते हैं ॥२२१॥

इति महान् भेदः। खले कपोता अस्यां सन्ति नीताविति खलेकपोतिका। मत्वर्थीयष्ठन्। ननु काकतालीयमिति कथमुच्यते, काकस्यागमनं यादृच्छिकं, यादृच्छिकं तालस्य च पातस्तेन च पतता काकस्य वधः। एवं देवदत्तस्यागमनं दस्यूनां चोपनिपातस्तैश्च तस्य वधः। तत्र देवदत्तदस्युसमागमः काकतालसमागम इवेत्येक उपमार्थः। तद्वधः काकवध इवेति द्वितीयः। आद्यः समासार्थः काकतालमिति। द्वितीयस्तद्धितार्थं काकतालीयमिति। समासश्चायमस्मादेव ज्ञापकात् "समासाच्च तद्विषयात्" आकस्मिक इवार्थेच्छो भवतीति। तद्विषयवत् इवार्थविषयादित्यर्थः। एवमर्धजरतीयम्, अजाकृपाणीयं, घुणाक्षरीयमित्यादौ समासतद्धितौ ज्ञेयौ। भेदानाह--एष इति।

कुलमिति। यैर्जनो दर्पं व्रजति त एव तवाङ्कुशाः उन्मार्गनिवारकाः।

---

1. तु—ना० नास्ति।
2. अतः सुमहान् भेदोऽनयोः—इति नि० क्रमः।
3. एष—सं०।
4. शोभनेन—अ० शा१ नास्ति।
5. हि—नि० नास्ति।

अत्रामालिन्येन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनैः समुच्चयः। एकैकं च दर्पहेतुतायोग्यं [१]तत्स्पर्धया निबद्धम्। असतोऽशोभनस्यासताऽ-[२]शोभनेन समुच्चीयमानेन योगे यथा—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥२२२॥

अत्र [३]स्मरमार्गणानां दुर्वारत्वेनाशोभनानां तादृशैरेव [४]प्रियतमदूरत्वादिभिः समुच्चयः। नयवयःप्रभृतीनां च[५] यद्यपि स्वतः शोभनत्वम्, तथापि [६]विरहविषयत्वेनाशोभनत्वं ज्ञेयम्। सदसतः शोभनाशोभनस्य

यहाँ विमल होने से शोभन कुल का सुन्दर—शोभन—शरीर आदि के साथ समुच्चय है। यहाँ अभिमान पैदा करने में समर्थ हर एक का निबन्धन स्पर्धा से हुआ है। असत्(अशोभन)का असत् या अशोभन से समुच्चित होकर योग जैसे—

कामदेव के बाणों का सहना कठिन है, प्रियतम दूर है, मन अत्यन्त उत्सुक है, प्रेम प्रगाढ़ है, नई जवानी है, प्राणों का निकलना दूभर है, कुल पवित्र है, स्त्री होना ही धैर्य का विरोधी है, समय (ऋतु) काम के सहचर वसन्त का है, मौत की भी कुछ चलती नहीं है और हमारी सखियाँ चतुर नहीं हैं कि वे प्रियतम से मुझे मिला सकें फिर भला इस छली विरह को कैसे सहा जाए ॥२२२॥

यहाँ काम के बाण सहने में कठिन होने के कारण अशोभन हैं। इनका उसी प्रकार के (अर्थात् अशोभन) प्रियतम के दूर होने' आदि से समुच्चय है। नई जवानी आदि यद्यपि स्वतः शोभन होते हैं पर विरह के प्रसंग से उन्हें भी अशोभन समझा जाएगा। सत्-असत् का—शोभन-अशोभन का—उसी प्रकार

योजयति—अत्रामालिन्येति। अमालिन्यं शोभनत्वहेतुः। एकैकं चेत्यन्यस्य तत्करत्वं दर्शयति।

दुर्वारा इति। मन्मथसुहृद् वसन्तादिः। शठो वञ्चकः। योजयति—अत्र स्मरेति। नववयःप्रभृतेः कथमशोभनत्वमित्यत आह—नववय इत्यादि।

---

१. तत्—अ० शा० नास्ति। २. अशोभनेन—अ० शा१ नास्ति।
३. दुर्वारत्वेनाशोभनानां स्मरमार्गणानाम्—इति पाठक्रमो नि०।
४. प्रियतमादूर°–नि०। प्रियतमादि°–अ०। ५. च–शा० ना० नास्ति।
६. °विषयेनात्रा°—नि०। विषयत्वेनात्रा°—अ०।

**तादृशेन सदसता समुच्चीयमानेन योगे[1] यथा—**

**शशी दिवसधूसरो गलितयौवना कामिनी**
**सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।**
**प्रभुर्धनपरायणः सततदुर्गतः[2] सज्जनो**
**[3]नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥२२३॥**

**अत्र शशिनः [4]स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन[5] सदसतस्तादृशैरेव कामिनीप्रभृतिभिः समुच्चयः । न त्वत्र कश्चित्समुच्चीयमानः शोभनः, अन्यस्त्वशोभन इति सदसद्योगो व्याख्येयः । ननु**

सत्‌असत् से समुच्चित होकर योग का उदाहरण है—

दिन का कान्तिहीन चन्द्रमा, गलितयौवना कामिनी, कमलों से रहित तलाब, सुन्दर सुडौल पुरुष का विद्याविहीन मुख, धन के लोभ में पड़ा हुआ स्वामी, सदा फटेहाल सज्जन, राजदरबार में रहने वाला दुष्ट पुरुष - ये मेरे दिल के सात घाव हैं ॥२२३॥

यहाँ चन्द्रमा का—जो स्वतः तो शोभन है पर दिन में कान्तिहीनता से अशोभन होने के कारण सत-असत् या शोभन-अशोभन है—उसी प्रकार की कामिनी आदि (शोभनाशोभन) के साथ समुच्चय है । यहाँ कुछ समुच्चीयमान (दिन का कान्तिहीन चन्द्रमा आदि) शोभन हैं और कुछ दूसरे (राजदरबार) का दुष्ट पुरुष) अशोभन है इस प्रकार सदसत् का योग है, यह व्याख्या करना ठीक नहीं है । यहाँ यह शंका की जा सकती है कि राजदरबार में रहने वाला

**शशीत्यादि । शश्यादि विशेष्यं शोभनं धूसरत्वादिविशेषणवशादशोभनमिति विशिष्टस्य द्वैरूप्यं । तत्र तथाविधैः कामिन्यादिभिः समुच्चीयते । योजयति—अत्र शशिन इत्यादि । अन्यथा तु न योजनीयमित्याह—न त्वत्रेति । न व्याख्येयस्तथा सदसद्योगाविवक्षणादिति शेषः । अत्राक्षिपति—ननु नृपेति । नृपाङ्गणखलयोर्द्वयोरप्यशोभनत्वादन्ये शोभना इति कथं**

---

१. योगो—नि० ।
२. °दुर्गतिः—अ० ।
३. °ङ्कण°—अ० । सर्वत्र 'ङ्ग' स्थाने 'ङ्क' ।
४. सतः—ना० ।
५. °त्वे सद°—शा० ना० ।

नृपाङ्गणगतः खल इत्यशोभनोऽन्ये तु शोभना इति कथं[१] समुच्चीयमानस्य सतस्तादृशेनासता योगः । नैतत् । 'नृपाङ्गणगतः खलः' इति प्रत्युत प्रक्रमभङ्गाद्दुष्टमेव । न तु सौन्दर्यनिमित्तमित्युपेक्ष्यमेवैतत् । अत एवान्यैरेवमादौ सहचरभिन्नोऽर्थ इति दुष्ट[२]इत्युक्तम् । प्रकृते तु नृपाङ्गणगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वमिति समर्थनीयम् । एवमपि

दुष्ट पुरुष अशोभन है और दूसरे (शेष सभी) शोभन हैं फिर क्यों न समुच्चीयमान शोभन (दिन का म्लान चन्द्रमादि) का उसी प्रकार के (अर्थात् समुच्चीयमान) अशोभन (राजदरबार के दुष्ट पुरुष) के साथ योग मान लिया जाए ? यह ठीक न होगा, क्योंकि 'राजदरबार का दुष्ट पुरुष' यह अंश तो प्रक्रमभंग (दोष) के कारण सदोष है अतः सौन्दर्य का प्रयोजक नहीं हो सकता है इसलिए यह (शंका या व्याख्या) अमान्य है ।[३] अत एव दूसरे (आचार्यों)

**न तथा समुच्चयः ? परिहरति—नैतदिति । विशिष्टस्य द्वैरूप्यप्रक्रमे द्वयोरशोभनत्वम् । प्रक्रमभेदो वाक्यदोषः । प्रक्रमभेदावलम्बेन चान्यैर्दोषान्तरमुद्भावितमित्याह—अत एवेति । विशेष्यान्तरं सहचरं शोभनं खलस्वरूपं**

---

१. कथं न—अ० ।

२. दुष्टमेवेत्यु°—अ० । दुष्ट एवे°—नि० ।

३. पूर्वपक्षी की बात मानकर शशी आदि प्रथम छह को शोभन और अन्तिम 'राजदरबार के दुष्ट पुरुष' को अशोभन मानने पर प्रक्रम-भंग दोष होगा क्योंकि शोभन का वर्णन प्रक्रान्त होकर अशोभन में अन्त होना प्रक्रम का निर्वाह नहीं करता है । एक बात और है यदि शशी आदि शोभन है और केवल दुष्ट पुरुष ही अशोभन है तो एक ही घाव बताना चाहिए था । शल्य सात तो भी होंगे जब कि सभी में शोभन के साथ अशोभन का योग माना जाए । हाँ यह अन्तर अवश्य हैं कि शशी आदि में विशेषण अंश—दिन में कान्ति हीन होना—अशोभन है और राजदरबार के दुष्ट पुरुष में विशेष्यांश दुष्ट पुरुष अशोभन है । अतः इस दृष्टि से भी 'राजदरबार का दुष्ट पुरुष' यह अंश भग्नप्रक्रम (दोष) का उदाहरण है । प्रक्रम विशेषण को अशोभन और विशेष्य को शोभन बताने का था अन्त में उल्टा हो गया ।

**विशेष्यस्य शोभनत्वं प्रक्रान्तम्, विशेषणस्य त्वशोभनत्वम्, इह त्वन्यथेति न सर्वथा निरवद्यमेतत्[1]। ननु 'दुर्वाराः स्मरमार्गणाः' इत्य[2]त्रोक्तोदाहरणवत्कथं न सदसद्योगः। नैतत्। इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा। तत्र त्वशोभनमेवैतदिति विवक्षितमित्यस्त्यनयो[3]र्भेदः। अत एवैकत्रोपसंहृतं 'मनसि सप्तशल्यानि'[4] इति। सुन्दरत्वे-**

ने इस प्रकार के उदाहरणों में सहचर-भिन्न (नामक) अर्थदोष माना है।[5] और यदि प्रस्तुत उदाहरण में राजदरबार में रहने के नाते शोभन और दुष्ट होने के नाते अशोभन यह माना जाए तब भी विशेष्य का शोभन होना और विशेषण का अशोभन होना प्रकरणप्राप्त था पर इस अंश (राजदरबार का दुष्ट पुरुष) में उल्टी बात है अतः किसी भी प्रकार यह अंश निर्दोष नहीं है। यह प्रश्न हो सकता है कि 'काम के दुर्वार बाण' में भी उपर्युक्त उदाहरण (अंश) की तरह सदसद्योग क्यों न माना जाए ? नहीं। इस अंश (काम के दुर्वार बाण) में शोभन या सत् होने पर भी अशोभन कहना विवक्षित है। किन्तु दूसरे अंश (अर्थात् राजदरबार का दुष्ट पुरुष) में तो उसका अशोभन होना ही विवक्षित है इस प्रकार इन दोनों में अन्तर है। (पर सभी शोभन होकर व्यथाहेतु हैं) इसलिए एक जगह उपसंहार करते हुए कहा गया है 'दिल

**त्वशोभनमिति सहचरभिन्नोऽर्थः। अतोऽत्रेत्थं विवक्षणीयमित्याह—प्रकृते त्विति। तथापि न दोषनिवृत्तिरित्याह—एवमपीति। पूर्वोदाहरणे सदसद्योगमाशङ्कते—ननु दुर्वारा इति। स्मरमार्गणादीनां शोभनत्वं दुर्वारत्वादीनामशोभनत्वमिति प्रतीतेः। परिहरति—नैतदिति। विवक्षाभेदे गमकमाह—अत एवेति। सुन्दरत्वेनान्तः प्रविष्टानामपि शश्यादीनां धूसर-**

---

१. एतत्—अ० नि० नास्ति।

२. अत्र—नि० नास्ति।

३. अस्ति भेदोऽनयोः—अ० शा० ना० क्रमः। ४. मे इति—ना०।

५. काव्यप्रकाश के अनुसार सहचरभिन्नत्व दोष वहाँ होता है जहाँ किसी ऐसे अर्थ का अभिधान हो जो अन्य सजातीय अर्थों में विजातीय प्रतीत होता है। देखिए—काव्यप्रकाश ७।२७९। 'दिन का कान्तिहीन चन्द्रमा' आदि में साथ में वर्णित शेष अर्थों में विशेष्यांश शोभन है और विशेषणांश अशोभन है पर 'राजदरबार का दुष्ट पुरुष' में इन सहचरों से भिन्न अर्थ है—विशेषणांश शोभन है और विशेष्यांश अशोभन।

नान्तःप्रविष्टानामपि व्यथाहेतुत्वात्। अपरत्र तु[1] 'कथं सोढव्यः' इति सर्वथा[2] दुष्टत्वाभिप्रायेण[3]। तस्मादस्ति प्रकारत्रयस्य विविक्तविषयत्वम्[4]।

**कारणान्तरयोगात्कार्यस्य सुकरत्वं समाधिः ॥ सू० ६८॥**

केनचिदारब्धस्य कार्यस्य कारणान्तरयोगाद्यत् सौकर्यं[5], स सम्यगाधानात्समाधिः। समुच्चयसादृश्यात्तदनन्तरमुपक्षेपः। तद्वैलक्षण्यं[6] प्राक्प्रतिपादितमेव। उदाहरणम्—

के सात घाव हैं' क्योंकि शोभन के रूप में दिल में रहने पर भी (ये सभी) व्यथा ही देते हैं। पर दूसरे स्थल (असद्योग के उदाहरण) में 'कैसे सहा जाए' यह सर्वथा अशोभन होने के अभिप्राय से ही कहा गया है। इस प्रकार तीनों भेदों का क्षेत्र अलग है।

दूसरे कारणों के संयोग से किसी कार्य का सुकर हो जाना समाधि है ॥सू० ६८॥

किसी (कारण) द्वारा आरब्ध कार्य का दूसरे कारणों के संयोग से सुकर हो जाना, सम्यक् आधान—सम्यक् सम्पादन—हो जाने से समाधि (अलंकार) होता है। समुच्चय से समानता होने के कारण उसके बाद इस (अलंकार) का निरूपण शुरू हुआ है। उस अलंकार की (इससे) भिन्नता का प्रतिपादन पहले ही किया जा चुका है। उदाहरण—

त्वादिना वैयर्थ्यहेतुत्वमुपसंहृतम्। दुर्वारा इत्यत्र त्वित्थं शठः कथं सोढव्य इति सर्वथा कष्टत्वमेवोपसंहृतम्। निगमयति—तस्मादिति।

एकक्रियायामन्यस्य क्रिया त्वन्यः समुच्चयः।
सदसद्द्वैधयोगेन स त्रिधा संव्यवस्थितः॥

समाध्यर्थं सूत्रम्—

"कारणान्तरयोगात् कार्यस्य सुकरत्वं समाधिः" ॥

आरब्धस्य कार्यस्य कारणान्तरयोगात् सम्यगाधानं समाधिः। व्याचष्टे—

---

१. तु०—ना० नास्ति।
२. सर्वथा—अ० नास्ति।
३. दुष्टाभिप्रायः—ना०।
४. °यता—अ०।
५. सौकर्यं यत्—अ० नि० क्रमः।
६. तु प्राक्—अ० नि०।

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥२२४॥

माननिराकरणे कार्ये पादपतनं हेतुः । तत्सौकर्यार्थं[1] घनगर्जितस्य कारणान्तरस्य प्रक्षेपः । सौकर्यं चोपकारायेत्यनेन[2] प्रकाशितम् ।

एवं वाक्यन्यायाश्रयिणोऽलंकारान्प्रतिपाद्याधुना लोकन्यायाश्रयिणोऽलंकारा उच्यन्ते । तत्र—

[3]प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम् ॥सू० ६९॥

मैं (अपनी प्रियतमा का) मान दूर करने के लिए उसके पैरों पर गिरना चाहता था कि भाग्यवश मेरी सहायता करने के लिए बादलों की यह गड़गड़ाहट शुरू हो गई ॥२२४॥

'मान दूर करना' कार्य का हेतु पैरों पर गिरना है। उस (कार्य) की अनायास सिद्धि के लिए दूसरे कारण—बादलों की गड़गड़ाहट—का उपन्यास किया गया है।' सहायता करने के लिए' यह (पद) सुकरता को व्यक्त करता है।

इस प्रकार वाक्यन्यायमूलक अलंकारों का निरूपणकर अब लोकन्याय-मूलक अलंकारों का विवेचन किया जाएगा। इनमें से—

प्रतिपक्ष (प्रधान प्रतियोगी) का प्रतीकार करने में समर्थ न होने पर उसके सम्बन्धी का तिरस्कार प्रत्यनीक (अलंकार) है ॥सू० ६९॥

केनचिदिति । समुच्चयेति सङ्गत्युक्तिः । समुच्चयवैधर्म्यं स्मारयति—तद्वैलक्षण्यमिति ।

मानमिति । पादपतने कारणे गर्जितं कारणान्तरम् । योजयति—माननिराकरण इति । उपकारेति सौकर्यप्रकाशनम् ।

समाधिः सम्यगाधानं कारणान्तरयोगतः ।

सङ्गत्यन्तरायाह—एवं वाक्येति । प्रत्यनीकार्थं सूत्रम्—

"प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्" ॥

बलवतस्तिरस्काराशक्तौ तदीयतिरस्कारः प्रत्यनीकवदिति प्रत्यनीकम् ।

---

१. °र्थं तु—अ० ।

२. °इति पदे—नि० । इति चानेन—ना० । °येति—अ० ।

३. °प्रतिपक्षतिरस्काराशक्तौ तदीयस्य तिर°—नि० ।

यत्र बलवतः प्रतिपक्षस्य दुर्बलेन प्रतिपक्षेण प्रतीकारः कर्तुं न शक्यत इति तत्संबन्धिनो दुर्बलस्य यत्[1] तं बाधितुं तिरस्कारः क्रियते, तत्प्रत्यनीकम्। अनीकस्य सैन्यस्य प्रतिनिधिः प्रत्यनीकमुच्यते[2]। तत्तुल्यत्वादिदमपि प्रत्यनीकमुच्यते। यथानीकेऽभियोक्तव्ये तत्रासामर्थ्यात्तत्प्रतिनिधिभूतमन्यदभियुज्यते, तद्वदिह प्रतिपक्षे विजेये तदीयस्य दुर्बलस्य तिरस्करणमित्यर्थः। प्रतिपक्षगतत्वेन बलवत्त्वख्यापनं प्रयोजनम्। यथा—

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥२२५॥

जब दुर्बल प्रतिपक्ष बलवान् प्रतिपक्ष का प्रतीकार न कर सके अतः उसे (बलवान् प्रतिपक्ष) परेशान करने के लिए उससे संबंधित किसी दुर्बल का तिरस्कार करे तो वह प्रत्यनीक कहलाता है। अनीक अर्थात् सैन्य का प्रतिनिधि प्रत्यनीक कहलाता है। उसी की समानता से इस (अलंकार) को भी प्रत्यनीक कहा जाता है। जिस प्रकार सैन्य पर आक्रमण अभीष्ट हो पर उस पर (आक्रमण करने की) शक्ति न होने से उसके प्रतिनिधिभूत दूसरे प्रतिपक्ष पर आक्रमण किया जाता है उसी प्रकार इस (अलंकार) में जिस प्रतिपक्ष को जीतना है उसके सम्बन्धी दुर्बल (सहायक) का तिरस्कार अभिप्रेत रहता है; जिसका प्रयोजन है—प्रधान प्रतियोगी को अधिक समर्थ बताना। यथा—

सिर काटने के कारण वैर मोल लेने वाला राहु उस (चतुर कृष्ण) का तो कुछ भी बिगाड़ नहीं सकता है पर उसके सुन्दर मुख के समान आकार वाले चन्द्रमा को अभी भी परेशान किया करता है ॥२२५॥

व्याचष्टे—यत्र बलवदित्यादि। तत्सम्बन्धिनः बलवत्सम्बन्धिनः। तं बाधितुं बलवन्तं बाधितुम्। अत्र दृष्टान्तमाह— यथा अनीक इति। प्रयोजनमाह— प्रतिपक्षेति।

यस्य किञ्चिदिति। यस्य कृष्णस्य, विग्रहः कलहः, कान्तेन वक्त्रेण,

---

१. यत्—नि० नास्ति।

२. उच्यते—अ० नास्ति।

३. °अन्यमन्यद°—शा १।

अत्र राहोः [1]कृष्णो बलवान्विपक्षः। तदीयः पुनर्वक्त्रसादृश्यमुखेन[2] दुर्बलश्चन्द्रमाः[3]। [4]तत्तिरस्काराद्भगवतः प्रकर्षावगतिः[5]।

**उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम् ॥सू० ७०॥**

उपमेयस्यैवोपमानभारोद्वहनसामर्थ्यात्[6] यदुपमानस्य कैमर्थक्येनाक्षेप आलोचनं क्रियते, तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीपमिति व्यपदेशः। [7]यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतितिष्ठापयिषयानादरणार्थमुपमेयत्वं कल्प्यते, तत्पूर्वोक्तगत्या द्वितीयं प्रतीपम्। क्रमेण[9] यथा—

यहाँ राहु की अपेक्षा कृष्ण अधिक बलवान् प्रतिपक्ष है पर उनके मुख के समान होने से उनसे सम्बन्धित चन्द्रमा दुर्बल है, उसका तिरस्कार करने से भगवान् के प्रकर्ष का ज्ञान होता है।

उपमान का आलोचन या (उसे) उपमेय बनाना प्रतीप है ॥सू० ७०॥

उपमेय द्वारा ही उपमान का कार्य कर लेने के नाते उपमान को अनुपयोगी समझ कर उसका आक्षेप अर्थात् आलोचन करना प्रतीप का प्रथम रूप है। चूँकि उपमेय उपमान के प्रतिकूल रहता है अतः इसे प्रतीप कहा जाता है। इसी प्रकार उपमानरूप में प्रसिद्ध (चन्द्रादि) की उपमेयरूप में कल्पना, जो उपमानान्तर की प्रतिष्ठा तथा प्रसिद्ध उपमान का तिरस्कार करने के लिए होती है, पूर्वोक्त न्याय के अनुसार प्रतीप का दूसरा भेद कहलाती है। क्रमशः उदाहरण—

सदृशाकृतिम् (तिः)। योजयति—अत्र राहोरिति। तत्तिरस्कारादिति प्रयोजनोक्तिः।

तदीयस्य तिरस्कारः प्रत्यनीकमशक्तितः।

प्रतीपार्थं सूत्रम्—"उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम्"॥

उपमेयस्यैव पुष्कलगुणवत्त्वविवक्षणेनोपमानस्य कैमर्थक्यं प्रातिकूल्यादेकं

१. सकाशाद् भगवान् बल°—नि०। राहोर्भगवान्—अ०।
२. सदृशमत्वेन—शा०। सदृशत्वेन—ना० शा१।
३. चन्द्रः—शा० ना० शा१। ४. तन्निराकरणाद्—अ० शा०।
५. °गमः—शा० ना०। ६. °मानोद्वहनभारसाम°—शा० शा१।
७. यत—नि० शा१ नास्ति। °स्याक्षेप कैमर्थक्येनालो°—अ०।
८. यद्युप°—नि०। ९. क्रमेणोदाहरणम्—अ० ना०।

'यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं, भारस्तु[1] कुवलयदलमाल्यानि' इत्यादि। यथा वा—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥२२६॥

अत्र यथासंख्यमप्यस्तीति प्राक्प्रतिपादितम्।

ए एहि दाव सुंदरि कण्णं दाऊण सुणसु वअणिज्जं।
तुज्झ मुहेण किसोअरि! चंदो उअमिज्जइ[2] जणेण ॥२२७॥

[ अयि एहि तावत् सुन्दरि कर्णं दत्त्वा श्रृणुष्व वचनीयम्। तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥ ]

जहाँ प्रमदाओं के नयन ही सहज शिरोमाल्य थे, कुवलयदल की मालाएँ तो बोझ थीं। अथवा जैसे—

देव! जब विधाता ने सौन्दर्य के निधान, महनीय प्रतापी, त्यागियों में शिरोमणि, पृथ्वी के भार को ढोने में समर्थ भुजदण्ड वाले तुम्हें बना डाला फिर चन्द्रमा को क्यों गढ़ा? यह सूरज क्यों बनाया? इस चिन्तामणि को क्यों पैदा किया? और इन कुलाचलों की भी व्यर्थ ही, क्योंकर रचना की? ॥२२६॥

इस उदाहरण में यथासंख्य भी है यह पहले बताया जा चुका है।

ए सुन्दरि! आओ, आओ तो। कान देकर सुनों इस निन्दा को। कृशोदरी! लोग तुम्हारे मुख से चन्द्रमा की उपमा देने लगे हैं ॥२२७॥

प्रतीपम्। यच्चोपमानान्तरार्थं प्रसिद्धोपमानस्योपमेयत्वक्लृप्तिरनादराद् तद् द्वितीयम्। व्याचष्टे—उपमेयस्यैवेत्यादि।

यत्र चेति। चक्षुष एव मुण्डमालात्वमिति कुवलयदाम्नो नैरर्थक्यम्। अलङ्कारान्तरसम्भेदेनापरमुदाहरति—लावण्येति। लावण्यौकस्त्वादिगुणानामुपमेय एव पौष्कल्याद् इन्द्वाद्युपमानानां कैमर्थक्यम्। सम्भेदमनुस्मारयति—

अत्र यथासंख्यमपीति। ए एहीति। ए इत्यामन्त्रणे।

ए एहि तावत् सुन्दरि कर्णं दत्त्वा श्रृणु वचनीयम्।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥

---

१. तु—अ० नास्ति। २. °उवमि°—अ०।

अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम्। वदनस्य [1]चोपमानत्वविवक्षात्र प्रयोजिका। क्वचित् पुनर्निष्पन्नमे[2]-वौपम्यमनादरकारणम्[3]। यथा—

[4]गर्वमसंवाह्यमिमं लोचनयुगलेन[5] किं[6] वहसि मुग्धे[7]
सन्तीदृशानि दिशि दिशि सरःसु ननु[8] नीलनलिनानि ॥२३७॥

अत्रोत्कर्षभाज उपमानस्य[9] प्रादुर्भाव एव न्यक्कारकारणम्।

यहाँ उपमान रूप में प्रसिद्ध चन्द्रमा का अपकर्ष दिखाने के लिए उपमेय के रूप में उद्भावन हुआ है। मुख का उपमान बताना ही (इस कल्पना का) प्रयोजक है। कहीं पर सिद्ध औपम्य[10] भी (उपमान के) तिरस्कार का कारण बनता है। जैसे—

मुग्धे! तुम्हें अपने नयनयुगल का इतना अभिमान क्यों है? इस तरह के नीलकमल तो हर तरफ सरोवरों में भरे पड़े हैं ॥२२७॥

यहाँ उत्कृष्ट उपमान (नेत्रयुगल) का प्रादुर्भाव ही (लोकप्रसिद्ध उपमान किन्तु उपमेय रूप में परिकल्पित नीलकमलों के) तिरस्कार का कारण है।

**चन्द्रस्योपमानत्वं वचनीयमिति कथनाच्चन्द्रस्य निकृष्टत्वेनोपमेयत्वं क्लृप्तम्। प्रयोजनं तु मुखस्योपमानता। योजयति—अत्रोपमानत्वेनेति। क्वचिदुपमानस्य सत उपमानत्वमेव न्यक्करणादलङ्कारं समुत्थापयतीत्याह—क्वचित् पुनरिति।**

**गर्वमिति। ईदृशानि नलिनानि सन्तीत्युपमानाविर्भाव एव निःसामान्यस्य लोचनयुगलस्य न्यक्कारः। योजयति—अत्रोत्कर्षेति। यथात्रोपमेयस्यो-**

१. चात्रोपमानत्वविवक्षा प्रयोजिका—शा० ना० क्रमः।
२. एव—शा० नास्ति।
३. °निमित्तम्—ना०।
४. °सम्भाव्य°—अ०।
५. °युगेन—ना०।
६. वहसि किम्—ना०।
७. भद्रे—अ० नि० शा१।
८. ननु—शा१ प्रमादाच्च्युतमस्ति।
९. °मानप्रा°—अ० शा१।
१० पहले उदाहरण में औपम्य की निष्पत्ति इसलिए नहीं है क्योंकि उथमेय मुख की अपेक्षा उपमान चन्द्र में सौन्दर्यादि गुणों की कमी है। औपम्य की अनिष्पत्ति ही 'वअणिज्जम्' (वचनीयम्) पद के द्वारा सूचित होती है।

अनेन [1]न्यायेनात्युत्कृष्टगुणत्वाद्यदुपमानभावमपि[2] न सहते [3]तस्यैवोपमानभावकल्पने प्रतीपमेव । यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥२२९॥

अत्र हालाहलत्वं [4]प्रकृष्टदोषत्वादसंभाव्योपमानभावमप्युपमानत्वेन[5] निबद्धम् ।

**वस्तुना वस्त्वन्तरनिगूहनं [6]मीलितम् ॥सू० ७१॥**

इसी रीति से जो वस्तु अत्यन्त उत्कृष्ट गुण के कारण उपमान नहीं बन सकती उसकी उपमान रूप में कल्पना करने पर भी प्रतीप (अलंकार) ही होता है । जैसे—

अरे भई हलाहल ! 'मैं ही अत्यन्त भयंकर (वस्तुओं) का गुरु हूँ' यह अभिमान मत करो । इस संसार में दुर्जनों के तुझ सरीखे बहुत से वचन पाये जाते हैं ॥२२९॥

यहाँ हलाहल का, प्रकृष्ट दोष के कारण, उपमानभाव असम्भावित है पर फिर भी उसे उपमानरूप में दिखाया गया है ।

एक वस्तु द्वारा वस्त्वन्तर का तिरोधान मीलित है ॥सू० ७१॥

पमानासहत्वं तथैवातिप्रकर्षादुपमानभूमिमप्यतिपतते । उपमानत्वक्लृप्तिः प्रतीपमित्याह—अनेनेति ।

अहमेवेति । दारुणत्वकाष्ठाप्राप्तस्य हालाहलस्य दुर्जनवचनोपमानताक्लृप्तिर्न्यक्काराय । तदेतद् योजयति—अत्र हालाहलत्वमिति ।

उपमानस्य कैमर्थ्यादुपमेयत्वकल्पनात् ।
द्विधा प्रतीपं क्वाप्येतदुपमानत्वतोऽपि च ॥

निमीलितार्थं सूत्रम्—"वस्तुना वस्त्वन्तरनिगहनं निमीलितम्" ॥

---

१. °अति° नि० नास्ति । २. भावत्वमपि—ना० ।
३. तस्योपमाभावत्वकल्पितम्—नि० । तस्योपमानत्वक°—अ० शा० ।
४. °भाव्यमानोपमेय°—नि० । ५. चोपमानभावेन—ना० ।
६. निमीलितम्—अ० । समुद्रबन्धोऽपि प्रकृतालङ्कारं निमीलिताभिधानेनैव स्मरति । नास्माकमादर्शपुस्तकेषु क्वापि अभिधानमेतद् दृष्टम् । विमर्शनीकृदपि मीलितनाम्नैवालङ्कारं प्रकृतमभिधत्ते । सर्वस्वकारोऽपि तद्गुणसूत्रवृत्तौ मीलिताभिधानेनैव स्मरति ।

सहजेनागन्तुकेन वा लक्ष्मणा [1]यद्वस्त्वन्तरेण वस्त्वन्तरं निगूह्यते तदन्वर्थाभिधानं मीलितम्। न चायं सामान्यालंकार [2]एव तस्य हि साधारणगुणयोगाद्भेदानुपलक्षणं रूपम्। अस्य तूत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानमिति महाननयोर्विशेषः[3]। सहजेन यथा—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
　　विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति [4]स्फुरितमङ्गकैर्मृगदृशां[5] स्वतो लीलया
　　[6]तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥२३०॥

स्वाभाविक अथवा आगन्तुक (औपाधिक) चिह्न द्वारा यह जो किसी वस्तु से दूसरी वस्तु का निगूहन तिरोधान— है वह अन्वर्थसंज्ञक मीलित (अलंकार कहलाता) है। यह सामान्यालंकार मात्र नहीं है। इस (अलंकार) का तो सामान्यगुणों से योग के कारण (दो वस्तुओं में) भेद का न मालूम पड़ना स्वरूप है। पर इस (अलंकार) में उत्कृष्टगुण (वस्तु) द्वारा निकृष्ट गुण वाली वस्तु का तिरोधान होता है अतः इन दोनों (सामान्य तथा मीलित अलंकारों) में महान् भेद है। स्वाभाविक (चिह्न द्वारा वस्तु के तिरोधान) का उदाहरण—

मृगनयनी के आँखों की कोर चपल हैं, वाणी में मीठे और बाँके वैन हैं, चाल विलास के भार से मन्थर है, मुख अत्यन्त कमनीय है। इस प्रकार (इस मृगनयनी के) अंगों में विलास स्वतः स्फुरित हो रहा है। अतएव इस में (मदिरापान से होने वाला) नशे होने पर भी दिखाई ही नहीं पड़ रहा है ॥२३०॥

**वस्तु वस्त्वन्तरं सहजेन लक्ष्मणा यन्निगूहति (?) आगन्तुकेन वा तन्निगूहित्वान्निमीलितम्। व्याचष्टे सहजेनेत्यादि। सामान्यतो भेदमाह—न चायमिति। तस्य हि गुणसाधारण्यात् भेदानुपलक्षणं लक्षणम्। अस्य पुनरुत्कृष्टेन गुणेन निकृष्टगुणस्य स्थगनम्।**

---

१. 'अपरे तु वस्तुनो वस्त्वन्तरनिगूहनमिति पाठ इत्यभिदधते' समुद्रबन्धः स्वीयटीकायां पाठान्तरमिदं स्मरति।

२. एव—अ० नि० नास्ति।

३. भेदः—शा० (?)।

४. °के°—अ० ना०।

५. °दृशः—अलंकार रत्नाकरे।

६. यदत्र—नि०।

अत्र दृक्तारल्यादिना स्वाभाविकेन लक्ष्मणा मदोदयकृतं दृक्तारल्यादि तिरोधीयते। आगन्तुकेन [१]यथा—

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं[२]
तेषामहो बत भिया न बुधोऽप्यभिज्ञः ॥२३१॥

अत्र[३] हिमाद्रेः कन्दरानिवासामर्थ्यात्[४] प्रतिपन्नेन[५] शैत्येन समुद्भाविताावागन्तुकौ कम्परोमाञ्चौ भयकृतयोस्तयोस्तिरोधायकौ। तिरोधायकत्वादेव च मीलितव्यपदेशः।

यहाँ चितवन की चंचलता आदि स्वाभाविक चिह्न से मदोदय से उत्पन्न चितवन की चंचलता आदि का तिरोधान हो गया है। आगन्तुक (चिह्न द्वारा तिरोधान) का उदाहरण—

हे राजन्! तुम्हारे आक्रमण से भयभीत तुम्हारे जो शत्रु लाचार होकर हिमालय की कन्दराओं में पड़े रहते हैं उनके कम्पित और रोमाञ्चित शरीर धारण करने पर भी उनके भय को बुद्धिमान व्यक्ति भी (सही अर्थ में) नहीं जान पाता है ॥२३०॥

यहाँ हिमालय की कन्दराओं में निवास करने की अर्थशक्ति से निश्चित शैत्य से उद्भावित आगन्तुक कम्प तथा रोमांच, ड़र के कारण उत्पन्न उन (कम्प तथा रोमांच) दोनों के तिरोधायक हैं। तिरोधान करने के कारण ही (इस अलंकार का) नाम मीलित है।

अपाङ्गेति। अङ्के लीलया इति स्फुरितम्। इत्थं लीलया प्रससारेत्यर्थः। दृक्तारल्यादिना सहजेन लक्षणेन लीलामदोदयहेतुकं दृक्तारल्यादि तिरोदधाति। योजयति—अत्र दृक्तारल्येति।

ये कन्दरास्विति। त्वत्पातशङ्कितधियस्त्वदापातशङ्काचकिताः। अत्र हि मामागन्तुकलक्षणाभ्यां कम्परोमाञ्चाभ्यां भयकृतौ कम्परोमाञ्चौ स्थगयति। योजयति— अत्र हिमाद्रीति।

---

१. च यथा—अ०।
२. सवाष्पं—शा१।
३. हिमाद्रिकन्दरा°—अ० नि०।
४. सामर्थ्यप्रति°—नि०।
५. निष्पन्नेन—शा० ना० शा१।

प्रस्तुतस्यान्येन [1]गुणसाम्यादैकात्म्यं सामान्यम् ।।सू० ७२।।

यत्र प्रस्तुतस्य वस्तुनोऽप्रस्तुतेन साधारणगुणयोगादैकात्म्यं [2]भेदानध्यवसायादेकरूपत्वं निबध्यते, तत्समानगुणयोगात्सामान्यम् । न [3]चेयमपह्नुतिः । किंचिन्निषिध्य[4] कस्यचिद्प्रतिष्ठापनात्[5] । [6]यथा—

मलयजरजसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव [7]निरस्तभियोऽभिसारिकाः ।।२३२।।

प्रस्तुत की दूसरे (अप्रस्तुत) के साथ गुण-साम्य के कारण एकात्मता सामान्य है ।।सू० ७२।।

जहाँ प्रस्तुत वस्तु की अप्रस्तुत के साथ सामान्य गुणों के योग के कारण एकात्मता का—भेद न रहने से एकरूपता का—वर्णन होता है वह समानगुणों के योग के कारण सामान्य (नामक अलंकार) कहलाता है। इसे अपह्नुति (अलंकार) नहीं (माना जा सकता) है क्योंकि यहाँ (सामान्यालंकार में) किसी एक का निषेधकर किसी दूसरे की स्थापना नहीं होती है । उदाहरण—

चन्दनरस को शरीर में लगाए हुई, नवीन हार लता से विभूषित, हाथी दाँत के बने अत्यन्त शुभ्र दन्तपत्र से मुख को सजाए हुई, सुन्दर एवं स्वच्छ परिधान पहिने हुई, चाँदनी फैलाए हुए चन्द्रमा के द्वारा पृथिवी को धवलित कर देने पर दिखलाई न पड़ने वाली अभिसारिकाएं, निडर होकर, सुखपूर्वक प्रियतम के निवास स्थान पर जा रही हैं ।।२३२।।

निजेनागन्तुना वापि लक्षणेनान्यगोपनम् ।
निमीलिताख्योऽलङ्कारो द्विप्रकारः प्रकाशितः ।।

सामान्यार्थं सूत्रम्—"प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम्"

प्रस्तुतस्याप्रस्तुतेन गुणसाम्यादेकरूपत्वं सामान्ययोगात् सामान्यालङ्कारः । व्याचष्टे—यत्र प्रस्तुतस्येत्यादि । अपह्नुतेर्भेदायाह—न चेयमिति । अपह्नुतौ हि प्रकृतनिषेधेनाप्रकृतप्रतिष्ठापनम्, इह तु न तथा । किं तर्हि ?

1. गुणस्य—ना० ।
2. अभेदेनाध्य°—अ० शा० ।
3. चेद°—अ० शा० ।
4. निबध्य—नि० ।
5. °ष्ठानात्—शा० ना० शा१ ।
6. उदाहरणम्—अ० ।
7. विमुक्तभियः—अ० ।

[1]अत्र मलयजरसविलेपनादीनां चन्द्रप्रभया सह 'अविभाव्यतां गताः' [2]इत्यभेदप्रतीतिर्दर्शिता।

[3]स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः ॥सू० ७३॥

यत्र परिमितगुणस्य वस्तुनः समीपवर्तिप्रकृष्टवस्तुगुणस्य[4] [5]स्वीकरणं, स तद्गुणः। तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा। न चेदं मीलितम्। तत्र[6] प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते। इह त्वनपह्नुतस्वरूपमेव प्रकृतं वस्तु[7] वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यस्त्यनयोर्भेदः।

यहाँ चन्दनरस के विलेपन आदि की चाँदनी के साथ 'दिखलाई न पड़ने वाली' इस (पद) से अभेदप्रतीति दिखाई गई है।

अपने गुण को छोड़कर अधिक उत्कृष्ट गुण का स्वीकार तद्गुण है ॥सू० ७३॥

जहाँ परिमित गुण वाली वस्तु समीपवर्ती उत्कृष्ट वस्तु के गुण को स्वीकार कर लेती है (तो) वह तद्गुण (नामक अलंकार) होता है। चूंकि तत् अर्थात् उत्कृष्टगुण (वस्तु) के गुण इस (परिमित गुण वाली वस्तु) में होते हैं (अतः तद्गुण कहलाता है)। यह मीलित (अलंकार) से भिन्न है। उसमें (मीलित अलंकार में) प्रस्तुत वस्तु वस्त्वन्तर से आच्छादित रूप में प्रतीत होती है। किन्तु इस (अलंकार) में प्रस्तुत का स्वरूप अपह्नुत (आच्छादित) न होकर वस्त्वन्तर के गुण से उपरंजित रूप में प्रतीत होता है अतः इन दोनों में भेद है।

ऐकात्म्यम्। मलयजरसेति। दन्तपत्रं करिदशनताटङ्कम्। अविभाव्यतागतिरैकात्म्यम्। योजयति - अत्र मलयजेति।

प्रस्तुतस्यान्यतादात्म्यं सामान्यं गुणसाम्यतः॥

तद्गुणार्थं सूत्रम्—"स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः।"

व्याचष्टे—यत्रेति। निर्वक्ति तस्येति। निमीलिताद्भेदमाह—न चेति। तत्र हि वस्त्वन्तरनिग्रूहनमिह त्वनिगूहितस्य तद्गुणेनोपरागः।

---

१. अत्र च—ना० शा१।

२. इति भेदाप्र°—ना० शा१।

३. °दुत्कृष्ट°—ना० शा१।

४. °प्रकृष्टगुणवस्तुगुणस्वीकरणम्—अ० शा१।

५. °गुणस्वी°—ना०।

६. तत्र हि—अ० नि०।

७. वस्तु शा१ नास्ति।

[1]उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र [2]रुचं रुचा स्वामानिन्यिरे वंशकरीरनीलैः ॥२३३॥

अत्र रविरथाश्वानामरुणवर्णस्वीकारः । तस्यापि गारुत्मतमणिप्रभा[3]-स्वीकार इति तद्गुणत्वम् ।

**सति हेतौ तद्गुणाननुहारोऽतद्गुणः ।।सू० ७४।।**

तद्गुणप्रस्तावात्तद्विपर्ययरूपोऽतद्गुण उच्यते । इह [4]न्यूनगुणस्यो-

उदाहरण—

जहाँ (जिस रैवतक पर्वत पर) अरुण (की लाली) से भिन्न रंग को प्राप्त हुए सूर्य के घोड़े बाँस की कोपल की भाँति हरित मरकत मणियों की चारों ओर फैलती हुई आभा से फिर अपनी (सहज हरित) कान्ति को प्राप्त करा दिए जाते हैं ।।२३३।।

यहाँ सूर्य के घोड़ों द्वारा अरुण की लाली धारण करना और उस (लाली) के द्वारा पुनः मणियों की हरित-प्रभा धारण कर लेने से तद्गुण (अलंकार) है ।

कारण रहने पर भी उस (उत्कृष्टगुण प्रकृत अथवा अप्रकृत) के गुण का अनुहरण न करना अतद्गुण है ।।सू० ७४।।

तद्गुण के प्रसंग से, उससे भिन्न स्वरूप वाले अतद्गुण का निरूपण किया

**विभिन्नेति ।** अरुणेन वर्णभेदं नीताः रथवाहा यत्र वंशाङ्कुरनीलैर्मरकत-रत्नैः प्रभया पुनः स्वां प्रभां निन्यिरे । अश्वानामारुण्येन तद्गुणता, आरुण्यस्य च हारित्येन । योजयति अत्र रवीति ।

तद्गुणः स्वगुणत्यागादुत्कृष्टस्य गुणग्रहः ।।

अतद्गुणार्थं सूत्रम्—"सति हेतौ तद्रूपाननुहारोऽतद्गुणः ।।"

ससङ्गतिकं व्याचष्टे — तद्गुणेति । उत्कृष्टगुणवस्तुप्रत्यासत्तौ हि न्यून-गुणस्य तद्गुणस्वीकारो न्यायोपपन्नः । प्रत्यासत्तावप्यननुहरणमतद्गुणालङ्कारः । निर्वक्ति—तस्योत्कृष्टस्येति । यदि वेति निरुक्त्यन्तरम् । अनुहरणहेतौ सत्य-

---

1. यथा—नि० ।
2. रुचा रुचम्—इति शा१ पाठक्रमः ।
3. °मणिवर्ण°—ना० शा१ ।
4. °विशिष्ट°—नि० ना० (°उत्कृष्ट°—इति स्थाने) ।

त्कृष्टगुणपदार्थधर्मस्वीकारः प्रत्यासत्त्या न्याय्यः। यदा पुनरुत्कृष्टगुणपदार्थसन्निधानाख्ये हेतौ सत्यपि, तद्रूपस्योत्कृष्टगुणस्याननुहरणं न्यून-[1]गुणेनानुवर्तनं भवति सोऽतद्गुणः। तस्योत्कृष्टगुणस्यास्मिन्गुणा[2] न सन्तीति कृत्वा[3]। यदि[4] वा तस्याप्रकृतस्य रूपाननुहारः सत्यननुहरणहेतौ सोऽतद्गुणः। तस्याप्रकृतस्य [5]गुणा नास्मिन्सन्तीति कृत्वा। [6]क्रमेणोदाहरणम्—

धवलो सि जइ[7] वि सुन्दर तह वि तुए मज्झ रज्जिअं हिअअं।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तो सि ॥२३४॥
[ धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रंजितं हृदयम्।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥ ]

जा रहा है। न्यून गुण वाली वस्तु द्वारा अधिक उत्कृष्ट गुण वाली वस्तु के धर्म को प्रत्यासत्ति के नाते ग्रहण कर लेना उचित है। पर यदि उत्कृष्ट गुण वाली वस्तु के समीप रहने का कारण होने पर भी, उसके गुण (तद्गुण) अर्थात् उत्कृष्ट वस्तु के गुण को ग्रहण न करना, न्यून गुण द्वारा अनुवर्तन न करना, ही अतद्गुण होता है क्योंकि तत् अर्थात् उत्कृष्ट गुण के गुण इस (न्यूनगुण वस्तु) में नहीं होते हैं। अथवा तत् अर्थात् अप्रकृत के रूप के अनुहरण का कारण रहने पर भी (प्रकृत द्वारा) ग्रहण न करना भी अतद्गुण है क्योंकि तत् अर्थात् अप्रकृत के गुण इस (प्रकृत) में नहीं होते हैं। क्रमशः उदाहरण—

अयि सुन्दर! यद्यपि तुम धवल हो पर फिर भी तुमने मेरा हृदय रंग दिया है। पर राग भरे हृदय में रहने पर भी हे सुभग! तुम रक्त (अनुरक्त, लाल) नहीं हो पाए हो ॥२३४॥

ननुहरणादतद्गुणः। अत्र विगृह्णाति—तस्याप्रकृतस्येति। इत्थमयं द्विधा। धवलोऽसीति।

---

1. °गुणस्याननु°—शा० ना० शा१।
2. गुणा अस्मिन् न—शा० ना० क्रमः।
3. कृत्वा —अ० नि० नास्ति। 4. यद्वा—नि० ना०।
5. अस्मिन् गुणा न सन्तीति —क्रमः शा० न० शा१।
6. क्रमेण यथा—नि०। क्रमेण—अ० शा० नास्ति।
7. जह—नि०।

गाङ्गमम्बु सितमङ्ग[1] यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥२३५॥

पूर्वत्र [2]रक्तहृदयसंपर्कान्नायकस्य धवलशब्दवाच्यस्य प्राप्तमपि रक्तत्वं न निष्पन्नमित्यतद्गुणः। उत्तरत्र [3]त्वप्रकृतस्य गाङ्गयामुनजलस्य संपर्केऽपि न तथा रूपत्वमित्ययमप्यतद्गुण[4] एव[5]। धवलोऽसीति त्वतद्गुण एव[6]। कार्यकारणभावस्य [7]चात्राविवक्षणान्न [8]विशेषोक्त्यलंकारावकाशः।

गंगा का जल शुभ्र है और यमुना का जल काजल-जैसा है। (पर) अरे राजहंस! दोनों जगह मज्जन करने पर भी तुम्हारी शुभ्रता वैसी ही है — न बढ़ती है और न घटती है ॥२३५॥

पहले उदाहरण में (अनु–) रक्त हृदय के सम्पर्क में आने से धवल शब्द से बताए गए नायक का (अनु–) रक्त हो जाना प्राप्त था पर फिर भी (अनु–) रक्त न बनने से अतद्गुण है। उत्तर (उदारहण) में प्रकृत से— गंगा तथा यमुना के जल से—सम्पर्क होने पर भी उस रूप का ग्रहण न होना, इस प्रकार यह भी अतद्गुण ही है। 'धवलोऽसीति' इस उदाहरण में तो अतद्गुण ही है। यहाँ कार्यकारण-भाव की विवक्षा न रहने से विशषोक्ति अलंकार के लिए कोई स्थान नहीं है।

धवलोऽसि यद्यपि सुन्दर तथापि त्वया (मम) रञ्जितं हृदयम्।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥

धवलो युवा, धवलश्च (?)। रागभरितहृदयनिधानेऽप्यरक्तत्वमतद्गुणः। गाङ्गमिति। अङ्गेति संबोधनम्। चीयते उपचीयते। अत्राप्रकृतरूपाननुहारः। उभयत्र योजयति - पूर्वत्रेत्यादि। ननु प्रथमार्धे कोऽलङ्कार इत्यत आह - धवलोऽसीति। धवलस्यापि रञ्जनेऽतद्गुणत्वं स्फुटमेव। यतः कार्यकारणेति। विषमवैधर्म्यं व्यक्तम्।

न तद्गुणेऽनुहारस्तु गुणताद्रूप्ययोर्द्विधा।

---

1. सितमम्बु —नि० ना०।
2. अतिरक्त°—अ० नि०।
3. तु—नि० ना० नास्ति।
4. अपि - ना० नास्ति।
5. एव–ना० नास्ति।
6. 'धवलोऽसीति···एव' इयानंशो नि०ना० नास्ति।
7. च—अ० ना० शा० नास्ति।
8. विषमालङ्कारः। — अ०। विषमालङ्कारावकाशः। —शा१। विशेषोक्तिः।—शा०। 'विषमालङ्कारः···इतिपाठस्तु पुस्तकान्तरेषु स्थितोऽप्यत्रायुक्तः' - वि०।

**उत्तरात्प्रश्नोन्नयनमसकृदसंभाव्यमुत्तरं चोत्तरम् ।।सू० ७५।।**

यत्रानुपनिबध्यमानोऽपि प्रश्न[१] उपनिबध्यमानादुत्तरादुन्नीयते, तदेकमुत्तरम्। न चेदमनुमानम्। [२]पक्षधर्मतादेरनिर्देशात्[३]। यत्र च प्रश्नपूर्वकमसंभावनीयमुत्तरं, तच्च न सकृत्, तावन्मात्रेण चारुत्वाप्रतीतेः। अतश्चासकृन्निबन्धे द्वितीयमुत्तरम्। न चेयं[४] परिसंख्या। व्यवच्छेद्यव्यवच्छेदकपरत्वाभावात्। क्रमेण[५] यथा

एकाकिनी यदबला तरुणी तथाह-
[६]मस्मद्गृहे गृहपतिश्च गतो [७]विदेशम्।

उत्तर से प्रश्न की कल्पना अथवा अनेक बार असम्भाव्य उत्तर देना उत्तर (अलंकार) है ।।सू० ७५।।

जहाँ प्रश्न न होने पर भी उसकी कल्पना उपनिबध्यमान उत्तर से कर ली जाती है, वह प्रथम (प्रकार का) उत्तर है। यह अनुमान नहीं (माना जा सकता) है क्योंकि (उत्तरालंकार में) पक्ष-धर्मता आदि का निर्देश नहीं होता है। और जहाँ प्रश्न होने पर असम्भाव्य उत्तर, और वह भी एक बार नहीं क्योंकि उतने से (एक बार से) सौन्दर्य-प्रतीति नहीं होती है अतः अनेक बार दिया जाए वह द्वितीय (प्रकार का) उत्तर (अलकार) होता है। यह परिसंख्या (अलंकार) नहीं (माना जा सकता) है क्योंकि इसमें निषेध्यपरता तथा निषेधकपरता नहीं होती हैं। क्रमशः जैसे—

मैं घर में अकेली हूँ और वह भी तरुणी अबला। घर का मालिक विदेश

**उत्तरार्थं सूत्रम्—**

"उत्तरात् प्रश्नोन्नयनमसकृदसम्भाव्यमुत्तरं चोत्तरम् ।।"

**प्रश्नानुपादानेऽप्युत्तरादुन्नयनमेकमुत्तरम्। उपात्तस्य च प्रश्नस्य यदसम्भाव्यमसकृदुत्तरं तद् द्वितीयम्। व्याचष्टे— यत्रानुपनिबध्यमान इत्यादि। अतिव्याप्तिं परिहरति— न चेयमिति। परिसंख्यायां व्यवच्छेद्यव्यवच्छेदकभावो विवक्ष्यः। अत्र त्वविवक्षा। एकाकिनीति। कं याचसे वासा (?सं)।**

१. °निबद्धादु°—अ०।
२. °धर्मादे°—ना० शा१। °धर्मत्वादे°—अ०।
३. °रनुद्देशात् नि०।
४. चेदम्—अ० ना० (?)
५. क्रमेणोदाहरणम्—अ० शा१।
६. °मस्मिन् गहे—अ० शा१।
७. विदूरम्—ना०।

कं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु[1] मूढ पान्थ ॥२३६॥
का विसमा देवगई[2] किं लद्धं[3] जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥२३७॥
[ का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ॥ ]

पूर्वत्र मम निवासो[4] दीयतामिति प्रश्न उत्तरादुन्नीयते। उत्तरत्र दैवगत्यादिनिगूढत्वादसंभाव्यमसकृत्प्रश्नपूर्वकमुत्तरं निबद्धम् ।

इतः प्रभृति गूढार्थप्रतीतिपरालंकारलक्षणम्—

चला गया है तो भला तुम किससे यहाँ (रात में) रहने के लिए याचना कर रहे हो। वेचारी यह मेरी सास सचमुच अंधी भी है और बहरी भी ॥२३६॥

दुर्ज्ञेय क्या है ? देव की गति। प्राप्तव्य क्या है ? यही कि गुण का ग्राहक व्यक्ति (पा लेना)। सुख क्या है ? उत्तम स्त्री। दुःख क्या है ? दुष्ट आदमी ॥२३७॥

पहले (उदाहण) में 'मुझे रहने की जगह दो' इस प्रश्न की उत्तर से कल्पना कर ली जाती है। परवर्ती (उदाहरण) में दैव की गति आदि अत्यन्त गूढ़ होने से असम्भाव्य उत्तर हैं जिनका प्रश्नपूर्वक अनेक बार उल्लेख हुआ है।

इसके अनन्तर गूढार्थ-प्रतीतिपरक अलंकारों का स्वरूप बताया जाएगा।

वासयाचनेन किमित्यर्थः। का विसमेति।

का विषमा दैवगतिः किं लभ्यं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

अत्र दैवगत्यादि गूढत्वादप्रतिसम्भाव्यमुत्तरम्। योजयति—पूर्वत्रेत्यादि। असकृदिति—नानात्वनियमोद्घाटनम्।

प्रश्नोह उत्तरं तस्माद गूढं चासकृदुत्तरम्।

---

१. न श्रृणोति कश्चित्—-पाठान्तरम्।
२. दव्वगई—अ०।
३. लद्धव्वं जणो—पाठान्तरम्।
४. °सोऽत्र—अ०।

**संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ।।सू० ७६।।**

**इह सूक्ष्मः स्थूलमतिभिरसंलक्ष्यो योऽर्थः, स यदा कुशाग्रमतिभिरिङ्गिताकाराभ्यां संलक्ष्यते, तदा तस्य संलक्षितस्य विदग्धं प्रति प्रकाशनं सूक्ष्मम्[१] । तत्रेङ्गिताद्यथा—**

**संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।**
**हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ।।२३८।।**

संलक्षित सूक्ष्म अर्थ का प्रकाशन सूक्ष्म (अलंकार) होता है ।।सू० ७६।।

जहाँ सूक्ष्म अर्थात् स्थूल बुद्धि द्वारा जो अर्थ असंलक्ष्य है उसे जब कुशाग्रबुद्धि चेष्टा या आकार से जान लेता है तो उस संलक्षित अर्थ का बुद्धिमान् (व्यक्ति) के प्रति प्रकाशित हो जाना सूक्ष्म (अलंकार) है । इनमें से चेष्टा द्वारा (सूक्ष्म अर्थ के प्रकाशन का) उदाहरण—

सस्मित नयन से मन का भाव जताते हुए उपपति को एकान्तमिलन का समय जानने की इच्छा है, यह समझ कर विदग्धा (उपनायिका) ने अपने हाथ का लीलाकमल बन्द कर दिया ।।२३८।।

सङ्गत्यन्तरायाह—इतः प्रभृति । सूक्ष्मार्थं सूत्रम्—

"संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ।।"

इङ्गितादिभिः संलक्षितस्य सूक्ष्मार्थस्य विदग्धाय प्रकाशनं सूक्ष्मम् । व्याचष्टे—इह सूक्ष्म इत्यादि । कुशाग्रवत् तीक्ष्णा कुशाग्रीया । अत इदमपीङ्गिताकाराभ्यां द्विधा ।

आकूतव्यञ्जिताश्चेष्टा इङ्गितं बुद्धिकारिताः ।
आकारः पुनराम्नातस्ता एवाबुद्धिकारिताः ।।

तथा—

तारापुटभ्रूदृष्ट्यादेर्विकारानिङ्गितं विदुः ।
आकाराः सत्त्वजा भावा आद्या बुद्ध्या परेऽन्यथा ।।

सङ्केतेति । कालमनसं कालं ज्ञातुमनसमित्यर्थः । नेत्रार्पिताकूतं नेत्राभिव्यञ्जितभावमित्यर्थः । सङ्केतकालमनसो ज्ञानं भ्रूकटाक्षादि । तदीयेङ्गितेन

---

१. सूक्ष्ममलङ्कारः—नि० ।

अत्र [1]संकेतकालाभिप्रायो विटसंबन्धिना भ्रूक्षेपादिना इङ्गितेन लक्षितः रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशितः। आकाराद्यथा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥२३९॥

अत्र [2]स्वेदकृतकुङ्कुमभेदरूपेणाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गलेखनेन[3] प्रकाशितम्।

**उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः ॥सू० ७७॥**

यहाँ एकान्तमिलन का समय (जानने) का भाव उपपति के भ्रूविक्षेप आदि इशारे से पता चल जाता है जिसे रात्रिकाल के सूचक लीलाकमल के निमीलन से प्रकाशित कर दिया गया है। आकार से (सूक्ष्म अर्थ का प्रकाशन) जैसे—

मुख पर से बहने वाली स्वेदबिन्दु की धारा से (नायिका के) कण्ठ में लगी हुई केसर को बिगड़ी हुई देखकर सुन्दरी की पुरुषायित रति को व्यक्त करने वाली किसी (सखी) ने (उस सुन्दरी की) हथेली पर तलवार का चित्र बना दिया ॥२३९॥

यहाँ स्वेद-बिन्दु के कारण बिगड़े हुए केसर के आकार से विज्ञात पुरुषायित (विपरीत रति) हथेली पर पुरुषोचित तलवार बनाने से प्रकाशित हो गई है।

प्रकट हो जाने वाली किसी वस्तु का गोपन व्याजोक्ति (अलंकार) है ॥सू० ७७॥

ज्ञात्वेति सूक्ष्मार्थसंलक्षणम्। पद्मनिमीलनं तु प्रकाशनम्। योजयति—अत्र सङ्केतेति।

वक्त्रस्यन्दीति। स्वेद आकारस्तेन कुङ्कुमोद्भेदात् पुरुषायितज्ञानं सूक्ष्मार्थसंलक्षणम्। खड्गलेखस्तत्प्रकाशनम्। योजयति—अत्र स्वेदेति।

सूक्ष्मं तु सूक्ष्मं संलक्ष्य विदग्धेषु प्रकाशनम्।
इङ्गिताकारतः सूक्ष्मसंलक्षणमिति द्विधा ॥

व्याजोक्त्यै सूत्रम्—

"उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः" ॥

---

१. विटसम्बन्धी संकेत°—अ०।
२. स्वेदबिन्दुकृतकुंकुमरूपभिन्नेनाकारेण—नि०।
३. खड्गधारालिख°—नि०।

यत्र [1]निगूढं वस्तु कुतश्चिन्निमित्तादुद्भिन्नं प्रकटतां प्राप्तं[2], [3]सद्वस्त्वन्तरप्रक्षेपेण निगूह्यते अपलप्यते, सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद्व्याजोक्तिः। यथा—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-[4]
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः[5]।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः[6] शिवः ॥२४०॥

अत्र रोमाञ्चादिनोद्भिन्नो[7] रतिभावः [8]शैत्यप्रक्षेपेणापलपितः। यद्यप्य-

जहाँ किसी अत्यन्त गूढ़ वस्तु का, जो किसी कारण से उद्भिन्न या प्रकट हो जाती है, किसी दूसरी वस्तु के प्रक्षेप से (निमित्तान्तर से) निगूहन अर्थात् अपलाप होता है, वह निमित्तान्तर के उपन्यासरूप व्याज की उक्ति होने के नाते व्याजोक्ति (कहलाती) है। जैसे—

हिमालय के द्वारा प्रदीयमान पार्वती के हाथ के स्पर्श से उद्भूत रोमांचादि के कारण (विवाह के) सारे अस्तव्यस्त क्रियाकलाप के गड़बड़ा जाने से घबराए हुए (और इस बात को छिपाने के लिए) 'ओह ! हिमालय के हाथ ठण्डे हैं' यह कहने वाले (पर शिव के बहाने को समझ लेने वाले) हिमालय के रनिवास (ब्राह्मी आदि), मातृमण्डल तथा (नन्दी आदि के) गणों द्वारा सस्मित देखे गए शिव तुम लोगों की रक्षा करें ॥२४०॥

यहाँ रोमांच (सात्त्विक भाव) आदि के कारण प्रकट हो जाने वाले (पार्वती के प्रति शिव के) रतिभाव को शैत्य के बहाने से छिपा दिया गया है।

कुतश्चिन्निमित्तात् प्रकाशितस्य गूढवस्तुनो व्याजवचसा निगूहनं व्याजोक्तिः। व्याचष्टे—यत्र निगूढमित्यादि। वस्त्वन्तरप्रक्षेपेति निरुक्तिः।

शैलेन्द्रेति। प्रतिपाद्यमाना दीयमाना। विधिव्यासङ्गः क्रियासक्तिः। शैलान्तःपुरेण मातृमण्डलेन गणैश्च दृष्टः। योजयति—अत्र रोमाञ्चेति।

---

१. निगूहनम्—शा०। निगूहितम्—ना०।
२. गतम्—अ०। ३. तद्—शा०।
४. गूढोच्छलद्—शा०।
५. °लोखिलविधिव्यासङ्गतो व्याकुलः—अ०।
६. °न्नः—शा१।
७. °दिना तद्भिन्नो—शा०। ८. °प्रक्षेपणेनाप°—नि० शा१।

पह्नुतोऽपि [१]सस्मितत्वख्यापनेन पुनरप्युद्भिन्नत्वेन प्रकाशितः [२]तथाप्यपलापमात्रचिन्तयास्यालंकारस्योल्लेखः। नन्वपह्नुतिग्रन्थे 'यथा[३] सादृश्याय योऽपह्नवः सापह्नुतिः, तथापह्नवायापि[४] यत्सादृश्यं साप्यपह्नुतिः' इति स्थापितम्। व्याजोक्तौ चोत्तरः प्रकारो विद्यते, तत्कथमियमलंकारान्तरेण कथ्यते। सत्यम्। [५]उद्भटसिद्धान्ताश्रयेण [६]तत्तत्रोक्तम्। न हि तन्मते व्याजोक्त्याख्यमलंकरणमस्ति। इह तु तस्य संभवात्तद्व्यतिरिक्तापह्नुतिरिति पृथगयमलंकारो निर्दिष्टः।

यद्यपि छिपाने के बाद भी पुनः मुस्कराहट के वर्णन से (उस रति-भाव को) प्रकट कर दिया गया है तथापि केवल अपलाप के विचार से ही (प्रस्तुत उदाहरण में) इस (व्याजोक्ति) अलंकार का निरूपण है। यह शंका की जा सकती है कि अपह्नुति-ग्रन्थ (अपह्नुति अलंकार का निरूपण करने वाले प्रस्तुत ग्रन्थ के भाग) में जिस प्रकार सादृश्य के लिए जो अपह्नव हो वह अपह्नुति है, उसी प्रकार अपह्नव करने के लिए भी जो सादृश्य होता है वह भी अपह्नुति है, यह स्थापना की जा चुकी है; व्याजोक्ति में (अपह्नुति का) परवर्ती भेद प्राप्त होता है अतः इसे भिन्न अलंकार क्यों बताया जा रहा है ? —ठीक है। उद्भट के सिद्धान्त के अनुसार उस जगह पर वैसा (अर्थात् अपह्नव के लिये सादृश्य भी अपह्नुति अलंकार होता है) कहा गया था क्योंकि उनके मत में व्याजोक्ति नामक अलंकार है ही नहीं। पर चूँकि यहाँ (हमारे मत में) यह (व्याजोक्ति अलंकार) संभव है अतः अपह्नुति इससे भिन्न है। अपह्नुति केवल अपह्नव करने के लिए सादृश्य में मानी जाएगी। अस्तु ! इस (व्याजोक्ति अलंकार) का पृथक् उल्लेख किया गया है।

असामञ्जस्यं शमयितुमाह—यद्यपीत्यादि। अपलापमात्रचिन्तयेति। सस्मितत्वकथनात् पुनः प्रकाशनं लक्षणतया न चिन्तनीयमिति भावः। उल्लेख उट्टङ्कनम्। अव्याप्तिमाशङ्कते—नन्वपह्नुतीति। उत्तरः प्रकारः अपह्नवाय सादृश्यमित्येवमात्मकम्। परिहरति—सत्यमिति। तत्र तथोक्तिरुद्भट-

१. °त्वाख्या°—शा१। २. तस्याप्य°—ना०।
३. यथा—अ० नास्ति। ४. अपि—अ० शा१ नास्ति।
५. °श्रयणेन तत्रोक्तम्—अ०। °श्रयेणोत्तरत्रोक्तम्—ना०।
६. तत्—अ० नि० पुस्तकयोर्नास्ति।

**अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथा योजनं वक्रोक्तिः ॥सू० ७८॥**

उक्तिव्यपदेशसाम्याद्व्याजोक्त्यनन्तरं[1] वचनम्। यद्वाक्यं केन-[2]चिदन्यथान्याभिप्रायेणोक्तं सदपरेण वक्त्रा काकुप्रयोगेण [3]श्लेषमुखेन वान्यथान्यार्थघटनया योज्यते, [4]तदुक्तिर्वक्रोक्तिः। काकुप्रयोगेण यथा—

गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥२४१॥

अन्यार्थक वाक्य को काकु से या श्लेष से अन्य अर्थ में लगा देना वक्रोक्ति है ॥सू० ७८॥

उक्ति संज्ञा से साम्य होने के कारण व्याजोक्ति के बाद (वक्रोक्ति का) निरूपण हो रहा है। जो वाक्य कोई किसी अभिप्राय से कहे पर दूसरा वक्ता काकु के प्रयोग से अथवा श्लेष के आधार पर दूसरा अर्थ घटा कर लगा दे तो उस उक्ति को वक्रोक्ति कहते हैं। काकु के प्रयोग का उदाहरण—

गुरुजन (माता पिता आदि) के वश में होने से यह (मेरा प्रियतम) सुदूर देश जाने को तैयार हो गया है। सखि! अलिकुल तथा कोकिलों से कमनीय वसन्तकाल में यह नहीं लौटेगा ॥२४१॥

सिद्धान्ताश्रयेण। तन्मते व्याजोक्त्यनुपवर्णनात् तथापह्नुतिसम्भवः। इह व्याजोक्त्युपवर्णनात् सोऽपह्नुतिप्रकार एव नास्तीत्येकैवापह्नुतिः। अत इयं व्याजोक्तिरेव।

व्याजोक्तिर्व्याजवचनेनोद्भिन्नस्य निगूहनम्।
अपह्नवाय सादृश्य इष्टा नापह्नुतिर्यतः॥

वक्रोक्त्यर्थं सूत्रम्—

"अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथायोजनं वक्रोक्तिः॥"

एकाभिप्रायेणोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथाभिप्रायेण योजनं वक्रोक्तिः। ससङ्गतिकं व्याचष्टे—उक्तिव्यपदेशेति। गुरुपरतन्त्रेति। दूरतरं गन्तुमुद्यत इति नायिकोक्तिरसौ, गुरुपरतन्त्रतया असौ गुरुपरता, समयेऽस्मिन् नैष्यति

---

१. °रमस्या लक्षणम्—नि०। °रं कथनम्।—अ०।

२. °थाभि°—नि।

३. श्लेषप्रयोगेण—नि० शा०।

४. तदुक्तिः सा—नि०।

[1]अत्रैतद्वाक्यं नायिकया [2]आगमननिषेधपरत्वेनोक्तम्। तत्सख्या काकुप्रयोगेण विधिपर्यन्ततां[3] प्रापितम्। काकुवशाद्विधिनिषेधयोर्विपरीतार्थसंक्रान्तिः।

[4]श्लेषोऽभङ्गसभङ्गत्वेनोभयमयत्वेन च त्रिविधः[5]। तत्राभङ्गश्लेषमुखेन यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥२४२॥

अत्र दारुणेति प्रथमान्तं प्रक्रान्तं श्लेषभङ्ग्या तृतीयान्ततया संपादितम्। सभङ्गश्लेषमुखेन यथा—

यहाँ यह (प्रस्तुत) वाक्य नायिका ने (नायक के) न लौटने के अर्थ में कहा है। उसकी सखी (इस वाक्य को) काकु का प्रयोग कर विधिपरक अर्थ में लगा देती है। काकु (कण्ठध्वनि के विकार) के कारण विधि और निषेध (अपने से) विपरीत अर्थ को देने लगते हैं। श्लेष अभंग, सभंग, तथा उभयरूप तीन प्रकार का है। इनमें से अभंगश्लेष के द्वारा (वक्रोक्ति का) उदाहरण—

ओह! तुम्हारी ऐसी 'दारुण' (दारुणा—कठोर तथा काठ से) बुद्धि किसने बनाई है? बुद्धि को त्रिगुणात्मिका (सत्त्व रज तथा तमोरूप) सुना जाता है पर काठ से बनी हुई तो कहीं नहीं (सुना जाता है) ॥२४२॥

यहाँ 'दारुणा' (कठोर) इस प्रथमान्त प्रयोग को श्लेष की भंगिमा से तृतीयान्त के रूप में बना दिया गया है। सभंग-श्लेष के माध्यम से (वक्रोक्ति) जैसे—

न नेष्यतीति काकुगर्भा सख्युक्तिः। योजयति—एतद्वाक्यमिति। ननु गमनविधिनिषेधौ शाब्दौ कथमागमननिषेधविधौ योजितौ। अत आह—काकुवशेति। ईदृशि विषये काकोर्निषेधद्योतकत्वाद् विपरीतार्थसङ्क्रान्तिः।

अहो केनेति। दारुणा घोरा, काष्ठेन च। योजयति—अत्रेति।

---

१. अत्र—अ० शा० ना० नास्ति।
२. गमन°—ना०।
३. विधिपरतां—नि०।
४. तत्र श्लेषो°—नि०।
५. श्लेषोऽभङ्गसभङ्गत्वेन द्विविधः—अ०।

त्वं हालाहलभृत्करोषि मनसो मूर्च्छां [१]ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे[२] कथं हालिकः ।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरोऽवताद्वः शिवः ॥२४३॥

उभयमुखेन यथा—

विजये कुशलस्त्र्यक्षो न क्रीडितुमहमनेन सह शक्ता ।
विजये कुशलोऽस्मि न तु त्र्यक्षोऽक्षद्वयमिदं पाणौ ॥२४४॥
किं मे दुरोदरेण प्रयातु [३]यदि गणपतिर्न तेऽभिमतः ।
कः [४]प्रद्वेष्टि विनायकमहिलोकं[५] किं न जानासि ॥२४५॥

हालाहल (कालकूट विष, सुरा और हल) धारण करने वाले तुम (हे शिव !) मेरे मन को आलिंगन से मूछित कर देते हो। मुग्धे ! (पार्वती !) न मैं सुरा धारण करता हूँ और न हल फिर मैं हरवाहा कैसे हूँ ? वृषभ-वाहन के अनुरागी आप (शिव) का हरवाहा होना ही उचित है इस प्रकार पार्वती द्वारा विजित सस्मित शंकर तुम्हारा कल्याण करे ॥२४३॥

उभयरूप (सभंग एवं अभंग-श्लेष द्वारा वक्रोक्ति) जैसे (पार्वती तथा शंकर की वक्रोक्तिपूर्ण उक्ति-प्रयुक्ति)—शंकर (त्र्यक्ष) जीतने में (विजयी) कुशल हैं, मैं इनके साथ नहीं खेल सकती हूँ। विजये, (पार्वति !) मैं चतुर तो हूँ पर मेरे पास तीन पाँसा (त्र्यक्ष) नहीं हैं, (केवल) ये दो पांसे हैं ॥२४४॥

(पार्वती—) मुझे जुआ (दुरोदर) से क्या काम ? (शंकर)—अगर मेरा गणपति (दुरोदर) तुम्हें पसन्द नहीं है तो वह चला जाए। (पार्वती—) विनायक (गणेश तथा गरुड़) से कौन द्वेष करता है ? (शंकर)—सर्पलोक को क्या तुम नहीं जानती हो ॥२४५॥

**त्वं हालाहलेति। हालाहलवन्मूर्च्छां करोषीति देवी। देवस्तु हालां सुरां न बिभर्मि नापि च हलं सीरं, किं हलवत्तया हालिकोऽस्मीति। पुनर्देवी—गोवाहने सक्तस्य हालिकतैव सत्यमिति। अत्र हालाहलेति सभङ्गश्लेषः।**

**विजये इति। कुलकात्मकं वाक्यम्। विजये इति देवीकर्तृकं विजया-सम्बोधनम्। देवस्योक्तौ जित्वरतायां शक्तोऽस्मि, न त्र्यक्षोऽहम्, अक्षद्वयसङ्ख्या-**

---

१. समा°—नि०, शा० (?)।
२. मुग्धेऽस्मि कि—अ०।
३. गणपतिर्यदि—शा० ना० शा१ क्रमः।
४. क इह द्वेष्टि—अ० शा०।
५. °लोकः—ना० शा१।

चन्द्रग्रहणेन विना नास्मि रमे किं प्रतारयस्येवम् ।
देव्यै यदि रुचितमिदं नन्दिन्नाहूयतां राहुः ॥२४ ॥
हा राहौ [1]शितदंष्ट्रे भयकृति निकटस्थिते रतिः [2]कस्य ।
यदि नेच्छसि [3]संत्यक्तः संप्रत्येषैव हाराहिः ॥२४७॥
वसुरहितेन क्रीडा भवता सह कीदृशी न जिह्नेषि ।
किं वसुभिर्नमतो[4]ऽमून्सुरासुरान्नैव[5] पश्य[6] पुरः ॥२४८॥
आरोपयसि मुधा किं नाहमभिज्ञा किल त्वदङ्कस्य ।
दिव्यं वर्षसहस्रं स्थित्वेति न युक्तमभिधातुम् ॥२४९॥

(पार्वती ) चन्द्रमा की बाजी के बिना (चन्द्रग्रहणेन विना) मैं नहीं खेलती। मुझे इस तरह क्यों ठग रहे हो ?

(शंकर—) यदि देवी को यही (चन्द्रग्रहण) अभीष्ट है तो नन्दिन् ! (जाओ) राहु को बुला लाओ ॥२४६॥

(पार्वती –) ओफ ! तीक्ष्ण दाढ़ वाले, भयंकर राहु के पास (हा राहौ) रहने पर किसे खुशी होगी ? (शंकर—)अगर तुम हाराहि हाररूपी सर्प— को नहीं चाहती हो तो इसे अभी छोड़ देता हूँ ॥२४७॥

(पार्वती ) वसु-रहित (धनहीन) आपके साथ खेलना कैसा ? क्या तुम्हें (वसुहीन होने पर) लज्जा नहीं आती है ? (शंकर—) (आठ) वसुओं के साथ प्रणाम करते हुए सुरासुरों को क्या तुम सामने नहीं देख रही हो ? ॥२४८॥

(पार्वती—) क्यों व्यर्थ आरोप लगा रहे हो मैं तुम्हारी छलना (अंक) से परिचित नहीं हूँ। (शंकर—) हजार दिव्य वर्ष तक अंक (गोद) में रहकर भी यह कहना (कि तुम्हारे अंक से मैं परिचित नहीं हूँ) उचित नहीं है ॥२४९॥

वादिति। अक्षशब्दः पाशवचनः। किं मे इति—देव्याह। दुरोदरेण मे किम्। देव आह—मे दुरोदरेण लम्बोदरेण नार्थश्चेद् गणपतिरपसरतु। देव्याह—को द्वेष्टि विनायकम्। देव आह—अहिलोक इति। इह विनायको गरुडः। चन्द्रेति। चन्द्रग्रहणेन इन्दुपणेन विना न रमे इति देवी। देवस्तु—चन्द्रग्रहणापेक्षा चेत् राहुराहूयताम्। हा राहाविति। राहौ स्थिते हा कस्य रतिरिति देवी। देवस्तु हारोरगोऽपनीयतामिति। वसुरहितेनेति।

---

1. सित° - अ०, शा, ना० (?)। 2. कस्याः—अ०।
3. तत् त्यक्तः अ०। 4. नमितो°—अ०।
5. °नेव—अ० ना०। 6. पश्यसि—नि० ना०।

इति [1]कृतपशुपतिपेशलपाशकलीलाप्रयुक्तवक्रोक्ति[2]।
हर्षवशतरलतारकमाननमव्याद्भवान्या [3]वः ॥२५०॥

वक्रोक्तिशब्दश्चालंकारसामान्यवचनोऽपीहालंकारविशेषे[4] संज्ञितः।

**[5]सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः ॥सू० ७९॥**

**इह वस्तुस्वभाववर्णनमात्रं[6] नालंकारः। तत्त्वे सति सर्वं काव्यमलंकारि[7] स्यात्। न हि तत्काव्यमस्ति यत्र[8] वस्तुस्वभाववर्णनं न विद्यते। तदर्थं सूक्ष्मग्रहणम्। सूक्ष्मः कवित्वमात्रस्य[9] गम्यः। अत एव तन्निर्मित**

इस प्रकार पशुपति द्वारा द्यूत के अभिराम खेल में वक्रोक्ति का प्रयोग करने वाली पार्वती का हर्ष के कारण तरल तारिकाओं वाला मुख तुम्हारी रक्षा करे ॥२५०॥

यद्यपि वक्रोक्ति शब्द अलंकारसामान्य का भी अभिधायक है पर यहाँ अलंकारविशेष का वाचक है।

सूक्ष्म वस्तु के स्वभाव का यथावत् वर्णन स्वभावोक्ति है ॥सू० ७९॥

यहाँ ( अर्थात् काव्य में ) वस्तु के स्वभाव का वर्णनमात्र अलंकार नहीं होता है। ऐसा होने पर समग्र काव्य सालंकार कहलाएगा। कोई भी काव्य ऐसा नहीं है जिसमें वस्तु के स्वभाव का वर्णन न पाया जाता हो। इसीलिए 'सूक्ष्म' ( पद ) का प्रयोग किया गया है। सूक्ष्म का अर्थ है केवल कवित्व का विषय बनने वाला। अतएव तन्निर्मित (कवित्व

**वसु द्रविणम्। अष्टौ वसवश्च। आरोपयसीति। अङ्कः अङ्कनम्, छलनम् उत्संगश्च। इति (कृत-) पशुपतीति। पाशकाः अक्षाः काः। ननु विच्छित्तिरूपत्वात् सर्व एवालङ्कारो वक्रोक्तिरित्यत आह—वक्रोक्तीति।**

**अन्यथायोजनं वाक्ये वक्रोक्तिरभिधीयते।**
**द्विप्रकारा च विज्ञेया काकुश्लेषसमाश्रयात् ॥**

**स्वभावोक्त्यर्थं सूत्रम्—**

**"सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः"।**

**व्याचष्टे—इह वस्त्विति। अत एवेति। कविमात्रगम्यत्वात् कविना**

---

१. °पाशकलील।कलहप्रयुक्त—अ०। °पशुपतिपेलवपाशक°—नि०।
२. °वक्रोक्ते—नि०। ३. नः—शा१। ४. °षसंज्ञितः—अ०।
५. °स्वभावस्य—अ०। ६. °मात्रे—ना०। ७. °कारः—ना० शा१।
८. यत्र न वस्तुस्वभाववर्णनम्—नि० शा१। ९. कवयितृमात्रस्य—अ०।

इव[१] यो वस्तुस्वभावस्तस्य यथावदन्यूनानतिरिक्तत्वेन वर्णनं स्वभावोक्तिरलंकारः। [२]उक्तिवाचोयुक्तिप्रस्तावादिह लक्षणम्। भाविकरसवदलंकाराभ्यामस्य भेदो भाविकप्रसङ्गे निर्णेष्यते। यथा[३]—

[४]हुंकारो नखकोटिचञ्चुपुटकव्याघट्टनोट्टङ्कित-
स्तन्व्याः कुन्तलकौतुकव्यतिकरे[५] सीत्कारसीमन्तितः।
पृष्ठश्लिष्यदवामनस्तनभरोत्सेधाङ्कपालीसुधा-[६]
सेकाकेकरलोचनस्य कृतिनः कर्णावतंसीभवेत् ॥२५१॥

से सृष्ट) सा जो वस्तु-स्वभाव होता है उसका यथावत् न घटा कर न बढ़ा कर—वर्णन करना स्वभावोक्ति अलंकार है। उक्ति और उसकी संघटना (अथवा वक्रोक्ति) का सन्दर्भ होने से यहाँ (स्वभावोक्ति अलंकार का) निरूपण किया जा रहा है। भाविक तथा रसवत् अलंकारों से इस (अलंकार) के भेद का निर्णय भाविक के प्रकरण में किया जाएगा। (स्वभावोक्ति) जैसे—

(प्रियतम के) चंचुपुट के समान नखाग्र के घट्टे से उट्टंकित तथा (नायिका द्वारा) केश की खुजली मिटाते समय सीत्कार से सुशोभित, सुन्दरी का हुंकार, पीठ में रगड़ खाने वाले विशाल एवं उन्नत स्तनों वाली अंकपाली के अमृत-सिंचन से अंधमुंदे नयन वाले सौभाग्यशाली (प्रियतम) का कर्णाभरण बने ॥२५१॥

निर्मित इवोक्तिर्वचनम् उक्तिशब्दः। अनेन सङ्गतिः। वैधर्म्यं वर्णयिष्यत इत्याह—भाविकेति।

हुंकार इति। कुन्तलगतकण्डूव्यपनयने तन्व्या हुङ्कारः कृतिनः कर्णावतंसीभवेत्। कीदृशः, चञ्चुपुटाकारया नखकोटचा यद् व्याघट्टनं तेनोट्टङ्कितः सीत्कारोपशोभी च। कीदृशस्य, पृष्ठश्लिष्यत्कुचाङ्कपालीसुखेनाकेकरदृशः।

स्वभावोक्तिर्बुधैर्नेय(?धोन्नेय)वस्तुस्वाभाव्यवर्णनम् ॥
अथ प्रतीतिवैचित्र्यतारतम्यनिरूपणैः।
भाविकं दूरदुर्लक्षं व्यक्तं व्याक्रियतेतमाम् ॥

---

१. एव—नि० शा०।
२. °वचनप्रस्तावादिहास्या—अ०।
३. उदाहरणम्—अ० शा०।
४. ऋेङ्कारो—नि० शा० शा१।
५. कण्डकव्य°—अ० शा०।
६. °सेव्याङ्कपा°—नि०।

**अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम् ॥सू० ८०॥**

अतीतानागतयोर्भूतभाविनोरर्थयोरलौकिकत्वेनात्यद्भुतत्वाद्व्यस्तसंबन्ध-[१]रहितशब्दसंदर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वं भाविकम्। कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति, भावो[२] भावना वा पुनः पुनश्चेतसि [३]निवेशनं सोऽत्रास्तीति। न चेयं[४] भ्रान्तिः। भूत-[५]भाविनोर्भूतभावितयैव प्रकाशनात्। नापि रामोऽभूदितिवद्वस्तुवृत्तमात्रम्[६]।

अतीत तथा अनागत की प्रत्यक्षायमाणता भाविक है ॥सू० ८०॥

अतीत और अनागत—भूत और भावी पदार्थों का, अलौकिक होने के कारण अत्यन्त अद्भुत होने से तथा आकुल (उलझे हुए) सम्बन्ध से रहित (अर्थात् प्रसन्न) शब्द-रचना से समर्पित होने के कारण, प्रत्यक्ष-सा हो जाना भाविक है। कविगत भाव अर्थात् आशय श्रोता में प्रतिबिम्बरूप में होता है अतः, अथवा भावना अर्थात् (किसी वस्तु या भाव का) बारम्बार मन में अनुसन्धान इस (अलंकार) में होता है अतः (इसे भाविक कहा जाता है)। यह (प्रत्यक्षायमाणता) भ्रान्ति नहीं है क्योंकि भूत तथा भावी (वस्तु)) का भूत और भावी के रूप में ही प्रकाशन होता है। और न राम था इस तरह काइ तिवृत्तमात्र है क्योंकि भूत

तत्र सूत्रम्—

"अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम्"॥

व्याचष्टे—अतीतेत्यादि। निर्वक्ति—कविगत इति। कविभावस्य श्रोतरि प्रतिबिम्बतापत्तिर्भाविकमित्यर्थः। भावो वेति। भाविभाविकस्य भावनैकप्राणत्वात्। निरुक्त्यन्तरं, सोऽत्रास्तीति। भाविकमित्यनुषङ्गः।

ननु मुनिर्जयतीत्युदाहरिष्यमाणे भूतभाविनोः प्रत्यक्षत्वाद् भ्रान्तिः किं नेत्यत आह—न चेयमिति। भूतभाविनोर्भूतभावित्वेनैव प्रत्यक्षीभावे का भ्रान्तिरिति भावः। ननु भूतभाविनोर्भूतभावित्वेन प्रकाशने वस्तुवृत्तमात्रमित्यत आह—नापि रामोऽभूदित्यादि। रामोऽभूदिति वस्तु-

१. व्यत्यस्त°—अ०।
२. भावो वा—अ० शा०।
३. विनिवेशनं—अ०।
४. चेदं भ्रांतिमान्—अ०।
५. °भाविनां°—शा० ना० शा१।
६. °वृत्त°—नि० नास्ति।

भूतभाविगतस्य प्रत्यक्षत्वाख्यस्य[1] धर्मस्य स्फुटस्याधिकस्य प्रतिलम्भात्। नापीयमतिशयोक्तिः[2]। अन्यस्यान्यतयाध्यवसायाभावात्। न हि भूत-[3]भाव्यभूतभावित्वेनाध्यवसीयते,[4] अभूतभावि[5] वा भूतभावित्वेन। नापि प्रत्यक्षमप्रत्यक्षत्वेन,[6] अप्रत्यक्षमपि[7] वा प्रत्यक्षत्वेन।

न हि प्रत्यक्षत्वं[8] केवलं वस्तुधर्मः। प्रतिपत्त्रपेक्ष्यैव[9] वस्तुनि तथा-

और भावी से सम्बद्ध प्रत्यक्ष नामक तत्त्व स्फुट और अधिक होता है। यह अतिशयोक्ति भी नहीं है क्योंकि (इसमें) किसी का किसी दूसरे के रूप में अध्यवसाय नहीं होता है। न तो भूत (वस्तु) तथा भावी (वस्तु) का अभूत और अभावी के रूप में अध्यवसाय होता है और न अभूत और अभावी का भूत और भावी के रूप में; और न प्रत्यक्ष का अप्रत्यक्ष के रूप में अथवा अप्रत्यक्ष का प्रत्यक्ष के रूप में (अध्यवसाय होता है)।

प्रत्यक्षता केवल वस्तु का ही धर्म नहीं होती है क्योंकि प्रमाता की अपेक्षा

वृत्तमात्रे हि न प्रत्यक्षायमाणता। इह तु स्फुटस्य प्रत्यक्षत्वस्योपलम्भः। तर्हि प्रत्यक्षत्वेनाध्यवसायात् अतिशयोक्तिर(रस्त्वि)त्यत आह – नापीयमिति। तत्र हेतुः—अन्यस्यान्यतयेति। अतिशयोक्तौ ह्यन्यदन्यतयाध्यवसीयते इह तु न तथा। भूते भाविनि प्रत्यक्षत्वे चान्यथाध्यवसायाभावात्। एतदुपदर्शयति—न हि भूतभावीति। भूतमभूतत्वेन भावि वा अभावित्वेन नात्राध्यवसीयते। एतद्विपर्ययोऽपि नास्तीत्याह—अभूतभावि वेति। यच्चात्र प्रत्यक्षत्वं तदपि नान्यथाध्यवसीयत इत्याह—न चापीति। विपर्ययोऽपि नास्तीत्याह—(अ)प्रत्यक्षं चेति। ननु भूतभाविनोरप्रत्यक्षयोः प्रत्यक्षायमाणत्वमन्यथाध्यवसाय इत्यत आह – न हि प्रत्यक्षत्वमिति। यदि प्रत्यक्षत्वं केवलवस्तुधर्मस्तदा भूतभाविनो-

---

१. प्रत्यक्षत्वादिगतस्य—नि०। २. नापीदम°—अ० शा१।
३. °भाविनावभूत°—अ०।
४. °सीयेते—अ०।
५. अभूतभाविनौ—अ०।
६. °क्षगतत्वेन' नि० शा१।
७. अप्रत्यक्ष° वा' अ०। °क्षं प्र°—नि०।
८. °प्रत्यक्षं—अ० शा१।
९. प्रतिपत्त्यपे°—नि०।

भावात्। यदाहुः—'तत्र यो [1]ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति स प्रत्यक्षः' इति। केवलवस्तुप्रत्यक्षत्वे प्रतिपत्तुः सामग्री उपयुज्यते। सा च लोकयात्रायां चक्षुरादीन्द्रियस्वभावा, योगिनामतीन्द्रियार्थदर्शने भावनारूपा। काव्यार्थविदां च भावनास्वभावैव। सा च भावना वस्तुगत्यात्यद्भुतत्वप्रयुक्ता। अत्यद्भुतानां वस्तूनामादरप्रत्ययेन हृदि संधार्यमाणत्वात्।

रखकर ही वस्तु प्रत्यक्ष हो पाती है। जैसा कि कहा भी है—"जो प्रतिपत्ता के ज्ञानप्रतिभास (प्रकाश) के साथ अपना अन्वय एवं व्यतिरेक स्थापित करता है वह प्रत्यक्ष है"।[2] वस्तुमात्र का प्रत्यक्ष करने के लिए प्रमाता की (इन्द्रियरूप) सामग्री उपयोगी है। यह (सामग्री) लोकव्यवहार में चक्षु आदि इन्द्रियस्वरूप है और योगिओं द्वारा अतीन्द्रिय पदार्थ का प्रत्यक्ष करने के लिए भावनारूप है। काव्यमर्मज्ञों के लिए भी (यह सामग्री) भावनारूप ही है। और यह भावना वस्तुतः (वस्तु के) अत्यन्त अद्भुत होने से पैदा होती है। क्योंकि अत्यन्त अद्भुत वस्तुओं को आदरबुद्धि से हृदय में धारण किया जाता है।

रप्रत्यक्षता, वर्तमानस्य तु प्रत्यक्षत्वमिति भवेद् व्यवस्था। न हि प्रत्यक्षत्वं केवलवस्तुधर्मः। किं तर्हि? प्रतिपत्त्रपेक्षयैव प्रत्यक्षत्वस्य वस्तुधर्मता। न हि प्रतिपत्तारमनपेक्ष्य वस्तुनि प्रत्यक्षता नाम काचित्। अत्र प्रामाणिकसंवादायाह—यदाहुरित्यादि। यो ह्यर्थः स्वग्राहकं प्रतिपत्तुर्ज्ञानप्रकाशं स्वान्वयव्यतिरेकावनुकारयति। स्वयमस्ति चेद् ज्ञानप्रतिभासोऽस्ति। नास्ति चेन्नास्तीति व्यवस्थापयति स प्रत्यक्ष इत्यर्थः। अतः प्रत्यक्षत्वं न केवलं वस्तुधर्मः प्रतिपत्तुस्तु सामग्री तत्रोपयुज्यत इत्याह—केवलमिति। असामग्रीके प्रतिपत्तिरिह(?) वस्तु प्रत्यक्षीभवतीत्येतावद् वक्तुं शक्यते न तु प्रतिपत्त्रनपेक्षेति भावः। तां सामग्रीं विवेचयति - सा चेति। लोकयात्रायां श्रौति(लौकि)कार्थप्रत्यक्षीकरणे देशकालादिव्यवधानादतीन्द्रियेऽर्थे योगिनामैकाग्र्यात्मकभावनारूपा साक्षात्करणसामग्री। काव्यार्थसाक्षात्करणे काव्यतत्त्वविदामपि भावनास्वभावैव। तां च भावनां काव्यवस्तुगतमत्यद्भुतत्वं प्रयोजयति। अत्यद्भुतानि हि वस्तूनि आदरप्रत्ययेन

---

१. °भासनात्मनो – नि०। °भासमानो—ना०।

२. ज्ञान के प्रकाश के साथ वस्तु द्वारा अपना अन्वय-व्यतिरेक स्थापित करना प्रत्यक्ष है इसका अर्थ है वस्तु है तो ज्ञान का स्फुरण होता है वस्तु नहीं है तो ज्ञान का स्फुरण भी नहीं है—संजीविनी।

**नापि भूतभाविनामप्रत्यक्षाणां प्रत्यक्षतयैव प्रतीतेरिवार्थगर्भीकारेणेयं[१] प्रतीयमानोत्प्रेक्षा। तस्या अभिमान रूपाख्याध्यवसायस्वभावत्वात्। न ह्यप्रत्यक्षं प्रत्यक्षत्वेनाध्यवसीयते, किं तर्हि काव्यार्थविद्भिः प्रत्यक्षत्वेन दृश्यते इति। नापि वस्तुगत इवार्थः[३] [४]उत्प्रेक्षाप्रयोजकः। तस्या अभिमानरूपायाः प्रतिपत्तृधर्मत्वात्। यदाहुः—'अभिमाने च [५]सा [६]योज्या**

भूत तथा भावी अर्थात् प्रत्यक्ष से भिन्न (परोक्ष) पदार्थों की प्रत्यक्ष-जैसी प्रतीति के कारण 'इव' का अर्थ गर्भित होने से (इसे) प्रतीयमानोत्प्रेक्षा भी नहीं (माना जा सकता) है क्योंकि उसका स्वभाव सम्भावनारूप (साध्य) अध्यवसाय का है पर यहाँ अप्रत्यक्ष की प्रत्यक्ष के रूप में सम्भावना नहीं होती है अपितु काव्यमर्मज्ञ को (अप्रत्यक्ष का) प्रत्यक्षरूप में दर्शन होता है। पुनश्च (प्रत्यक्षदर्शन की अनुभूति होने पर भी वस्तु के परमार्थतः प्रत्यक्ष न होने से वस्तु प्रत्यक्ष-जैसी है इस प्रकार वस्तु का 'इव' अर्थ के साथ सम्बन्ध उत्प्रेक्षा के सिद्ध करने हेतु होगा—इस दृष्टि से) वस्तुगत 'इव' अर्थ को उत्प्रेक्षा का प्रयोजक नहीं माना जा सकता है। क्योंकि उस (उत्प्रेक्षा) का स्वरूप सम्भावना का है जो प्रमाता का धर्म है। कहा भी है—"सुखादि की भाँति ज्ञान

हृदि संधार्यमाणानि तथा भावनां प्रयोजयन्ति। इत्थं च सति लोकयात्रायां वर्तमानार्थसाक्षात्करणसामग्री चक्षुरादि। योगिनां काव्यतत्त्वविदां चातीतानागतार्थसाक्षात्करणे भावना। अतो योगिवत् काव्यतत्त्वविदामतीतानागतार्थसाक्षात्कारो नान्यथाध्यवसाय इति नातिशयोक्तिः शङ्क्या। ननु प्रत्यक्षतयेव प्रतीयन्ते भूतभाविन इति प्रतीयमानोत्प्रेक्षा किं न स्यादित्यत आह - **नापि भूतभाविनामिति।** तत्र हेतुः—**तस्या अभिमानेति।** अभिमानः सम्भावनं, तद्रूपः साध्योऽध्यवसाय उत्प्रेक्षाया लक्षणम्। न ह्यत्राप्रत्यक्षत्वं प्रत्यक्षतया सम्भाव्यते, किं तर्हि ? प्रत्यक्षं दृश्यते। अतो नोत्प्रेक्षा। अनुत्प्रेक्षात्वे गमकान्तरमाह—**नापि वस्त्विति।** पदार्थगतो हि इवार्थ उपमायाः प्रयोजको नोत्प्रेक्षायाः। तत्र हेतुः— **तस्या अभिमानेति।** उत्प्रेक्षा ह्यभिमानरूपा प्रतिपत्तृधर्मः। तस्मादभिमानगोचर एवेवार्थः उत्प्रेक्षाप्रयोजक इति भावः। अत्र संवादायाह - **यदाहुरित्यादि।** सुखादिवज्ज्ञानधर्मेऽभिमानेऽध्यवसायोक्तिरित्यर्थः।

---

१. °णायं—नि०।　　२. रूपाध्य°—अ०।
३ 'इवार्थाः', 'प्रयोजकाः', इति बहुवचनग्रहणं नि० शा०।
४. उत्प्रेक्षायाः—अ०।
५. अभिमानेन सा—नि०। ना० शा१।　　६. योक्तिः°—नि० शा।

ज्ञानधर्मे सुखादिवत्' इति[१]। काव्यविषये च प्रयोक्तापि प्रतिपत्तैव। [२]नाप्यद्भुतपदार्थदर्शनादतीतानागतयोः[३] प्रत्यक्षत्वप्रतीतेः काव्यलिङ्गमिदम्। लिङ्गलिङ्गिभावेन[४] प्रतीत्यभावात्। योगिवत्प्रत्यक्षतया प्रतीतेः।

नाप्ययं [५]पुरःस्फुरद्रूपतया सचमत्कारं[६] प्रतीते रसवदलंकारः। रत्यादिचित्तवृत्तीनां तदनुषक्ततया विभावादीनामपि साधारण्येन हृदय-

की (न कि वस्तु की) धर्मभूत सम्भावना के साथ उस (उत्प्रेक्षा) का सम्बन्ध समझना चाहिए"। काव्य-क्षेत्र में प्रयोक्ता (कवि) भी प्रमाता (सहृदय) ही है। अद्भुत पदार्थ के दर्शन से अतीत और अनागत (पदार्थों) की प्रत्यक्षरूप प्रतीति से काव्यलिंग भी नहीं (कहा जा सकता) है क्योंकि (अद्भुतपदार्थ और अतीत-अनागत में परस्पर) साधक और साध्य का सम्बन्ध ज्ञात नहीं होता है, अपितु योगिओं की भाँति प्रत्यक्षता की अनुभूति होती है।

"सामने खड़ा-सा है" इस रूप में चमत्कारमयी (मूर्त) अनुभूति के आधार पर यह रसवदलंकार भी नहीं (माना जा सकता) है। क्योंकि रति आदि चित्तवृत्ति (स्थायी भावों) तथा उनसे सम्पृक्त होने से विभावादि का भी साधा-

ननु यदि प्रतिपत्तृधर्मोऽध्यवसायस्तर्हि प्रयोक्तुः कवेर्न स्यादित्यत आह—काव्यविषये चेति। कविरपि खलु काव्ये सहृदय एव अतो नेयमुत्प्रेक्षा। नन्वद्भुतदर्शनात् प्रत्यक्षत्वमिहेति काव्यलिङ्गमित्यत आह—नाप्यत्यद्भुतेति। अत्यद्भुतपदार्थसाक्षात्कारो हि प्रत्यक्षायमाणत्वे हेतुः। अकाव्यलिङ्गत्वे हेतुमाह—लिङ्गलिङ्गीति। हेतुत्वे सत्यपि लिङ्गलिङ्गिभावेन नेह प्रतीतिः। तथात्वे पारोक्ष्यं प्रसजेदिति भावः। कथं तर्हि प्रतीतिरित्यत आह—योगिवदिति। नन्वद्भुतत्वहेतुका सचमत्कारा प्रतीतिरिह पुरः स्फुरतीव अतो भावध्वनावद्भुतरसोऽङ्गमिति रसवदाद्यलङ्कार इत्यत आह—नाप्ययमिति। तत्र हेतुः—रत्यादीति। यद्यपि सचमत्कारप्रतीतेः पुरःस्फुरत्ता असाधारणी अथापि न भाविक-

१. इति च—नि० शा१।
२. °पदार्थ°—नि० शा० नास्ति।
३. °गतप्र°—ना०। °गतत्वप्र°—शा१।
४. °लिङ्ग्यभावेन—नि०।
५. परिस्फु° अ०।
६. सचमत्कारप्रतिपत्तः—अ० शा०।

**संवादितया परमाद्वैतज्ञानिवत्प्रतीतौ तस्य[१] भावात्। इह तु[२] ताटस्थ्येन भूतभाविनां स्फुटत्वेन भिन्नसर्वज्ञवत्प्रतीतेः। [३]स्फुटप्रतीत्युत्तरकालं तु साधारण्यप्रतीतौ [४]स्फुटप्रतीतिनिमित्तक औत्तरकालिको रसवदलंकारः स्यात्।**

रणरूप में हृदयसम्वाद से परमाद्वैत के ज्ञानी के समान[५] अनुभूति होने पर ही वह (रसवदलंकार) होता है। पर इस (अलंकार) में भूत तथा भावी (पदार्थों) की तटस्थरूप में प्रतीति उसी प्रकार की होती ह जैसी कि द्वैत के सर्वज्ञ की।[६] यदि स्फुट प्रतीति के पश्चात्काल में अभेदानुभूति होती है तो वह स्फुट प्रतीति के निमित्त से उत्पन्न उत्तरकालीन रसवदलंकार का हेतु बनेगी।[७]

रसवतोरभेदः। कुतः? रतिहासादिचित्तवृत्तीनां तदनुरञ्जितत्वेन विभावानुभावव्यभिचारिणां च यदा परमाद्वैतज्ञानिवद् ममैव शत्रोरेवेत्यादिविशेषपरिहारात् साधारण्येन हृदयसंवादिनी प्रतीतिस्तदैव रसवतो भावः। विभावादीन् रसवत्प्रस्तुतौ विवेचयिष्यामः। इह तु भूतभाविनां प्रतीतिर्न साधारण्येन, अपि तु प्रतिपत्तुस्ताटस्थ्येन, स्फुटतया ताटस्थ्यं हि भेदः। यथा सांख्यादिसिद्धान्तानां भेदेन सर्वं जानतां प्रतीतिः। ननु ताटस्थ्येन प्रतीतावतीतादिस्फुटत्वं हेतुः, स्फुटप्रतीतिश्च प्रमुखे, निष्पत्तौ तु साधारण्यप्रतीतिरेव। अतः कथं भाविकमित्यत आह—**स्फुटप्रतिपत्तीति**। स्फुटप्रतिपत्तिनिमित्तकः स्फुटप्रतीत्युत्थापितभाविकहेतुक इत्यर्थः। "मुनिर्जयती"त्यादौ हि कुम्भसम्भवादिवृत्तमादौ ताटस्थ्येनातीतादिरूपतया प्रतीयते तदैव भाविकसिद्धिः। अथोत्तरकालं प्रतिपत्तृप्रतीतेस्ताद्रूप्यापत्त्या विभावादीनां साधारण्ये अद्भुतो रसवान् भाविकहेतुः स्यात्। न चैतावता भाविकापलापः शक्यत इति यावत्।

---

१. तस्याभा°—ना०।  २. च—शा० ना० शा१।
३. °प्रतिपत्त्युत्तर°—अ०।  ४. °प्रतिपत्तिनि°—अ०।
५. जिस प्रकार शिवाद्वैती समग्र विश्व को शिवरूप समझता है।
६. संसार के समग्र पदार्थों को आत्मा से भिन्न मानकर उनका प्रत्यक्ष करने वाला द्वैत का सर्वज्ञ है।
७. भाविक अलंकार में पदार्थों की प्रतीति तटस्थ या स्फुट रूप में होती है। यदि इस स्फुट-प्रतीति अर्थात् भाविक अलंकार की प्रतीति के अनन्तर अभेदानुभूति या साधारण-प्रतीत होती है तो वह स्फुट प्रतीतिरूप भाविक अलंकार रसवदलंकार का साधक हेतु बन जाएगा।

नापीयं [1]सूक्ष्मवस्तुस्वभाववर्णनात्स्वभावोक्तिः। तस्यां लौकिकवस्तुगतसूक्ष्मधर्मवर्णने साधारण्येन हृदयसंवादसंभवात्। इह च[2] लोकोत्तराणां वस्तूनां स्फुटतया ताटस्थ्येन प्रतीतेः[3]। क्वचित्तु लौकिकानामपि वस्तूनां स्फुटत्वेन प्रतीतौ भाविकस्वभावोक्त्योः समावेशः स्यात्। न च हृदयसंवादमात्रेण स्वभावोक्तिरसवदलंकारयोरभेदः। [4]वस्तुसंवाद-

वस्तु के सूक्ष्म धर्म का वर्णन होने से यह स्वभावोक्ति भी नहीं (माना जा सकता) है क्योंकि उसमें लौकिक वस्तु में विद्यमान सूक्ष्म धर्म का वर्णन करने पर साधारणरूप में (देशकालादि के नियमन से रहित) हृदय-संवाद (अभेदानुभव) हो सकता है। पर इस (भाविकालंकार) में वस्तुओं की स्फुट रूप से, तटस्थ रूप से प्रतीति होती है। लौकिक वस्तुओं की स्फुट-प्रतीति होने पर भाविक तथा स्वभावोक्ति दोनों का किसी स्थल में (एक साथ) समावेश हो सकता है। पर केवल (दूसरे की चित्तवृत्ति के साथ अपनी चित्तवृत्ति की एकतारूप) हृदयसंवाद के आधार पर स्वभावोक्ति और रसवत् को अभिन्न नहीं माना जा सकता है। क्योंकि स्वभावोक्ति में वस्तुसम्वाद (यह वस्तु इसी

नन्विह सुन्दरवस्तुस्वभावश्चेन्न वर्ण्येत न तदा प्रत्यक्षायमाणता। अतः स्वभावोक्तिरित्यत आह—नापीयमिति। तत्र हेतुः तस्यां लौकिकेति। स्वभावोक्तेर्हि लौकिकानामेव वस्तूनां यः सूक्ष्मो धर्मः प्रेक्षावत्प्रतिभैकसमधिगम्यस्तस्य वर्णने हृदयसंवादः साधारण्येन। इह पुनरत्यद्भुतत्वेनालौकिकानां वस्तूनां प्रतीतिस्तटस्थतया। अतो हृदयसंवादातिरिक्तानामंशानां वैलक्षण्यम्। ननु लौकिकवस्तुप्रतीतिसाधारण्ये स्वभावोक्तिः, अलौकिकवस्तुप्रतीतिस्फुटत्वे तु भाविकमिति व्यवस्था। यदि लौकिकवस्तुप्रतीतेः स्फुटत्वं तदा किं स्यादित्यत आह—क्वचित् त्विति। लौकिकवस्तुबलात् स्वभावोक्तिः, स्फुटत्वप्रतीतिबलाद्भाविकम्। अतः सङ्करः। हृदयसंवादसाधारण्यात् स्वभावोक्तिरसवतोर्योऽयमभेदः प्रसङ्गात् प्रतीतस्तत्र विवेचयति—न च हृदयसंवादेति। स्वभावोक्तौ रसवति च यद्यपि साधारण्येन हृदयसंवादः सचेतसां, तथापि नानयोरभेदः।

---

१. सुन्दरवस्तु°—ना० शा१।
२. च तु—ना०। च—अ० नास्ति।
३. च प्रतीतेः—अ०।
४. वस्तुस्वभावसंवाद°—अ०।

रूपत्वात्स्वभावोक्तेः[1]। [2]चित्तवृत्तिरूपत्वाच्च रसवदलंकारस्य। उभयसंवादसंभवे[3] तु समावेशोऽपि घटते। यत्र वस्तुगतसूक्ष्मधर्मवर्णनं[4] स्यात्तत्र स्वभावोक्तिः, अन्यत्र तु रसवदलंकार एव।

नाप्ययं शब्दानाकुलत्वहेतुको[5] [6]झगित्यर्थसमर्पणात्प्रसादाख्यो[7] गुणः।

प्रकार की ह इस प्रकार का वस्तु के साथ अभेदानुभव) होता है और रसवदलंकार में चित्तवृत्तियों का संवाद (अभेदानुभव) होता है। जहाँ दोनों (वस्तु तथा चित्तवृत्ति) का संवाद हो वहाँ (दोनों अलंकारों का एकत्र) समावेश भी माना जाएगा। जहाँ वस्तुनिष्ठ सूक्ष्म धर्म का वर्णन हो वहाँ स्वभावोक्ति होगी और अन्यत्र (चित्तवृत्ति के संवाद की स्थिति में) रसवदलंकार ही होगा।

(भाविकालंकार को) शब्दों की अनाकुलता के कारण होने वाला, झटिति अर्थ का ज्ञान कराने से, प्रसाद नामक गुण नहीं (माना जा सकता) है। क्योंकि

तत्र हेतुः—वस्तुस्वभावेति। सत्यपि साधारण्ये वस्तुस्वभावस्य संवादः स्वाभावोक्तौ, रसवति तु चित्तप्रवृत्तेः। वस्तुस्वभावचित्तप्रवृत्तिरूपत्वादनयोः। असंपाते तु सङ्कर इत्याह—उभयसंवादेति। समावेशः सङ्करः। समावेशघटने लिङ्गमाह—यत्र वस्तुगतेति। यत्र चित्तवृत्तिसंवादवति विषये संवादवती वस्तुगतसूक्ष्मधर्मवर्णना स्यादित्यर्थः। अन्यत्र त्विति। सूक्ष्मवस्तुधर्मवर्णनाविरहिणि चित्तवृत्तिसंवादमात्रशालिनि विषये रसवानेव। ननु व्यस्तसंबन्धरहितसन्दर्भसमर्पितत्वमिह लक्षणं तथात्वे च प्रसादाख्यो गुण एवेत्यत आह—नाप्ययं शब्देत्यादि। इह यद्यपि झटित्यर्थ समर्पणं शब्दानाकुलत्वहेतुकमथापि नायं प्रसादः। तत्र हेतुः—तस्य हि स्फुटास्फुटेत्यादि। स्फुटोऽस्तु वाक्यार्थः अस्फुटो वा तदुभयगतत्वेन झटिति समर्पणं प्रसादस्वरूपम्। यदाह—

"शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यत्।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः" ॥

इति। अत्र शुष्केन्धनाग्निवदित्यस्फुटं वाक्यार्थं प्रत्युपमानोक्तिः स्वच्छजलवदिति स्फुटं प्रति। अतः सर्वत्र विहितस्थितित्वेन झटिति समर्पणं रूपं

१. स्वभावोक्तिः—शा१।
२. चित्तवृत्तिसमाधिरू°—नि० शा१। ३. °संवाददर्शनेऽपि—नि० ना०।
४. °वर्णना—अ०। ५. °हेतुकात्—नि०।
६. झटि°—अ०। ७. °समर्पणरूपः—अ० शा०।

तस्य हि स्फुटास्फुटोभयवाच्यार्थगतत्वेन[1] झटिति[2] समर्पणं[3] रूपम् । अस्य तु[4] झटिति[5] समर्पकस्य[6] सतः स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भः । तस्मादयं सर्वोत्तीर्ण एवालंकारः । लक्ष्ये चायं प्रचुरप्रयोगो दृश्यते । यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥२५२॥

उस (प्रसादगुण) का स्फुट तथा अस्फुट दोनों प्रकार के अर्थों का शीघ्र बोध कराना स्वरूप है पर इस (अलंकार) का स्वरूप तभी बनता है जबकि शीघ्र बोध कराने वाले (शब्दार्थ) के रहने पर स्फुट रूप में (अर्थ की) प्रतीति हो। अत एव यह अलंकार सभी (इतिवृत्त, अलंकार तथा गुणादि) से भिन्न है; काव्य (लक्ष्य) में इसका प्रचुर प्रयोग भी दिखाई पड़ता है। जैसे—

योगिराज, सन्त अगस्त्य ऋषि सबसे उत्कृष्ट हैं, जिन्होंने (समुद्र का आचमन करते समय अपने) एक चुल्लू में उन दोनों दिव्य मत्स्य तथा कच्छप (मत्स्यावतार तथा कूर्मावतार) का दर्शन किया था ॥२५२॥

प्रसादस्य । अस्य तु प्रसादेन झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ सत्यां समनन्तरं स्वरूपप्रतिलम्भः । स्वरूपं ह्यस्य श्रोतरि कविगतभावप्रतिबिम्बनं पौनःपुन्येन चेतसि विनिवेशस्वभावभावनात्मकं वा । तथाविधस्य तु प्रतिबिम्बनं स्फुटप्रतीत्युत्तरकालमेव । अतः प्रसादोऽस्याङ्गत्वेन प्राक्सिद्धिकः । अयन्तु तदुपकृतः समनन्तरसिद्धिकः । ततोऽन्य एव । अतो न कुत्रचिदन्तर्भाव इति निगमयति - तस्मादयमिति । सर्वोत्तीर्णः भ्रान्त्यादिषु प्रसादगुणान्तेषु शङ्कितेष्वेकतरत्रापि नान्तर्भावयितुं शक्य इत्यर्थः । इत्थं लक्षणतोऽस्य नानुपपत्तिः काचित् । लक्ष्यतोऽपि प्राचुर्यमित्याह—लक्ष्ये चायमिति ।

मुनिर्जयतीति । मननान्मुनिः । योगीन्द्रत्वान्महात्मा । स्वयं तु कुम्भसम्भवः । तथाविधेन येनैकस्मिन्नेव चुलुके पिपासोद्धृतनिरवशेषार्णवाम्भसि प्रसृतिगर्ते दिव्यौ अमानुषानुभावातिशयौ तौ विष्णोर्दशस्ववतारेषु प्रसिद्धावदानौ मत्स्यकच्छपौ यदृच्छया चुलुकान्तर्भावात् पर्याकुलं लुठन्तौ दृष्टौ । अत्रातीतवृत्तोऽपि मुनिरलौकिकत्वेनात्यद्भुतः सन्नादरप्रत्ययेन हृदि संधार्यमाण-

---

१. °उभयरूपवाक्यार्थ°—अ० । °उभयवाक्यगत°—नि० ।
२. झगिति—शा० ना० ।
३. समर्पित—ना० ।
४. तु—शा १ पुस्तके नास्ति ।
५. झगिति—शा० ना० शा१ ।
६. समर्पितस्य स्फुटत्वेन—अ० । समर्पितस्य सतः—ग ।

यथा वा—हर्षचरितप्रारम्भे ब्रह्मसदसि वेदस्वरूपवर्णने। तत्र हि प्रत्यक्षमेव स्फुटत्वेन तदीयं रूपं दृश्यते। एवं तत्रैव [1]मुनिक्रोधवर्णने,[2] पुलिन्दवर्णनादौ ज्ञेयम्।

अथवा जैसे—हर्षचरित के प्रारम्भ में ब्रह्मसभा में वेदों का स्वरूप-वर्णन करते समय वहाँ उन (वेदों) का स्वरूप स्फुटरूप में प्रत्यक्ष ही दिखाई देता है। इसी प्रकार उसी (हर्षचरित) में मुनि के क्रोध का वर्णन करते समय (क्रुद्ध वेदों का स्वरूप प्रत्यक्ष वर्णित हुआ है), एवं पुलिन्द आदि के वर्णन में (भाविकालंकार) समझ लेना चाहिए।

त्वादनाकुलसन्दर्भसमर्पितत्वाच्च प्रत्यक्षायमाणस्तथाविधं कविभावं प्रतिपत्तृषु प्रतिबिम्बयति पौनःपुन्येन चेतसि भावनां विनिवेशयतीति भाविकत्वम्। प्राचुर्यार्थमुदाहरणान्तराणि। यथा वा हर्षचरितेत्यादिना। हर्षचरितप्रारम्भे हि देवीं सरस्वतीमभिशप्तवते क्रोधमुनये क्रुद्धानां वेदानां स्वरूपमुपवर्णितम्। यथा—"रोषविमुक्तवेत्रासनैरोङ्कारमुखरमुखैरुत्क्षेपदोलायमानजटाभारभरितदिग्भिः परिकरबन्धभ्रमितकृष्णाजिनपटच्छायाश्यामायमानदिवसैरमर्षनिःश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्रपवित्रभस्मस्मेरललाटपट्टकुशतन्तुचीवरिभिराषाढिभिः प्रहरणीकृतदण्डकमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैरिति"। योजनायाह—अत्र (?तत्र) हि प्रत्यक्षमिवेति। क्रोधमुनिवर्णनं पुनर्दृष्ट्वा तु तां तथा हसन्तीं स मुनिः—"आः पापे दुर्गृहीतविद्यालवावलेपदुर्विदग्धे मामुपहससीत्युक्त्वा शिरःकम्पविशीर्यमाणबन्धनविशशारोरुन्मिषत्तटित्पिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण दश दिशः कृतकालसन्निधानामिवान्धकारितललाटाष्टापदामन्तकमण्डनपत्रभङ्गमकरिकां भ्रुकुटीमाबध्नन्नन्तर्लोहितेन चक्षुषा स्वरुधिरोपहारमिवामर्षदेवतायै प्रयच्छन् निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलायमानां वाचमिव निरुन्धन् अंसस्रंसिनः शापशासनपट्टस्येव ग्रन्थनग्रन्थिमन्यथा कृष्णाजिनस्ये"त्यादि। पुलिन्दवर्णनं तु "शरभकेतोः सूनुर्व्याघ्रकेतुर्नाम कुतोऽपि कज्जलश्यामलं श्यामलतावलयेनाधिललाटमुच्चैः कृतमौलिबन्धमन्धकारिणीमकारणभुवा भ्रुकुटिबन्धेन त्रिशिखेन त्रियामामिव साहससहवाससञ्चारिणीं ललाटस्थलीं सदा समुद्वहन्त"मित्यादि।

---

१. क्रुद्धे मुनि°—ना० शा१। २. क्रुद्धमुनि वर्णनपुलिन्द°—अ०।

अयं त्वत्र विचारलेशः संभवति—इह क्वचिद्वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्वम्, क्वचित्प्रत्यक्षायमाणस्यैव वर्णनम्। [1]आद्यो यथोदाहृतं प्राक्। [2]द्वितीयो यथा—

अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः।
अचामरोऽप्येष [3]सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥२५३॥

[4]इति।

[5]तत्र प्रथमप्रकारविषयोऽयमलंकारो न[6] प्रकारान्तरगोचरः। कवि-

भाविकालंकार के सन्दर्भ में थोड़ा सा यह तत्त्वनिर्णय करलेना उचित है कि कहीं तो वर्ण्य (वस्तु) की वर्णना (कवि द्वारा समर्थ वर्णन) के कारण प्रत्यक्षायमाणता होती है और कहीं प्रत्यक्षसी (वस्तु) का वर्णन होता है। प्रथम का उदाहरण पहले दिया जा चुका है। दूसरे (प्रकार) का उदाहरण निम्नलिखित है—

छत्र के विना भी यह यहाँ ऐसा दिखाई पड़ रहा है कि मानो इसके चारों ओर श्वेत छत्र लगे हों। चंवर के विना भी लगता है कि इस अद्भुत व्यक्ति पर विलास के चंवर झूल रहे हैं ॥२५३॥

इन (दो भेदों) में से यह (भाविक) अलंकार प्रथम भेद का ही विषय बनता है दूसरे भेद (प्रत्यक्ष-सी वस्तु के वर्णन) का (विषय) नहीं होता है

ननु वर्णनावशात् प्रत्यक्षायमाणत्वं किं भाविकविषय आहोस्विदनुभावविशेषात् प्रत्यक्षायमाणस्य सतो वर्णनमित्यत आह—अयं त्वत्रेत्यादिना। लेश इत्यल्पावशिष्टतामाह—वर्णनावशादिति। भणितिमाहात्म्यमाविष्करोति। प्रत्यक्षायमाणस्यैवेति। भणितिमाहात्म्यनैरपेक्ष्येण निजानुभावविशेषादेव प्रत्यक्षायमाणत्वमनुसन्धत्ते।

अनातपत्रोऽपीति। अत्रानातपत्रस्यापि सितातपत्रैरिव वृतत्वमचामरस्य च बालव्यञ्जनेनेनोपलक्षितत्वम्। अनुभावविशेषादेव प्रत्यक्षायमाणत्वं वर्ण्यते न तु वर्णनावशात् प्रत्यक्षायमाणता। इत्थं विषयद्वयेऽवस्थिते भाविकमेकत्रैवेत्याह—अत्र प्रथमप्रकारेति। न प्रकारान्तरगोचर इति यदुक्तं तत्र हेतुः—

---

1. आद्यं—अ० शा०। 2. द्वितीयं—अ० शा०।
3. सतेव—शा१। 4. इति—ना० नास्ति।
5. अत्र—अ० नि० सं०। 6. न च—ना०।

समर्पितानां धर्माणां [1]ह्यलंकारत्वात्। न हिमांशुलावण्यादीनामिव [2]वस्तुसन्निवेशिनाम्। अपि च 'शब्दानाकुलता चेति तस्य हेतून्प्रचक्षते' इति भामहीये, 'वाचामनाकुल्येन[3] भाविकम्' इति [4]चौद्भटे लक्षणे [5]व्यस्तसंबन्धरहितशब्दसन्दर्भसमर्पितत्वं प्रत्यक्षायमाणत्वप्रतिपादकं कथं प्रयोजकीभवेत्, यदि [6]वस्तुसन्निवेशिधर्मगतत्वेनापि भाविकं स्यात्। तस्माद्वास्तवमेव [7]महत्त्वमुत्तरप्रकारविषये[8] वर्णितमिति नायमलंकारः।

क्योंकि कवि द्वारा समर्पित धर्मों में ही अलंकारत्व होता है। चन्द्रमा के सौन्दर्य के समान वस्तुगत में अलंकारत्व नहीं होता है। पुनश्च यदि वस्तुनिष्ठ धर्म के आधार से भी भाविक हो सकता है तो "शब्दों की अनाकुलता आदि को उस (भाविकालंकार) का हेतु कहा जाता है" भामह के इस लक्षण में तथा उद्भट के "शब्दों की अनाकुलता से भाविक होता है" इस लक्षण में उलझे (आकुल या व्यस्त) सम्बन्ध से रहित शब्दरचना से समर्पित होना प्रत्यक्षायमाणता का किस प्रकार घटक तत्त्व हो सकेगा? अतः (यह मानना चाहिए कि) दूसरे भेद के उदाहरण (श्लोक २५२) में वास्तविक (वस्तुनिष्ठ) महत्त्व का ही वर्णन हुआ है

कविसमर्पितानामिति। ये हि कविना प्रतिभया समर्प्यन्ते मुखादौ चन्द्रत्वकमलत्वादयो धर्मास्तेषामेवालङ्कारत्वं न तु परमार्थतः सन्निविष्टानां हिमांशुलावण्यादीनाम्। अतो द्वितीयप्रकारे प्रत्यक्षायमाणत्वं वस्तुसन्निवेशीति न भाविकालङ्कारः। युक्त्यन्तरेणापि द्रढयितुमाह—अपि च शब्दानाकुलतेत्यादि। चकाराद्भूतभावित्वादयः समुच्चीयन्ते। भूतभावित्वादयः शब्दानाकुलता चेति हेतवो भामहानुशासने। उद्भटलक्षणे चानाकुलत्वरूपं यदेतद् व्यस्तसंबन्धरहितशब्दसमर्पितत्वं प्रत्यक्षायमाणत्वप्रतिपादकमुक्तं तत् कथं प्रयोजकीभवेत्। वस्तुसन्निवेशिधर्मगतत्वेनापि भाविकसम्भवे निष्प्रयोजनमेव स्यात्। अतो न द्वितीयप्रकारे भाविकमिति निगमयति—तस्माद् वास्तवमेवेत्यादि। अत्रोत्तरप्रकारे। ननु वास्तवेऽपि सौन्दर्ये लौकिकतया मा भूद् विच्छित्तिः, कवेः कविनिबद्धस्य वा वक्तुर्निबन्धवशादस्त्येव सकलव्यवहर्तृगोचरीभूतत्वाद् दुरपह्नवा विच्छित्तिः। तत्र कुतो न भाविकमित्यत आह—

---

1. हि—अ० ना० शा० नास्ति।
2. वस्तुनिवेशि°—ना०।
3. °मनाकुलत्वेनापि—नि०।
4. चोद्भटलक्षणे—अ० शा०।
5. व्यत्यस्त° वस्तुसम्बन्ध°—ना०।
6. °वेश°—नि०।
7. °मुत्तरत्र° नि०।
8. °विषयो°—ना०।

यदि तु [1]वास्तवमपि सौन्दर्यं कविनिबद्धं, कविनिबद्धवक्तृनिबद्धं वा सकलवक्तृगोचरीभूतं स्वभावोक्तिवदलंकारतया[2] [3]वर्ण्यते, तदायमपि प्रकारो नातीव दुःश्लिष्टः। अत एव 'प्रत्यक्षा इव [4]यत्रार्थाः क्रियन्ते भूतभाविनः। तद्भाविकम्' [5]इत्येवमन्यैर्भाविकलक्षणमकारि। स्वभावोक्त्या किंचित्सादृश्यात्तदनन्तरमस्य लक्षणं कृतम्।

अतः इसमें अलंकार नहीं है। पर यदि वास्तविक सौन्दर्य का भी, वह कवि द्वारा वर्णित हो अथवा कवि-निबद्ध वक्ता के द्वारा वर्णित हो, स्वभावोक्ति की भाँति सभी पाठकों की अनुभूति का विषय बन कर वर्णन होता है तो इस (दूसरे) भेद का भी (भाविक के रूप में) निबन्धन अधिक कठिन नहीं है। इसीलिए दूसरे (आचार्य मम्मट) ने "अतीत और अनागत पदार्थ जब प्रत्यक्ष से कराये जाते हैं उसको भाविक कहते हैं" यह लक्षण भाविक का किया है। स्वभावोक्ति के साथ थोड़ी सी समानता होने से उसके बाद इस (अलंकार) का स्वरूप-निरूपण किया गया है।

यदि तु वास्तवमपीत्यादिना। यदि वस्तुसन्निवेश्यपि सौन्दर्यनिबन्धवशात् सविच्छित्तिकं प्राञ्च आचार्याः स्वभावोक्तिवदलङ्कारतया वर्णयेयुस्तदायमपि वास्तवसौन्दर्यविषयतया समाशङ्कितो भाविकप्रकारो नातीव दुःश्लिष्टः, सुश्लिष्ट एव सत्यां सामग्र्याम्। अयमिहाशयः — यथा हि स्वभावोक्तिर्वास्तवसौन्दर्यावलम्बिनी वस्तुस्वभावसौक्ष्म्यात् साधारण्येन सचेतनसंवादाच्च विच्छित्तिमतीव वर्णिता तथैव वास्तवसौन्दर्यावलम्बितया निबन्धादिविच्छित्तिविशेषोऽयमलङ्कारतया वर्णनीय एव। तथा च सति भूतभावित्वादिसामग्रीसद्भावेऽन्यकल्पनगौरवादयमपि भाविकप्रकार इत्युन्मीलनं योग्यतया सुशकमेव। उन्मीलिताश्चोल्लेखभावोदयसन्धिशबलत्वादयः। अतिप्रथनस्वातन्त्र्ये चिरन्तनसमयव्यतिक्रमः स्यादिति। अमुमेवाशयमाविश्चिकीर्षुरभियुक्तसंवादायाह — अत एवेत्यादि। भूतभाविनः प्रत्यक्षा इव यत्र क्रियन्ते इत्येतावदेव भाविकलक्षणमकारि यैर्न खलु तैः शब्दानाकुलत्वादि लक्षणत्वेनोक्तं, नापि वा वस्तुसन्निवेशिनः सौन्दर्यस्य निबन्धादिविच्छित्तिस्स्वभावोक्तितुल्यनयशालिन्यलङ्कारत्वेन प्रसञ्जिता। अतो

---

१. °मेवात्र – नि० शा०।
२. °कार उपवर्ण्यते—ना०।
३. वर्ण्यते—अ०।
४. यद्भावाः—ना०।
५. एतावदेवान्यैः—अ०।

## समृद्धिमद्वस्तुवर्णनमुदात्तम् ॥सू० ८१॥

समृद्धि से युक्त वस्तु का वर्णन उदात्त (अलंकार) है ॥सू० ८१॥

भूतभाविप्रत्यक्षवद्भावलक्षणस्य भाविकस्य शब्दानाकुलत्ववद् वास्तवसौन्दर्यावलम्बेनापि भाविकप्रभेदोऽभ्यनुज्ञायते। यत इत्थं स्वभावोक्तिप्रतियोगिकतया मीमांसा प्रवर्तयितव्या अतः सम्प्रति सङ्गतिमाह—**स्वभावोक्त्या किञ्चिदिति**। वास्तवसौन्दर्यविषयत्वं सादृश्यम्। तच्च लौकिकत्वालौकिकत्वसूक्ष्मत्वस्फुटत्वसाधारण्यताटस्थ्यप्रतीत्यादिवैधर्म्यप्राचुर्यादल्पक इत्यभिसंधायोक्तम्। किञ्चिदिति। यद्यपि सादृश्यं किञ्चिन्मात्रमथापि न्यायसञ्चारायेहास्माभिर्लक्षणमस्य कृतम्।

योऽयं प्रत्यक्षवद्भावस्त्वतीतानागतार्थयोः।
तद्भावबिम्बनाच्चित्ते विनिवेशाच्च भाविकम्॥
नाविपर्ययतो भ्रान्तिः साक्षात्वान्नेतिवृत्तकम्।
अन्यत्वानध्यवसितेर्न न चात्रातिशयोक्तिता॥
न परं वर्तमानार्थधर्मः प्रत्यक्षतेष्यते।
प्रतिपत्त्रनपेक्षायां प्रत्यक्षत्वपरिक्षयात्॥
प्रत्यक्षत्वे च सामग्री *भवनाद् भूत वस्तुजा।
प्रत्यक्षत्वं न सम्भाव्यमिह नोत्प्रेक्षणं ततः॥
अलिङ्गलिङ्गिभावाच्च काव्यलिङ्गं न चेष्यते।
ताटस्थ्यात्स्फुटसंवित्तेर्न तदा रसवद्भ्रमः॥
पश्चात् साधारणीभावे रसवांस्तन्निमित्तकः।
स्फुटत्वान्न स्वभावोक्तिर्लोकोत्तीर्णस्य वस्तुनः॥
स्वभावोक्ते रसवतो भेदः संवादभेदतः।
न प्रसादगुणश्चैतद् यस्मादौत्तरकालिकम्॥
वास्तवेऽपि च सौन्दर्ये योग्यत्वादस्य सम्भवः।
चिरन्तनानुरोधात्तु तथा व्यक्तं न कीर्तितम्॥
भाविके बुद्धिसंवादो मया स्याद् यदि कस्यचित्।
व्याख्याशिल्पस्य निकषः स मे धीमान् भविष्यति।

उदात्ताय सूत्रम्—

"समृद्धिमद्वस्तुवर्णनमुदात्तम्"।

*अशुद्धोऽयं पाठः। एतत्स्थाने 'भावनाद्भुतवस्तुजा' इति पाठः स्वीकार्यः।

**स्वभावोक्तौ भाविके च [1]यथावद्वस्तुवर्णनम्। तद्विपक्षत्वेनारोपित-[2]वस्तुवर्णनात्मन उदात्तस्यावसरः। तत्रासंभाव्यमानविभूतियुक्तस्य[3] वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्यलक्षणमुदात्तम्[4]। यथा[5]—**

**मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः[6]**
**प्रातः [7]प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।**
**[8]दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका**
**यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥२५४॥**

स्वभावोक्ति तथा भाविक में यथास्थित (लौकिक) वस्तु का वर्णन होता है। उनसे भिन्न होने के कारण (यह) अवसर उदात्त (अलंकार के निरूपण) का है जिसका स्वरूप आरोपित (कविकल्पित) वस्तु का वर्णन करना है। इस प्रकरण में (तत्र) लोकोत्तर समृद्धि से युक्त वस्तु का कविप्रतिभा से प्रसूत ऐश्वर्य से सम्पन्न वर्णन उदात्त (अलंकार) कहलाता है। जैसे—

विद्वानों के घरों में, रतिलीला में टूटे हार से गिरे हुए और प्रातः काल आंगन में झाड़ू से बुहार कर इकट्ठे किए हुए और अवश चाल से चलतीं हुई युवतियों के महावर से लाल-लाल दिखाई पड़ने वाले मोतियों को क्रीडाशुक अनार के दाने समझ कर यह जो खींच रहे हैं वह राजा भोज के दान की ही लीला है॥२५४॥

**समृद्धिमतो वस्तुनः कतिप्रतिभोत्थापितैश्वर्यवर्णनमुदात्तालङ्कारः। ससङ्गतिकं व्याचष्टे—स्वभावोक्तावित्यादि। यथावस्थितत्वं लौकिकत्वम्। आरोपितत्वं कविकल्पितत्वम्। अवतारः प्राप्तिः। ऐश्वर्यलक्षितमिति लक्ष्यपदनिरुक्तिः।**

**मुक्ताः केलीति। विसूत्रता छिन्नसूत्रता। सम्मार्जनीभिः प्राङ्गणसीम्नि कृताः। यत् कर्षन्तीति वाक्यार्थपरामर्शः। यदेतत् कर्षणं तत् त्यागलीलायित-मित्यर्थः।**

**उदात्तं तु समृद्धस्य वस्तुनः कविवर्णनम्।**

---

१. यथास्थितवस्तु°—अ० ना०। २. °वस्त्वात्मनः—शा१।
३. °नभूति°—अ०। ४. °लक्षित°—शा० ना०।
५. 'यथा'—स्थाने 'उदाहरणम्'—अ० ना०।
६. कृताः—अ० शा० शा१। ७. प्राङ्कण°—अ०।
८. आराद्—अ०।

**अङ्गभूतमहापुरुषचरितं[1] च ।।सू० ८२।।**

उदात्तशब्दसाम्यादिहाभिधानम् । महापुरुषाणामुदात्तचरितानामङ्गि[2]भूतवस्त्वन्तराङ्गभावेनोपनिबध्यमानं[3] चरितं चोदात्तम् । महापुरुषचरितस्योदात्तत्वात् । यथा –

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
[4]विचरन्बाहुसहायश्चकार रक्षःक्षयं रामः ।।२५५।।

[5]अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् ।

महापुरुषों का (किसी के प्रति) अंगभूत चरित भी (उदात्त नाम का ही एक दूसरा अलंकार है) ।।सू० ८२।।

उदात्त शब्द से सादृश्य के कारण यहाँ (उदात्तनाम के दूसरे अलंकार का) निरूपण किया जा रहा है । उदात्त चरित वाले महापुरुषों का चरित प्रधानभूत (किसी) वस्त्वन्तर के अंगरूप में उपनिबद्ध होने पर उदात्त (नामक द्वितीय अलंकार) कहलाता है क्योंकि महापुरुषों का चरित उदात्त होता है (अतः इस अलंकार का नाम उदात्त रखा गया है) । उदाहरण—

यही वह (दण्डक) बन है जहाँ निवास करते हुए दशरथ की आज्ञा के पालन में दत्तचित्त राम ने (केवल अपने) भुजबल की सहायता से (खरदूषणादि) राक्षसों का विनाश किया था ।।२५५।।

यहाँ (दण्डक) वन का वर्णन (प्रधान) होने पर राम के चरित को अंग बना दिया गया है ।

**उदात्तान्तराय सूत्रम्—**

**"अङ्गभूतमहापुरुषचरितं च" ।**

**पूर्वमैश्वर्ययोग उदात्तत्वम् । इह पुनश्चरितस्योदार(? त्त)त्वम् । अतः शब्दसामान्यात् सङ्गतिः । तदेतदाह—उदात्तशब्देत्यादि ।**

**तदिदमिति । अत्रारण्यं वृत्तान्तःपातादङ्गि, यद्वृत्तान्तःपाताद्रामचरितमङ्गम् । तदेतदाह – अत्रारण्य इति । अस्य चेह कीर्तनं दर्शनान्तरानुसारेण । ध्वनिदर्शनेन तु द्वितीयोदात्तविषये रसवदादय एव । विवेचयिष्यते चैतत् ।**

**अङ्गयन्तरेऽङ्गतापन्नं महच्चरितलक्षणम् ।**
**द्वितीयोदात्तविषयो व्याप्तो रसवदादिभिः ।।**

---

१. चरितवर्णनं°—अ० शा० । २. °मङ्गी°—अ० । ३. °निबद्धं—अ० ।
४. निवसन्—नि० । ५. अत्र वर्णनीयेऽरण्ये—इति ना० पाठक्रमः ।

**रसभावतदाभासतत्प्रशमानां निबन्धे[1] रसवत्प्रेयऊर्जस्वि-समाहितानि ॥सू० ८३॥**

उदात्ते महापुरुषचरितस्य चित्तवृत्तिरूपत्वाच्चित्तवृत्तिविशेषस्वभाव[2]-त्वाच्च रसादीनामिह [3]तद्वदलंकाराणां प्रस्तावः। अत एव चत्वारोऽलंकारा युगपल्लक्षिताः। तत्र विभावानुभावव्यभिचारिभिः प्रकाशितो रत्यादि-

रस, भाव, तदाभास (रसाभास एवं भावाभास) तथा तत्प्रशम (भावप्रशम) का निबन्धन होने पर रसवत्, प्रेयः, ऊर्जस्वी तथा समाहित (अलंकार) होते हैं ॥सू० ८३॥

उदात्त (अलंकार) में महापुरुष का चरित चित्तवृत्तिरूप होता है और रसादि विशिष्ट चित्तवृत्तिस्वरूप होते हैं अतः रसादिमान् अलंकारों का यहाँ प्रकरण है। इसीलिए चारों अलंकारों को एक साथ निरूपित किया गया है। इनमें से विभाव, अनुभाव तथा संचारी भाव से प्रकाशित रत्यादि (स्थायी

रसवदाद्यर्थं सूत्रम्—

"रसभावतदाभासतत्प्रशमानां निबन्धे रसवत्प्रेयऊर्जस्विसमाहितानि।"

विभावादिभिरभिव्यञ्जितो रत्यादिर्भावो रसः। तथा विभावानुभावसूचिता व्यभिचारिणः। देवतादिविषया रतिश्च भावः। तावेवाविषयप्रवृत्ताvाभासौ। प्रयास्यदवस्था तु प्रशमः। एषां चतुर्णामुपनिबन्धे परिपाट्या रसवान् प्रेयः ऊर्जस्वी समाहितमित्यलङ्कारा इति सूत्रार्थः। ससङ्गतिकं व्याचष्टे—उदात्ते महापुरुषस्येत्यादिना। तदलङ्काराणां चित्तवृत्तिविच्छित्त्यात्मनामलङ्काराणामित्यर्थः। अत एव चेति। यतश्चत्वारोऽपि चित्तवृत्त्यात्मानोऽतः समानयोगक्षेमतया युगपदेकसूत्रक्रोडीकारेण लक्षिताः। रसस्वरूपं विवेचयति—तत्र विभावेति। रतिहासशोकादीनां वा समानात्मनां स्थायिभावानां यानि लोके कार्यकारणसहकारीणि तानि काव्ये संदृब्धानि नाट्ये चाभिनीतानि गुणालङ्कारमहिम्ना चतुर्विधाभिनयमहिम्ना च विभावनादनुभावनाद्विशिष्याभिमुख्यचरणाच्च विभावानुभावव्यभिचारिण उच्यन्ते। तैः प्रकाशितो व्यञ्जितो रत्यादिः सामाजिकचित्तवृत्तिविशेषः शृङ्गारादिको रस इति दिक्। विशेषः सम्प्रदायप्रकाशिन्यादौ ज्ञेयः। इहानुपयोगान्न प्रपञ्च्यते।

१. निबन्धनेन—नि०। °मनिबन्धे—शा१।
२. °वृत्तेः वि°—ना०।
३. इहालङ्कारा°—ना०। तदलङ्कारा°—शा१।

श्चित्तवृत्तिविशेषो रसः। भावो विभावानुभावाभ्यां सूचितो निर्वेदादिस्त्रयस्त्रिंशद्भेदः। [1]देवतादिविषयश्च[2] रत्यादिर्भावः। तदाभासो रसाभासो भावाभासश्च। आभासत्वमविषयप्रवृत्त्यानौचित्यात्[3]। तत्प्रशम उक्तप्रकाराणां निवर्तमानत्वेन प्रशाम्यदवस्था। तत्रापि[4] रसस्य परविश्रान्तिरूपत्वात्सा न संभवति इति परिशिष्टभेदविषयो द्रष्टव्यः। एषामुप-

भाव) रस है जो एक विशिष्ट चित्तवृत्ति है। विभाव तथा अनुभाव से सूचित निर्वेद आदि भाव कहलाता है जिसके तैंतीस भेद हैं। तथा देवताविषयक रत्यादि (स्थायी भाव) भी भाव कहलाता है। तदाभास का अर्थ है रसाभास एवं भावाभास। आभासता का अर्थ है अनुचित विषय में प्रवृत्ति से होने वाला अनौचित्य। तत्प्रशम (पद) का अभिप्राय है—उपर्युक्त भेदों की निवृत्ति के कारण प्रशान्तोन्मुखी अवस्था। इन (भेदों) में से परमविश्रान्तिरूप होने के कारण रस की वह (प्रशान्तोन्मुखी) अवस्था सम्भव नहीं है अतः अन्तिम भेद में ही प्रशमन होता है। इन (रस, भाव, तदाभास तथा भावप्रशम) का

भावस्वरूपमाह—भावो विभावेत्यादि। विभावानुभावाभ्यामिति। व्यभिचारिव्यञ्जने व्यभिचार्यन्तराभावाद्(?) द्योतितो विभावानुभावाभ्यां व्यञ्जितो व्यभिचारी वाक्यार्थीभावदशायां भाव उच्यते। सोऽपि त्रयस्त्रिंशद्भेदो निर्वेदग्लान्यादिरूपतया। तथा कान्ताव्यतिरिक्ते देवतादिविषये व्यञ्जितो रत्यादिरपि भावः। तस्माद् व्यभिचारिस्थाय्यात्मकतया भावो द्विजातीयोऽवगन्तव्यः। यदाह—"रतिर्देवादिविषया व्यभिचारी तथाञ्जितः"। भाव इति।

आभासयोः स्वरूपमाह—तदाभासो रसेत्यादि। तच्छब्देन रसभावप्रत्यवमर्शः। आभासीभावस्त्वविषयप्रवृत्त्यनौचित्याभ्याम्। भावप्रशमस्वरूपमाह—तत्प्रशम उक्तेत्यादि। उक्तभावप्रकाराणां निवृत्तौ प्रयास्यदवस्था भावप्रशम उच्यते। ननु रसेऽपि प्रशमः किं नोच्यत इत्यत आह—तत्रापीत्यादि। रसस्य ह्यखण्डनिरन्तरायप्रतीतिचर्वणीयस्य परमविश्रान्तिरूपत्वान्मध्ये प्रयास्यदवस्था दुर्लक्ष्येति रसव्यतिरिक्तपरिशिष्टभेदविषयोऽयं प्रशमो द्रष्टव्यः। एषां च रस-

१. देवादि°—नि०।

२. °विषयाच्च रत्यादिभावः। शा०। °विषयाच्च रत्यादि।—ना०। °विषया च रतिः।—शा१। ३. °चित्यम्—नि० शा०।

४. अपि—अ० नास्ति।

निबन्धे[१] क्रमेण [२]रसवदादयोऽलंकाराः। रसो विद्यते यत्र निबन्धने व्यापारात्मनि तद्रसवत्। प्रियतरं प्रेयो निबन्धनमेव [३]द्रष्टव्यम्। एवमूर्जो बलं विद्यते यत्र, तदपि निबन्धनमेव। अनौचित्यप्रवृत्तत्वादत्र[४] बलयोगः। समाहितः[५] परिहारः। स [६]च प्रकृतत्वादुक्तभेदविषयः[७] प्रशमापरपर्यायः[८]। तत्र यस्मिन्दर्शने वाक्यार्थीभूता रसादयो रसवदाद्यलंकाराः, तत्राङ्गभूत-

निबन्धन होने पर क्रमशः रसवत् आदि अलंकार होते हैं। जिस °निबन्धन, वर्णन-व्यापार, में रस विद्यमान रहता है वह रसवत् कहलाता है। निबन्धन का ही प्रियतर होना प्रेयः समझा जाना चाहिए। इसी प्रकार ऊर्ज अर्थात् बल जिसमें विद्यमान हो वह निबन्धन ही (ऊर्जस्वी) कहलाएगा। समाहित का अर्थ परिहार है। वह प्रकरण के अनुसार उपर्युक्त (भाव) का ही भेद है, इसी का दूसरा पर्याय प्रशम है। (काव्यात्मा एवं अलंकार्य रस को अलंकार कहना किस प्रकार संगत है इस समस्या के सम्बन्ध में विभिन्न सिद्धान्त हैं, उनमें से) जिस (उद्भटादि के) सिद्धान्त के अनुसार वाक्यार्थ-भूत रसादि

भावादीनामुपनिबन्धे परिपाट्या रसवदादयोऽलङ्काराः। चत्वार्यपि लक्ष्यपदानि निर्वक्ति—रसो विद्यत इत्यादिना। यत्र हि व्यञ्जनोपस्कृतेऽभिधादिव्यापारात्मनि निबन्धे रसोऽस्ति तद्रसवत्। प्रियतरं निबन्धनमेव प्रेयो ज्ञेयम्। ऊर्जो बलम्। तद्योगि निबन्धनमेवोर्जस्वि। ननु निबन्धने बलं नाम किमिति? अत आह—अनौचित्येति। रसस्यानौचित्येन प्रवृत्तत्वाद् दौर्बल्यं, निबन्धने तु तदुपकृते बलयोगः। समाहितं परिहारः। तस्य प्रकृतत्वादुक्तस्य भावभेदस्य, यस्य प्रशम इत्यपि पर्यायः। ननु रसवदादीनां द्वितीयोदात्तस्य च का कक्ष्येत्यत आह—तत्र यस्मिन्नित्यादि। यत्र हि भामहादिदर्शने वाक्यार्थीभावात् प्रधानभूता एव रसादयो रसवदाद्यलङ्कारास्तत्राङ्गभूतरसादि-

१. °न्धक्र°—नि०।
२. °वदलङ्कारादयो°—शा१।
३. द्रष्टव्यं—अ० नास्ति।
४. °त्वाच्च तत्र—अ०, शा०(?)।
५. शमाहितः—शा०।
६. चाप्र°—नि०।
७. विषयप्र°—ना०।
८. प्रशमपर्यायः—अ०, शा०।
° यहाँ निबन्ध या निबन्धन शब्द का प्रयोग रचना के अर्थ में न होकर निबन्धन क्रिया अर्थात् अभिधा व्यापार द्वारा वर्णन के अर्थ में हुआ है।

रसादिविषये द्वितीय उदात्तालंकारः। यन्मते त्वङ्गभूते रसादिविषये रसवदाद्यलंकाराः अन्यस्य रसादिध्वनिना [1]व्याप्तत्वात्तत्रोदात्तालंकारस्य विषयो नावशिष्यते, तद्विषयस्य रसवदादिना व्याप्तत्वात्। तत्र रसवत उदाहरणम्—

किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः।

रसवदादि अलंकार (माने जाते) है वहाँ अंगभूत रसादि को उदात्तालंकार माना जाता है। पर जिस मत में (आनन्दवर्धन आदि के अनुसार) अंगभूत रसादि रसवदादि अलंकार हैं उसके अनुसार वाक्यार्थभूत रसादि के रसादिध्वनि में समाहित होने से उदात्तालंकार के लिए स्थान नहीं रह जाता है क्योंकि इस (उदात्तालंकार) का विषय रसवदादि (अलंकार) में समाहित है। इन (अलंकारों) में से रसवत् का उदाहरण (स्वप्न में देखा हुआ नायक स्पप्नदर्शन की बातें छिपाना चाहता है, यह समझकर रिपुस्त्री-नायिका की उक्ति)—

"मखौल करने से क्या लाभ? (मुझे मालूम है कि—) चिरकाल के बाद मिलने पर भी तुम पुनः मुझसे दूर हो जाओगे। निर्दय! (मिलने के साथ ही) विदेश चले जाने की तुम्हारी यह चाह कैसी है? तुम्हें (मुझसे) किसने

विषय उपपद्यते कल्पो द्वितीय उदात्तालङ्कारः। यस्मिंस्तु रसवदादिरलङ्कारोऽङ्गभूतरसादिविषय एव, अङ्गिनस्तु रसादेरलङ्कार्यभावापन्नस्य रसभावादिध्वनिरूपतया व्याप्तत्वात्। तत्र ध्वनिदर्शने द्वितीयस्याङ्गभूतमहापुरुषचरितलक्षणस्योदात्तालङ्कारस्य विषयो नावशिष्यते। कुत इत्यत आह— तद्विषयस्येति। इयमिह प्रक्रिया - यत्र रसादयो वाक्यार्थीभूतास्तत्र रसवदादयोऽलङ्कारा इत्यलङ्कारमात्ररसिकानां भामहादीनां दर्शने। यदा त्ववाक्यार्थीभावादङ्गभूतो रसादिस्तदाङ्गभूतमहापुरुषचरितलक्षणो द्वितीयोदात्त उपपद्यते नाम। ध्वनिदर्शने तु काव्यात्मनो रसादेः प्राधान्यदशायामलङ्कार्यत्वादलङ्कारभावानुपपत्तावङ्गभूता रसादयो रसवदाद्यलङ्काराः। तथा च सति रसभावादिनायकमहापुरुषचरिताविर्भावोऽपि रसभावाद्यङ्गभावानतिरेकी व्यङ्ग्यव्यञ्जकसम्बन्धात्। व्यञ्जकं हि महापुरुषचरितं, व्यङ्ग्यं रसभावादि। व्यङ्ग्यभावाविनाभूताङ्गभावो रसवदाद्यलङ्कारस्यैव विषयः व्यञ्जकमात्राविश्रान्तानामनवगाढधियां द्वितीयोदात्तभ्रम

1. °त्वात्तत्र द्वितीयोदा° —अ० शा०।

स्वप्नान्तेष्विति वो[1] वदन्प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥२५६॥

एतन्मतद्वयेऽप्युदाहरणम् । [2]वाक्यार्थीभूतोऽत्र करुणो रसः । अङ्गभूतस्तु विप्रलम्भशृङ्गारः । एवं रसान्तरेष्वप्युदाहार्यम्[3] । प्रेयोऽलंकारादौ विशेषमनपेक्ष्योदाह्रियते । [4]प्रेयोलंकारो यथा—

दूर कर दिया था ?" स्वप्न समाप्त होने पर इस प्रकार से प्रलाप करने वाला, प्रियतम के द्वारा गलवहियाँ डाले हुए, तुम्हारे शत्रुओं का स्त्रीगण अपने बाहुबलय को खाली पाकर जोर से रोने लग जाता है ॥२५६॥

दोनों ही मतों के अनुसार यह उदाहरण है । इसमें करुण रस वाक्यार्थ के रूप में है । और विप्रलम्भ शृंगार अंगभूत है । इसी प्रकार दूसरे रसों का भी उदाहरण दिया जा सकता है । प्रेयोऽलंकार आदि के उदाहरण (दोनों मतों के अंगागिभाव-रूप) भेद को दृष्टि में न रख कर दिए जाएगें । प्रेयोऽलंकार जैसे—

इति । किं हास्येनेति । स्वप्नदृष्टं नायकं स्वरूपसन्दर्शननिह्नवपरिहासप्रवृत्तं मन्यमानस्य रिपुस्त्रीजनस्योक्तिवर्णनम् । 'किं हास्येन चिरात् प्राप्तः सन् पुनर्मे दर्शनं न प्रयास्यसि निष्करुणता तवेयं प्राप्तिसमकालमेव प्रवासरुचिता इत्युदीरयन् तमदृष्ट्वा केनासि दूरीकृत' इति वदन् व्यासक्तकण्ठग्रहो बुद्ध्वा रिक्तबाहुवलयस्तारं रोदितीति । अत्राङ्गाङ्गिनौ द्वावपि रसौ । अङ्गी रसो रसवान् मतान्तरे । स्वमते त्वङ्गभूतो रसवान् । अत उदाहरणमेतन्मतद्वयार्हम् । तदेतदभिसन्धायाह—एतन्मतद्वयेऽपीति । तदेतद् विभज्य दर्शयितुमाह—अत्र वाक्यार्थीभूत इति । वाक्यार्थीभावात् करुणो रसवान्, मतान्तर इति शेषः । एवंविधे हि विषये वाक्यार्थीभावादङ्गिनं रसं रसवन्तमन्ये प्रतिपेदिरे । अङ्गभूतं तु द्वितीयोदात्तम् । ध्वनिदर्शनविदस्तु अङ्गिनोऽलङ्कार्यतामङ्गभूतस्य रसवदादिरूपतां द्वितीयोदात्तासम्भवं च सिद्धान्तितवन्तः । इयं च प्रक्रिया रसान्तरेष्वपि ज्ञेयेत्याह—एवं रसान्तरेष्विति । उदाहार्यम्—उदाहर्तुं शक्यमर्हं(शक्यं), प्राप्तकालता चोदाहरणस्य । अर्हे शक्ये प्राप्तकालतायां च कृत्यः । इत्थं रसवदलङ्कारे मतद्वयं कक्ष्याविभागेनोदाहृतम् । प्रेयोऽलङ्कारादौ तु विशेषांशस्तु ज्ञात इति साधारण्येनोदाजिहीर्षुराह—प्रेयोऽलङ्कारादाविति ।

१. ते—अ० । २. तत्र वा°—अ० । ३. °अपि –अ० ना०शा१ नास्ति ।
४. तत्र प्रेयो°—शा० । प्रेयोलङ्कारो यथा—अयमंशो अ० ना० नास्ति ।

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा[1]
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥२५७॥

अत्र नायिकायां हर्षाख्यो व्यभिचारिभावः। यथा [2]वा—

तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यतां
तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः श्रोत्रयोः[3]।
एभिस्तत्परिरम्भनिर्भरभरैरङ्गैः[4] कथं स्थीयतां
कष्टं तद्विरहेण संप्रति वयं कृच्छ्रामवस्थां गताः ॥२५८॥

गाढ़ आलिगन से जिसके स्तन दब गए हैं, जो (आनन्दातिरेक से) रोमांचित है, अत्यधिक स्नेह-रस से जिसके सुन्दर नितम्बों से वस्त्र खिसका जा रहा है, 'मानद! (मान खण्डन करने वाले प्रियतम!) नहीं, नहीं, अब और नहीं, बस अब मुझे छोड़ दो' इस प्रकार लड़खड़ा कर बोलने वाली वह (मेरी प्रियतमा) क्या सो गई है? कहीं सदा के लिए तो नहीं सो गई है? अथवा मेरे मन में छुप गई है? और कहीं (मेरे मन में) घुलमिल तो नहीं गई है ॥२५७॥

यहाँ नायिका का हर्ष नामक संचारी भाव (वर्णित) है। अथवा जैसे—

उस मुख का अमृतपान करने से दुर्ललित (लाड़-प्यार से बिगड़ी हुई मेरी दृष्टि कहाँ ठहरे? (प्रिये!) तुम्हारी बातें सुनने के लालची (मेरे) कानों को सुनने लायक बातें कहाँ मिलेंगी? और अपूर्व आलिंगन से आप्यायित ये अंग किस प्रकार थिर रह सकेंगें? ओह! उसके वियोग में अब मेरी हालत ही नाजुक हो गई है ॥२५८॥

**गाढालिङ्गनेति—मानद मानखण्डन, मा मेत्यर्धोक्त्या भावावसानहर्षः प्रत्याय्यते। लक्ष्ययोजनायाह—अत्र नायिकाया इति। इह हर्षाख्यो व्यभिचारिभावः सम्भोगशृङ्गारं प्रति गुणत्वात् प्रेयोऽलङ्कार इति शेषः। व्यभिचार्यन्तरायोदाहरति—तद्वक्त्रेति। अत्र चिन्तालक्षणो व्यभिचारी**

---

१. °प्रोद्भूत°—अ० ना० शा०।
२. वा—शा१ नास्ति।
३. कर्णयोः—नि०।
४. °रतरैर°—ना० शा१।

अत्र चिन्ताख्यो व्यभिचारिभाव। एष एव[१] च भावालंकारः। भावस्य चात्र स्थितिरूपतया वर्णनम्[२]। शान्त्युदयावस्थे तु वक्ष्येते। ऊर्जस्वी[३] यथा—

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना।
एतैराकुलितस्य विक्षततरैरङ्गैरनङ्गातुरैः[४]
संपद्येत कदा[५] तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥२५९॥

यहाँ चिन्तानामकसंचारी भाव (वर्णित) है। इसी (प्रेयः) को भावालंकार कहा जाता है। इस (अलंकार) में भाव की स्थितिरूपता का वर्णन होता है। भाव की शान्ति तथा उदय की अवस्थाओं का वर्णन आगे होगा। ऊर्जस्वी का उदाहरण—

उसका नाम सुनते ही मुझको लगता है कि जैसे दूर खींच ले जाने का मोहमन्त्र हो। उसके बिना (मेरा) मन थोड़ी देर के लिए भी स्थिर नहीं रह पाता है। पर (मुझे) यह ठीक से नहीं पता है कि काम से पीड़ित तथा क्षीणतर इन अंगों से आकुल मुझको उससे मिलने का सुख कब मिलेगा? ॥२५९॥

विप्रलम्भशृङ्गाराङ्गतया प्रेयान्। तदेतदाह—अत्र चिन्ताख्य इति। अलङ्कारान्तरभ्रमो मा भूदिति पर्यायमस्याह—एष एव चेति। प्रेयान् भावालङ्कारश्चेति पर्यायौ। भावशान्त्युदयादिभ्योऽस्य भेदमाह—भावस्य चात्रेति। स्थितिरूपतायां भावालङ्कारः। शान्त्युदयाद्यवस्था तु पृथगलङ्कारा इति भावः। कौ तौ शान्त्युदयावित्यत आह—शान्त्युदयेति। शान्त्यवस्था ऊर्जस्वी समनन्तरं समाहितत्वेन वक्ष्यते। उदयावस्था तु सन्धिशबलताभ्यां सह पृथगलङ्कारत्वेनेत्यर्थः। दूराकर्षणेति। कालकलामपि नावस्थितिं प्रकुरुते। अत्र विप्रलम्भशृङ्गारोऽनौचित्येन प्रवृत्तो देव्याः सीताया अविषयत्वात्। अतो रसं गुणीकृत्य निबन्धनमेव बलादित्यूर्जस्वी। औत्सुक्यव्यभिचारिणोऽप्यनौचित्यात् प्रेयोऽलङ्कारसङ्करः।

---

१. एव—ना० नास्ति। २. वर्तनम्—अ०।
३. °स्वि—ना०। ४. °कुलैः—अ०।
५. कथम्—अ०।

अत्र रावणस्याभिलाषको [1]विप्रलम्भश्रृङ्गार औत्सुक्यं च व्यभिचारिभावोऽनौचित्येन[2] प्रवृत्तौ। समाहितं यथा—

अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा निलीनः[3]
शान्तं च सार्धमधरस्फुरणं भ्रुकुट्या।
भावान्तरस्य तव चण्डि गतोऽपि रोषो
नोद्गाढवासनतया[4] प्रसरं ददाति ॥२६०॥

अत्र कोपस्य प्रशमः। एवमन्यत्राप्युदाहार्यम्[5]।

इस (उदाहरण) में रावण के अभिलाषरूप वियोग श्रृंगार की तथा औत्सुक्य (नामक) व्यभिचारी भाव की अनुचितरूप में प्रवृत्ति (वर्णित) है। समाहित का उदाहरण—

आँसुओं से कलुषित लालिमा (अब) आँखों में नहीं रह गई है। होठ का फड़फड़ाना, भौंह (की तनावट) के साथ शान्त हो गया है। यद्यपि तुम्हारा क्रोध समाप्त हो गया है तथापि वह (अपने) गम्भीर संस्कार के कारण (प्रेम के) दूसरे भाव भी नहीं बढ़ने देता है ।।२६०।।

यहाँ क्रोध का शान्त होना वर्णित है। इसी प्रकार दूसरे (व्यभिचारी भावों के प्रशमन) के भी उदाहरण दिए जा सकते हैं।

**तदेतदभिप्रेत्याह—अत्र रावणस्येत्यादि। शान्त्यवस्था वक्ष्यत इति प्रतिज्ञातमुदाजिहीर्षुराह—समाहितं यथेति। अक्ष्णोरिति। उत्क्षुभितेनाश्रुणा पर्याविलोऽरुणिमा चक्षुषोरपगत इत्यादिना रोषापगमः कटाक्षविलासतारकातारल्याद्यनाविर्भावाद् भावान्तरप्रसराप्रदानम्। अतः प्रशाम्यदवस्था कोपस्येत्याह—अत्र कोपस्येति। इत्थं व्यभिचार्यन्तरेऽपि प्रशमो ज्ञेय इत्याह—एवमन्यत्रापीति।**

---

१. °लाषको—नि०। °षश्रृङ्गार°—अ०। २. °चित्यप्रवृत्तौ—शा१।
३. विलीनः—अ०। ४. नो गाढ°—ना०।
५. एतदनन्तरम् अ० पुस्तके पद्यद्वयमधिकमस्ति—
"तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं,
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् सम्प्रमार्ष्टुं मया,
साश्लिष्टा रभसेन तत्सुखवशात् तन्व्यापि तद् विस्मृतम् ।।
एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो—

## [1]भावोदयसंधिशबलताश्च[2] पृथगलंकाराः ।।सू० ८४।।

**भावस्योक्तरूपस्योदय उद्गमावस्था, संधिः द्वयोर्विरुद्धयोः [3]स्पर्धिभावेनोपनिबन्धः, शबलता[4] बहूनां[5] पूर्वपूर्वोपमर्देनोपनिबन्धः[6]। एते च पृथग्रसवदादिभ्यो भिन्नत्वेनालंकाराः[7] ।**

भाव का उदय, सन्धि तथा शबलता पृथक् अलंकार हैं ।।सू० ८४।।

उपर्युक्त स्वरूप वाले भाव की उद्‌भावस्था को उदय कहते हैं। दो विरोधी (भावों) का स्पर्धापूर्वक सन्निवेश सन्धि है। अनेक भावों का पूर्व-पूर्व (भावों) का मर्दन करते हुए वर्णन शबलता है। ये अलंकार रसवदादि से पृथक् या भिन्न अलंकार हैं।

रसभावगुणीभावादनौचित्यप्रवृत्तितः ।
रसवत्प्रेयऊर्जस्विसमाहितचतुष्टयम् ।।
रसवत्त्वप्रियत्वाभ्यामूर्जः प्रशमयोगतः ।
निबन्धनं रसवदाद्याख्यां संप्रतिपद्यते ।।

भावोदयाद्यर्थं सूत्रम्—

"भावोदयसन्धिशबलताश्च पृथगलङ्काराः" ।।

उक्तसर्वालङ्कारान्यत्वात् सर्वालङ्कारशेषतयैतत्त्रितयोक्तिः । पृथग् रसवदादिविविक्तविषयतयेत्यर्थः । व्याचष्टे – भावस्याङ्कुररूपेत्यादि । अङ्कुररूपस्योद्गमदशा उदयः । विरुद्धयोस्तुल्यकक्ष्यतया विनिवेशनं सन्धिः । पूर्वपूर्वोपमर्दन बहूनामुत्तरोत्तरनिबन्धः शबलता । पृथक् प्रतिपादने हेतुमाह—

रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ।
अत्रेर्ष्याक्रोधात्मनो मानस्य प्रशमः । एवमन्यत्राप्युदाहार्यम् ।।"

---

१. भावोदयो भावसन्धिर्भावशबलता च पृथगलङ्कारः – नि० ।
२. चैते – अ० ना० ।
३. °स्पर्धित्वेनो° – नि० शा१ ।
४. च – नि० पुस्तकेऽधिकः ।
५. बहूनाम्—शा१ नास्ति ।
६. °मर्दनेनो° – अ० शा१ ।
७. भिन्ना अलङ्काराः । – शा१ । भिन्नालङ्काराः ।—नि० ।

एतत्प्रतिपादनं चोद्भटादिभिरेषां पृथगलंकारत्वेन निर्दिष्टत्वात्। अथ च संकरसंसृष्टिवैलक्षण्येनैते सर्वालंकाराः पृथक्केवलत्वेनालंकारा इति सर्वालंकारशेषत्वेनोक्तम्। संसृष्टिसंकरयोर्हि [1]संपृक्ततयालंकाराणां [2]स्थितिस्तद्वैलक्षण्यप्रतिपादनमेतत्। तत्र भावोदयो यथा—

एकस्मिञ्छयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपरिग्रहग्लपितया[3] चाटूनि कुर्वन्नपि।
[4]आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं[5]
माभूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥२६१॥

अत्रौत्सुक्यस्योदयः। भावसंधिर्यथा—

यह प्रतिपादन (अर्थात् भावोदयादि अलंकार भिन्न या पृथक् हैं इस बात का विशेष रूप से उल्लेख), उद्भटादि (आचार्यों) द्वारा इन अलंकारों का पृथक् रूप में निर्देश करने के नाते, किया गया है। पुनश्च संकर तथा संसृष्टि (अलंकारों) को छोड़कर ये सभी (पुनरुक्तवदाभास से लेकर भावसन्धि तक के) अलंकार पृथक् या केवल रूप में (अर्थात् दूसरे अलंकारों से मिश्रित न होकर शुद्ध रूप में) अलंकार हैं, यह सभी अलंकारों के लिए चरितार्थ है। किन्तु संसृष्टि तथा संकर में (विभिन्न) अलंकार मिश्रित होकर रहते हैं। उनसे भिन्नता के लिए यह (पृथक् होने का) उल्लेख किया गया है। भावोदय का उदाहरण—

एक साथ लेटने पर (नायक द्वारा) उपनायिका का नाम ले लेने से तुरन्त रूठी हुई मुग्धा ने खुशामद करते हुए प्रियतम को भी आवेश में आकर फटकार दिया। वह चुपचाप हो गया। पर 'कहीं यह सो न गया हो' यह सोचकर वह (मुग्धा नायिका) झट से गर्दन मोड़कर फिर से उसे देखने लगी।२६१॥

यहां औत्सुक्य का उदय (वर्णित) है। भावसन्धि का उदाहरण—

एतत्प्रतिपादनं चेति। केवलालङ्कारत्वात् संसृष्टिसंकरवैलक्षण्यम्। तयोः संवृत्तत्वं (? संपृक्तत्वं) स्वरूपमित्याह—संसृष्टिसंकरयोर्हीति। एकस्मिन् शयन इति। विपक्षनामग्रहणं ग्लपितत्वे, ग्लपितत्वमावेगे। आवेगोऽवधीरणम्, अवधीरणं प्रियतमतूष्णीम्भावे, तूष्णीम्भावस्तु पुनर्वीक्षणे हेतुः। अत्रौत्सुक्यभावस्योदयः। तस्य च गुणभाव इह विवक्षणीयः।

---

1. संपृक्ततया सिद्धानामलं°—अ०। 2. पृथक्तया—ना०।
3. पराङ्मुखग्ल° नि०। 4. संवे°—अ०।
5. तत्क्षणान्—नि० ना०।

वामेन नारीनयनाश्रुधारां कृपाणधारामथ दक्षिणेन ।
उत्पुंसयन्नेकतरः करेण कर्तव्यमूढः सुभटो बभूव ॥२६२॥

अत्र स्नेहाख्यरतिभावरणौत्सुक्ययोः संधिः । भावशबलता यथा—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे[1] श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं [2]पास्यति ॥२६३॥

प्रियतमा की आँखों से आँसुओं की धारा को बाएँ हाथ से पोंछता हुआ और दाहिने हाथ से तलवार की धार को पैनी करता हुआ वीर योद्धा समझ नहीं पा रहा था कि वह क्या करे ॥२६२॥

यहाँ स्नेह नामक (शृंगार रस के स्थायी) रतिभाव की तथा युद्ध के लिए औत्सुक्य (नामक संचारी भाव) की सन्धि है। भावशबलता का उदाहरण—

कहाँ (यह) अनुचित कार्य और कहाँ चन्द्रवंश ? (वितर्क), वह फिर से दिखाई दे जाए (औत्सुक्य), दोषों का शमन करने के लिए मैंने लिखा-पढ़ा है (मति), ओह ! क्रोध में भी उसका मुख कितना सुन्दर लगता था (स्मरण), (इस प्रकार के आचरण के लिए) निष्पाप विवेकी जन (मुझे) क्या कहेंगे ? (शंका), उससे स्वप्न में भी मिलना दुर्लभ हो गया है (दैन्य), रे मन ! धीरज रखो (धृति), न जाने (वह) कौन सौभाग्यशाली युवक है जो (उसके) अधरामृत का पान करेगा (चिंता। ॥२६३॥

**वामेन नारीति । वामेन करेण प्रियतमाया नयनाश्रुधारां दक्षिणेन कृपाणधारां प्रमार्जयन् कर्तव्यमूढोऽभूदित्यत्र रतिभावरणौत्सुक्ययोः सन्धिः । तदेतदाह—अत्र स्नेहाख्येति । स्नेहग्रहणाद् रतेः शृङ्गारस्थायितामाह—भावस्थायित्वे तु रतिः, (अन्यथा) प्रीतिमात्रम् ।**

**क्वाकार्यमिति । अत्र क्वाकार्यं क्व च शशलक्ष्मणः कुलमिति वितर्कः । भूयोऽपि दृश्येत सेत्यौत्सुक्यम् । श्रुतं दोषप्रशमायेति मतिः । अहो कोपेऽपि मुखं कान्तमिति स्मृतिः । किं वक्ष्यन्त्यपकल्मषा इति शङ्का । स्वप्नेऽपि दुर्लभेति दैन्यम् । चेतः स्वास्थ्यमुपेहीति धृतिः । को धन्योऽधरं पास्यतीति चिन्ता । अत्रोत्तरेषां पूर्वपूर्वोपमर्देनावस्थानात् शबलता । तदेतदाह—अत्र**

---

१. नः—नि० । २. धास्यति—अ० ना० ३।१ ।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां [1]शबलता। तदेते चित्तवृत्तिगतत्वेनालंकारा [2]दर्शिताः।

अधुनैषां सर्वेषामलंकाराणां संश्लेषसमुत्थापितमलंकारद्वयमुच्यते। तत्र संश्लेषः संयोगन्यायेन समवायन्यायेन च[3] द्विधा[4]। संयोगन्यायो यत्र भेदस्योत्कटतया स्थितिः। समवायन्यायो यत्र तस्यैवानुत्कटत्वेना[5]-वस्थानम्। तत्रोत्कटत्वेन स्थितौ तिलतण्डुलन्यायः। इतरत्र तु क्षीरनीर-सादृश्यम्। क्रमेण[6] तदुच्यते—

यहाँ वितर्क, औत्सुक्य, मति, स्मरण, शंका, दैन्य, धृति तथा चिन्ता की शबलता है।

इन अलंकारों के चित्तवृत्तिमूलक होने का प्रतिपादन किया जा चुका है (अथवा इसके साथ ही चितवृत्तिमूलक अलंकारों का निरूपण समाप्त होता है)।

अब इन सभी अलंकारों के मिश्रण से उत्थापित दो अलंकारों का निरूपण किया जा रहा है। मिश्रण दो तरह का होता है। संयोग की तरह या समवाय की तरह। संयोग की तरह (मिश्रण) वह है जहां भेद उत्कट रूप में वर्तमान हो। समवायन्याय वहाँ होता है जहाँ उस (भेद) की स्थिति उत्कट-रूप में नहीं होती है। उत्कट रूप में रहना तिल और चावल के मिलने की तरह होता है। और दूसरी स्थिति (अनुत्कटरूप में रहना) दूध और पानी के (मिलने के) समान होती है। क्रमशः इन (दो अलंकारों) का निरूपण किया जा रहा है।

वितर्केत्यादि। तानिमान् निगमयति— तदेत इत्यादि।

स्थितिप्रशमवत् भावस्योदयः सन्धिरेव च।
शाबल्यं तु गुणीभावे पृथक् पृथगलंक्रियाः॥

सङ्करसंसृष्टी प्रतुष्टूषुराह— अधुनैषामिति। संश्लेषः संबन्धः। तस्य द्वैविध्यमाह— तत्र संश्लेष इत्यादि। भेदकोटेरुत्कटतायां संयोगन्यायः, अनुत्कटत्वे तु समवायन्यायः। दृष्टान्तेन न्यायभेदमवस्थापयति—तिलतण्डुल-न्यायः क्षीरनीरसादृश्यमिति च। उभयमपि परिपाट्या सूत्रयितुमाह— क्रमेणेति।

---

1. भावानां शब°—ना०।
2. लक्षिताः—अ०।
3. वेति—अ०। चेति—ना०।
4. द्विविधः—नि० शा१।
5. °त्वेन वर्तनम्—अ० ना० शा१।
6. °णैत°—नि० शा१।

**एषां तिलतण्डुलन्यायेन [1]मिश्रत्वे संसृष्टिः ॥ ॥सू० ८५॥**

**उक्तालंकाराणां [2]यथासंभवं यदि क्वचिद्युगपद्वचनं[3] स्यात्, तदा ते किं [4]पृथक्त्व एव पर्यवसिताः, [5]उत तदलंकारान्तरमेव किंचिदिति विचार्यते—तत्र यथा बाह्यालंकाराणां सौवर्णमणिमयप्रभृतीनां पृथक्चारुत्व[6]-हेतुत्वेऽपि संघटनाकृतं चारुत्वान्तरं जायते, [7]तद्वत्प्रकृतालंकाराणामपि संयोजने चारुत्वान्तरमुपलभ्यते। तेनालंकारान्तरप्रादुर्भावो[8] न [9]पृथक्पर्यवसानमिति निर्णयः।**

इन (अलंकारों) के तिल और चावल की भाँति मिलने पर संसृष्टि होती है ॥सू० ८५॥

यदि कहीं उपर्युक्त (पुनरुक्तवदाभासादि) अलंकारों का एक साथ यथा-संभव सन्निवेश हो तो उन अलंकारों को पृथक् ही माना जाए या (अलंकारों के एकत्र सन्निवेश को) कोई दूसरा अलंकार माना जाए इस सम्बन्ध में विचार करते हैं। जिस प्रकार सोने, मणि आदि से निर्मित लौकिक आभूषणों में, जो पृथक् रूप में रह कर सौन्दर्य के हेतु तो होते ही हैं, संघटना के द्वारा नया सौन्दर्य पैदा हो जाता है। उसी प्रकार प्रस्तुत अलंकारों (काव्यालंकारों) में भी मिश्रण होने पर नये सौन्दर्य का अनुभव होता है। अतः यही निष्कर्ष है कि (अलंकारों का मिश्रण होने पर) एक नया अलंकार उत्पन्न होता है; (उन अलंकारों का) अवसान पृथक् रूप में नही होता है।

**"एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः"।**

**व्याचष्टे—उक्तालङ्काराणामित्यादि। य एतेऽनुप्रासादयो भावशबलतापर्यन्ताः पृथगुक्तास्तेषां सम्भवानुसारेण यदि कुत्रचिद्विषये सहभावस्तदैते किं पृथक् पृथगेवालङ्कारा उत सहभाववैचित्र्यमलङ्कारान्तरमेवेति चिन्ता। (तां)सिद्धान्तयितुमाह—तत्र यथेत्यादि। सौवर्णानां मणिमयानां वा पृथक् चारुत्वहेतुत्वेऽपि संश्लेषतो यथा चारुत्वान्तरं तथानुप्रासादीनामपीत्यलङ्कारान्तरत्वमेव।**

---

१. मिश्रत्वे शा० नास्ति। मिश्रत्वं नि० शा१। २. तथा°—शा१।
३. 'युगपत्' नि० नास्ति। युगपत् संघटना अ०। युगपत् घटनम्—ना०।
४. पृथक्त्वेन—नि० शा०।
५. उत—शा१ नास्ति।
६. चारुता°—अ० ना०।
७. तद्यत्कविकृताल°—ना०।
८. भावेन—ना०।
९. पृथक्त्वे—शा१।

अलंकारान्तरत्वे[१] च संयोगन्यायेन स्फुटावगमो भेदः, समवायन्यायेन वास्फुटत्वावगम इति द्वैतम्[२]। पूर्वत्र संसृष्टिः, उत्तरत्र तु[३] संकरः। अत एव तिलतण्डुलन्यायः, क्षीरनीरन्यायश्च तयोर्यथार्थता-[४]मवगमयतः। तत्र तिलतण्डुलन्यायेन भवन्ती संसृष्टिस्त्रिविधा[५]। शब्दालंकारगतत्वेन, अर्थालंकारगतत्वेन, [६]उभयालंकारगतत्वेन च। [७]सङ्करस्तु प्रभेदयुक्तो वक्ष्यते। तत्र शब्दालंकारसंसृष्टिर्यथा—

[८]कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।
[९]चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥२६४॥

इस नयी अलंकारता के दो रूप हैं—दो वस्तुओं में संयोग संबंध की भाँति (अलंकारों के) भेद का स्फुट हो जाना या जाति तथा व्यक्ति में समवाय सम्बन्ध की भाँति अस्फुट रहना। प्रथम स्थिति में संसृष्टि (अलंकार) होता है और दूसरी स्थिति में संकर (अलंकार) होता है। वस्तुतः तिल-चावल की तरह मिलने का दृष्टान्त तथा दूध और पानी के मिलने का दृष्टान्त इन दोनों (अलंकारों) के वास्तविक स्वरूप की पहिचान करा देते हैं। तिलतण्डुलन्याय से होने वाली संसृष्टि शब्दालंकार, अर्थालंकार तथा उभयालंकार में होने के कारण तीन प्रकार की है। इनमें से शब्दालंकार-संसृष्टि का उदाहरण—

कुसुम की सुगन्धि के लोभ से मंडराते हुए भौरों के आतंक से अत्यधिक सुन्दर लगने वाली, बलों (के मुख पर आ जाने) से चपल नयन वाली एक और सुन्दरी के (भौरों से घबड़ाकर) चलने पर मनोहर करधनी से कलकल (मधुर शब्द) होने लगा ॥२६४॥

संश्लेषेऽपि भेदांशस्फुटत्वास्फुटत्वाभ्यां विच्छित्तिद्वयमाह—अलङ्कारान्तरत्वे चेति। तत्र सङ्करसंसृष्टी व्यवस्थापयति—पूर्वत्रेत्यादि। यतो भेद उत्कटोऽनुत्कटश्च अतो दृष्टान्तौ समञ्जसावित्याह—अत एव चेत्यादि। उत्कटानुत्कटत्वे भेदस्य यथार्थता। संसृष्टिस्त्रिधेत्याह—तत्र तिलतण्डुलेत्यादि। सङ्करः सप्रभेदं जिज्ञासितोऽपि संसृष्टचनन्तरं वक्ष्यत इत्याह—सङ्करस्त्विति। कुसुमसौरभेति। अलकैर्व्याकुलैर्लोलदृशा। अत्र पूर्वार्धे भकारापेक्षया

१. °त्वेऽपि—नि०। २. द्वैधम्—अ० नि०। ३. तु—नि० शा१ नास्ति।
४. °मेवावगमयतः—अ० शा०। ५. त्रिधा—नि० शा०।
६. उभयगत°—ना०। ७. सङ्करस्तु…वक्ष्यते—नि० नास्ति।
८. वदनसौ°—नि०। ९. वनितया—अ०शा १।

अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः । अत्रैव "[1]लकलोलकलोल' [2]इति, तथा 'कलोलकलोल' इति सजातीययोः[3] संसृष्टिः । अर्थालंकार-संसृष्टिर्यथा—

देवि क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव सभृङ्गमब्जम् ।
एष त्वदाननरुचेव विलुण्ठ्यमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः ॥२६५॥

अत्र [4]सजातीययोरुपमयोः संसृष्टिः ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां [5]गता ॥२६६॥

यहाँ अनुप्रास तथा यमक दो विजातीय (अलंकारों) की संसृष्टि है । और इसी उदाहरण के 'लकलोलकलो' तथा 'कलोलकलोल' इन अंशों में सजातीय दो (यमकों) की संसृष्टि है । अर्थालंकार-संसृष्टि का उदाहरण

देवि ! रात बीती जा रही है । आँख की पुतली थिर नहीं है । नलिनी की भाँति भौरों वाले कमल को झटपट खोलो । देखो लगता है कि तुम्हारे मुख की कान्ति के समान यह कान्तिहीन चन्द्रमा लुढ़कता-पुढ़कता आकाश को छोड़े जा रहा है ॥२६५॥

यहाँ (नलिनी की भाँति तथा मुखकान्ति के समान इन पदों में) सजातीय दो उपमाओं की संसृष्टि है ।

अन्धकार अंगों को लोप-सा रहा है, आकाश मानो काजल बरसा रहा है, दुर्जन की सेवा की भाँति दृष्टि विफल हो गई ॥२६६॥

उत्तरार्धे च लकारापेक्षया वृत्त्यनुप्रासः । लकलोलकलो इत्यादौ यमकमिति विजातीययोः संसृष्टिः । तथा लकलोलकलो इति कलोलकलोल इति च सजातीययोर्यमकयोरपि । तदेतदाह — अत्रानुप्रासेत्यादि ।

देवि क्षपेति । अत्र नलिनीव रुचेवेत्युपमाद्वयं सजातीयं संसृष्टम् । तदेतदाह — अत्र सजातीययोरिति । लिम्पतीवेत्यत्र तु विजातीयसंसृटिः स्फुटा ।

---

१. अलकलोलकलोल—नि० । अलकलोल —शा१ ।

२. इति तथा—अ० नास्ति । ३. सजातीययोर्यमकयोः—अ० नि० ।

४. विजातीययोरुपमोत्प्रेक्षयोः ससृष्टिः—नि० अ० ना० ।

५. विफलतां—पाठान्तरम् ।

[1]अत्रोत्प्रेक्षयोः सजातीययोः संसृष्टिः । उभयसंसृष्टिर्यथा—

आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे[2] विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥२६७॥

अत्रोपमानुप्रासयोः संसृष्टिः । पादाम्बुजमित्यत्र[3] ह्युपमाया[4] मञ्जीर-शिञ्जितयोगो व्यवस्थापकं प्रमाणम् । स हि रूपके प्रतिकूलः [5]पारिशेष्यादुपमां [6]प्रसाधयति । [7]तदेषा संसृष्टिस्त्रिधा निर्णीता ।

यहाँ दो सजातीय उत्प्रेक्षाओं की संसृष्टि है ।[8] उभय-संसृष्टि (शब्दालंकार तथा अर्थालंकार की संसृष्टि) का उदाहरण—

जिस पर आनन्द से उल्लसित इन्द्र माला का अर्पण करता है, जो महिषासुर के सिर पर बलात् रखा जाता है तथा जो नूपुर की मधुर झंकार से युक्त है पार्वती का वह चरणकमल हमें विजय प्रदान करे ॥२६७॥

यहाँ उपमा तथा अनुप्रास की संसृष्टि है । नूपुर की झंकार का चरणकमल के साथ सम्बन्ध उपमा का यहाँ निर्णायक आधार है, क्योंकि यह (सम्बन्ध) रूपक के प्रतिकूल है अतः परिशेषरूप में उपमा का साधक बन जाता है । इस प्रकार संसृष्टि के तीन भेदों का निर्णय हो चुका ।

आनन्दमन्थरेति । मन्थरो मन्दक्रियः । हठेन बलेन । अत्रोपमावृत्त्यनुप्रासयोरुभयालङ्कारयोः संसृष्टिः । नन्वत्रोपमाव्यवस्था कुत इत्यत आह—पादाम्बुजमितीति । पादाम्बुजमिवेत्युपमाया मञ्जीरशिञ्जितयोगो व्यवस्थापकः । पाद एवाम्बुजमिति रूपकपक्षे स प्रतिकूलः । अम्बुजे तदयोगात् । अतः शिञ्जितयोगोऽयं पारिशेष्यादुपमां प्रसाधयति । निगमयति— तदेवमिति ।

---

1. अत्रोपमोत्प्रेक्षयोर्विजातीययोः संसृष्टिः— नि० । अत्रोत्प्रेक्षयोः सजातीययोरुत्प्रेक्षोपमयोर्विजातीययोश्च संसृष्टिः – अ० ।
2. वो—अ० । 3. अत्र—शा० नास्ति । 4. °यां—अ० शा० ।
5. परिशेषात्—शा० १ । 6. प्रतिपादयति—ना० । प्रसादयति—शा१ ।
7. तदेवमेषा—ना० । तदेवं सं°—नि० । तदेषा त्रिविधा संसृष्टिर्नि°—अ० ।
8. संजीविनी के अनुसार इस श्लोक में दो विजातीय (उपमा तथा उत्प्रेक्षा) की संसृष्टि है ।

अधुना क्षीरनीरन्यायेन[1] संकर[2] उच्यते—

**क्षीरनीरन्यायेन [3]तु संकरः ॥सू० ८६॥**

मिश्रत्व[4] इत्येव। [5]अनुत्कटभेदत्वमिश्रत्वं संकरः। तच्च मिश्रत्वमङ्गाङ्गिभावेन, संशयेन, एकवाचकानुप्रवेशेन च त्रिधा भवत्संकर[6] त्रिभेदमुत्थापयति। क्रमेण[7] यथा—

अङ्गुलीभिरिव केशसंचयं [8]संनियम्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥२६८॥

अब क्षीरनीरन्याय से होने वाले संकर का निरूपण किया जा रहा है।

क्षीर-नीर न्याय से तो संकर होता है ॥सू० ८६॥

'संमिश्रण होने पर ही' (इस पद की प्रथम सूत्र से अनुवृत्ति है)। वह मिश्रण जिसमें भेद स्फुट नहीं होता है संकर (अलंकार) कहलाता है। यह मिश्रण अंगांगिभाव, संदेह तथा एकवाचकानुप्रवेश इन तीन रूपों का होने से तीन प्रकार के संकर को जन्म देता है। क्रमशः उदाहरण—

चन्द्रमा अपनी किरणों से अन्धकार को पकड़कर मुकुलित कमलनयन वाले रजनीमुख को ऐसे चूम रहा है जैसे वह अंगुलियों से केशपाश को पकड़कर कमल के समान मुकुलित नयन वाले (रजनी-) मुख को चूम रहा हो ॥२६८॥

तिलतण्डुलनीत्या संश्लेषः संसृष्टिरिष्यते।
सा शब्दार्थोभयगतैरलङ्कारैस्त्रिधा मता॥

सङ्करमुपक्षिपति—अधुनेत्यादि।

"क्षीरनीरन्यायेन तु सङ्करः"।

अधिकारमनुस्मारयति—मिश्रकमेवेति। चर्चितं सङ्करस्वरूपमनुस्मारयति—अनुत्कटेति। तत्र त्रैविध्यायाह—तच्चेति। अङ्गाङ्गिभावात्, संशयादेकवाचकानुप्रवेशाच्च त्रिधा सङ्करोत्थानम्।

अङ्गुलीभिरिवेति। अत्राङ्गुलीभिरिवेत्युपमा। सरोजं लोचनमिवास्या

---

1. न्यायाश्रयेण तु—अ०। 2. संकरलक्षणमुच्यते—अ०।
3. तु—शा१ नास्ति। 4. मिश्रत्वमित्यव—शा१।
5. तत्रोत्कटभेदमनुत्कटभेदं च मिश्रत्वम्। तत्रोत्कटभेदा संसृष्टिरुक्ता। अनुत्कटभेदः संकरः। —अ०। अनुत्कटभेदमुत्कटभेदं च मिश्रत्वं संकरः—ना०। °उत्कटभेद° च—शा१। अनुत्कटभेदत्वमुत्कटभेदत्वं च संकरः।—नि०। 6. त्रिभेदं संकरम्—ना० पाठक्रमः।
7. °णोदाहरणम्—अ०। 8. सन्निगृह्य—अ० शा१।

अत्राङ्गुलीभिरिवेत्युपमा[1]। सैव सरोजलोचनमित्यस्या उपमायाः प्रसाधिका। रजनीमुखमिति श्लेषमूलातिशयोक्तिः। प्रारम्भवदनाख्ययोर्मुख्ययोरभेदाध्यवसायात्[2]। अत एव[3] तयोरङ्गाङ्गिभावः। [4]एवं च वाक्योक्तसमासोक्तिः[5]। उपमाश्लेषानुगृहीता चातिशयोक्तिरुत्प्रेक्षाया 'चुम्बतीव' इति प्रकाशिताया अनुग्राहिका। तद्बलेन तस्याः समुत्थानात्। सा[6] च समुत्थापिता समुत्थापकानां चमत्कारितानिबन्धनमित्यस्त्यङ्गाङ्गिभावः। यथा वा—

यहाँ 'जैसे अंगुलियों से' इस (अंश) में उपमा है। यही 'कमलनयन' में उपमा की साधक है। रजनी में श्लेषमूलक अतिशयोक्ति है क्योंकि (मुख शब्द से निकलने वाले) आरम्भ तथा वदन नामक दो मुख्य अर्थों का अभेदाध्यवसाय है। और इस प्रकार इन दो (उपमा तथा श्लिष्ट अतिशयोक्ति का परस्पर सम्बन्ध अंग तथा अंगी का है। तथा इसी प्रकार ('जैसे अंगुली से' इस) वाक्य में तथा (कमल-नयन) समास में आई हुई उपमाएँ तथा श्लेष से उपस्कृत अतिशयोक्ति, 'मानो चूम रहा है' इस (पद) से प्रकाशित उत्प्रेक्षा की साधक हैं क्योंकि इसका उदय उन्हीं (उपमा तथा अतिशयोक्ति अलंकारों) के सहारे होता है। इस (उत्प्रेक्षा) का उदय अनुग्राहक (अलंकारों) में सौन्दर्य का आधान करता है। इसप्रकार (इन अलंकारों में परस्पर) अंग तथा अंगी का सम्बन्ध है। अथवा जैसे (अंगांगिभाव-संकर का दूसरा उदाहरण)—

इत्युपमां साधयति। रूपकापोहनं साधने प्रकर्षः। मुखशब्देन प्रारम्भवदनयोरभिधानाच्छ्लेषः। मुखयोरभेदाध्यवसायाच्छ्लेषमूलातिशयोक्तिः। अतोऽनयोरङ्गाङ्गिभावः। एवं च सति अङ्गुलीभिरिवेति या वाक्येनोक्ता या च सरोजलोचनमिति समासेन ताभ्यामुपमाभ्यां श्लेषेण चानुग्रहीता मुखमित्यतिशयोक्तिश्चुम्बतीवेत्युत्प्रेक्षाया अनुग्राहिका। तेषां बलेन समुत्थानात् उत्थिता चोत्थापकानां चमत्कारकत्वहेतुरित्यङ्गाङ्गिता।

---

१. इव ना० नास्ति।

२. °रभेदातिशयात्—नि०। °मुखयोर°—अ०। °मुखयोर°—अ०।

३. °एवानयोर° ना०। एव च—अ०।

४. एवं च······मित्यस्त्यङ्गाङ्गिभावः—इयानंशो शा१ पुस्तके न दृश्यते।

५. °समासोक्ते उपमे श्लेषा°—अ०, ना० (?)। ६. सापि—अ०।

त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान्।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्ध्यै वडवाग्निमध्यम् ॥२६९॥

अत्र प्रथमार्धे विरोधोत्पत्तिहेतुः श्लेषः। दर्शनान्तरे तु विरोधश्लेषौ द्वावलंकारौ। तदनुगृहीता[1] द्वितीयेऽर्धे मन्येपदप्रकाशितोत्प्रेक्षा[2]। अतश्चाङ्गाङ्गिभावः[3]। तथा ह्यत्र यत्कारणमुत्प्रेक्ष्यते, तत्र विरोधश्लेषानुप्रवेशः। यच्चात्र कार्यमुत्प्रेक्षानिमित्तं, तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथा स्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ।

(तीनों) लोकों में श्रुतिरूप प्रसिद्ध होने पर भी सूर्य वारुणी (पश्चिम दिशा तथा मदिरा) के पास चला गया था, मुझे लगता है कि यही कारण है कि अस्ताचल से पतित (गिरकर तथा अपवित्र) होकर वह (अपनी शुद्धि करने के लिए) बडवाग्नि में प्रवेश कर रहा था ॥२६९॥

इस (श्लोक) के प्रथमार्ध में श्लेष विरोध का उत्पादक हेतु है। किन्तु दूसरे सिद्धान्त के अनुसार (यहाँ) विरोध तथा श्लेष दो (स्वतन्त्र) अलंकार हैं। (श्लोक के) द्वितीयार्ध में इस (श्लेषमूलक विरोधालकार) से उपस्कृत 'मैं समझता हूँ' इस (पद) से प्रकाशित उत्प्रेक्षा है और इस प्रकार (इन श्लेष तथा उत्प्रेक्षा अलंकारों में परस्पर) अंगांगिभाव है क्योंकि यहाँ (वारुणीगमन-रूप) जिस कारण की (मैं समझता हूँ पतित हो गया है, इसरूप में हेतुरूप) उत्प्रेक्षा की गई हैं उनमें विरोध तथा श्लेष की स्थिति है और यहाँ (पतन तथा अग्निप्रवेशरूप) जो कार्य (अपने को शुद्ध करने के लिए प्रवेश कर रहा था' इस रूप में फलरूप) उत्प्रेक्षा का निमित्त है उस (कार्य) का वस्तुदृष्टि से भिन्न स्वरूप वाले पतन तथा अग्निप्रवेश के साथ अभेदाध्यवसाय है। इस

अतोऽङ्गाङ्गिभावे मिथोऽप्युपकारप्रथनायोदाहरणान्तरम्—त्रयीमयोऽपीति। वारुणी पश्चिमा दिक् सुरा च। पतनमवतरणमुपहतिश्च। व्याचष्टे—अत्र प्रथम इत्यादिना। अत्र वारुणीति श्लेषस्त्रयीमयोऽप्यगमदिति विरोधप्रतिभोत्थापकस्तद्बाधकश्च। श्लेषस्य निरवकाशत्वानङ्गीकारिणां मते द्वावपि। तदनुग्राहाच्च मन्ये पतित इति शुद्धिं प्रति हेतूत्प्रेक्षा। शुद्ध्यै विवेशेति फलोत्प्रेक्षा। अतोऽङ्गाङ्गिभावः। एतद्विशिष्योपपादयति—तथा हीत्यादि।

---

१. च—अ० पुस्तकेऽधिकः। २. °शिता द्वितय्युत्प्रेक्षा—अ०।
३. अतश्चात्राङ्गा°—अ०। अतश्चाङ्गिभावः—शा१।

तेनात्राङ्गाङ्गिभावसंकरः[१]। न च विरोधोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभावः[१] संकरः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहायं[२] संकरः, ताभ्यां विना तयोरनुत्थानात्। अतश्च निरवकाशत्वाद्बाधकत्वम्। न च मन्तव्यं विरोधमन्तरेणापि श्लेषो दृश्यत इति श्लेषस्य सावकाशत्वमिति। यतो न ब्रूमो विरोधमन्तरेणापि[३] श्लेषो न भवतीति। किं तर्ह्यलंकारान्तरविविक्तो[४] विषयः श्लेषस्य नास्तीति निरवकाशत्वा-

प्रकार यहाँ (हेतूत्प्रेक्षा तथा फलोत्प्रेक्षा के साथ श्लेष का परस्पर) अंगांगिभाव संकर है। (इस उदाहरण में) श्लेष के विरोध (अलंकार) का उत्पादक होने से उसका विरोध के साथ अंगांगिभाव संकर अथवा उत्प्रेक्षा के निमित्तरूप में विद्यमान अतिशयोक्ति के साथ संकर नहीं मानना चाहिए क्योंकि उन (विरोध और अतिशयोक्ति) के विना इस (श्लेष तथा उत्प्रेक्षा) का उदय ही नहीं हो सकता है। अतः निरवकाश होने से (श्लेष और उत्प्रेक्षालंकार) बाधक ही होंगे। इससे यह नहीं समझ लेना चाहिए कि विरोध (अलंकार) के न रहने पर भी श्लेष होता है, अतः श्लेष सावकाश है। क्योंकि यह तो हम भी नहीं कहते हैं कि विरोध (अलंकार) न हो तो श्लेष होता ही नहीं है। अपितु (हमारा तो यही कहना है कि) श्लेष के लिए दूसरे अलंकारों से विविक्त

वारुणीगमनं पातादिकारणमुत्प्रेक्षितं तत्र विरोधश्लेषावनुप्रविष्टौ। यच्च कारणोत्प्रेक्षानिमित्तं पातादिकार्यं तत्र पाताग्निप्रवेशावुपहतिहेतुकपाताग्निप्रवेशाभ्यामभेदेनाध्यवसितौ, तेन श्लेषेण सह हेतुफलोत्प्रेक्षयोरङ्गाङ्गिता। ननु विरोधश्लेषयोरतिशयोक्त्युत्प्रेक्षयोश्च कुतो नाङ्गाङ्गिभाव इत्यत आह—न च विरोधेत्यादि। यद्यपि श्लेषो विरोधप्रतिभोत्पत्तिहेतुर्यद्यपि चातिशयोक्तिरुत्प्रेक्षानिमित्तं तथापि नानयोः श्लेषोत्प्रेक्षाभ्यां सहाङ्गाङ्गिभावस्तत्र हेतुः—ताभ्यां विनेति। विरोधातिशयोक्तीभ्यां विना श्लेषोत्प्रेक्षयोरनुत्थानात्। अतो निरवकाशयोः श्लेषोत्प्रेक्षयोर्बाधकत्वमेव। नन्वभेदाध्यवसायमन्तरेणानुत्थानादुत्प्रेक्षाया मा भूदतिशयोक्तिविविक्तो विषयः श्लेषस्य तु विविक्तोऽस्त्येवेत्यत आह—न च मन्तव्यमित्यादि।

---

१. °ङ्गिसंकरः—शा० ना० शा१। भावः संकरः—नि०।

२. सहाङ्गाङ्गिसंकरः अ०।

३. अपि—ना० शा१ नास्ति।

४. न श्लेषस्य विषयोऽस्तीति—अ० शा० ना० क्रमः।

**त्तेषां बाधः। तन्मध्ये च विरोधोऽनुप्रविष्ट इति सोऽपि तेन बाध्यत इति न कश्चिद्दोषः।**

(असंकीर्ण) विषय नहीं हैं (अर्थात् श्लेष जब भी होता है तब दूसरे अलंकार भी हैं) अतः निरवकाश होने के कारण (श्लेष द्वारा) दूसरे अलंकारों का बाध हो जाता है। और चूँकि विरोध भी उन्हीं (दूसरे अलंकारों) में से एक है अतः यह भी उस (श्लेष) के द्वारा बाधित होता है। इस प्रकार (विरोध के बाधित होने में) कोई दोष नहीं है।[1]

**अलङ्कारान्तरविविक्तश्लेषविषयो नास्तीति श्लेषविवेचने वितत्योक्तम्।**

---

१. उपर्युक्त श्लोक (त्रयीमयोऽपि) में रुय्यक के अनुसार हेतु एवं फल की उत्प्रेक्षा है तथा उसका श्लेष के साथ अंगागिभाव संकर है। 'मन्ये पतितः' अंश हेतूत्प्रेक्षा का है, और 'शुद्धचै विवेश' फलोत्प्रेक्षा का अंश है। हेतु-फलोत्प्रेक्षा में वाक्यार्थ का चमत्कार होने के कारण यह अलंकार अंगी है। और 'वारुणीं प्रत्यगमत्' से उपस्थित श्लेष अंग है। उदाहरण के प्रथमार्थ में श्लेष के साथ ही ('त्रयीमयोऽपि ··वारुणीं प्रत्यगमत्' में) विरोधालंकार भी है पर यहां श्लेष और विरोध का अंगांगिभाव संकर नहीं माना जाना चाहिए क्योंकि श्लेष तो जहाँ कहीं भी होगा वहाँ कोई दूसरा अलंकार अवश्य होगा। अलंकारान्तर से असम्पृक्त श्लेष का मिलना सम्भव नहीं है अतः श्लेष को दूसरे अलंकार का बाधक मानना चाहिए। उदाहरण के द्वितीयार्ध में वास्तविक 'पतन' और 'अग्नि-प्रवेश' एवं सूर्य के 'पतन' और 'अग्निप्रवेश' को अभिन्न माना गया है। यह अभेदाध्यव्यवसाय अतिशयोक्ति अलंकार कहलाता है। इस अभेदा-ध्यवसाय के मूल में भी श्लेष है। पतन तथा अग्निप्रवेश दोनों के ही दो अर्थ हैं। उदाहरण के लिए 'पतन' का एक अर्थ है--पापी पुरुष का मर्यादा के मार्ग से च्युत होना। तथा सूर्य की दृष्टि से दूसरा अर्थ है--'ढल जाना' या 'अस्तोन्मुख हो जाना'। जिस प्रकार प्रथमार्ध में श्लेष के विरोधालंकार का बाधक होने से श्लेष और विरोध का अंगांगिभाव संकर नहीं माना गया था उसी प्रकार यहाँ भी श्लेष के बाधक होने के कारण अतिशयोक्ति और उत्प्रेक्षा का अंगांगिभाव संकर न मानकर (अतिशयोक्ति के बाधक) श्लेषालंकार और उत्प्रेक्षा में ही अंग और अंगी का सम्बन्ध माना जाएगा।

[1]एवमर्थालंकारसंकर उदाहृतः[2]। शब्दालंकारसंकरस्तु कैश्चिदुदाहृतो यथा—

राजति तटीयमभिहतदानवरासातिपातिसारावनदा।
गजता च यूथमविरतदानवरा[3] सातिपाति सारा वनदा॥ २७०॥

अत्र यमकानुलोमप्रतिलोमयोः शब्दालंकारयोः परस्परापेक्षत्वेनाङ्गाङ्गिसंकर[4] इति। एतत्तु न सम्यगावर्जकम्। शब्दालंकारयोश्च[5] शब्द-

इस प्रकार अर्थालंकारों के संकर का उदाहरण समाप्त हुआ। शब्दालंकारों के संकर का किसी आचार्य (मम्मट) ने उदाहरण दिया है जैसे कि—

यही वह पर्वत की प्रान्तभूमि (तटी) है जिसमें दानवों का रास – क्रीड़ा अथवा सिंहनाद—समाप्त हो गया है (अभिहतदानवरासा), जिसमें कलकल करता हुआ नद वेग से बहा करता है, जिसमें निरन्तर प्रवाहित होने वाले मदजल से शोभित (अविरतदानवरा), बलशालिनी (सारा) तथा बनों का विनाश करने वाली (वनदा) हाथियों की टोली (गजता) अपने झुण्ड की पूरी रक्षा करती रहती है (यूथमतिपाति) ॥२७०॥

इसमें ('दानवरासातिपातिसारावनदा' इस पाद की चतुर्थ पाद में आवृत्ति होने से) यमक तथा (इन्हीं पादों को आदि या अन्त से उलटे-सीधे दोनों तरह पढ़ने पर वही पाठ बन जाता है इसलिए) अनुलोम-प्रतिलोम (रूप चित्रालंकार) इन दो शब्दालंकारों का परस्पर एक दूसरे की अपेक्षा होने से अंगांगिसंकर है। पर यह (उदाहरण तथा मत) उचित नहीं लगता है। दो

**अतः श्लेषेणास्य बाध इति तन्मध्यानुप्रविष्टो विरोधोऽपि बाध्य एव। अर्थालङ्कारसङ्करं निगमयति – एवमर्थेति। शब्दालङ्कारेति। कैश्चिदित्यवधीरणा।**

**राजतीति। दानवानां रास आक्रोशः। तदतिपातिनः सारावनादा यत्र सेयमद्रेस्तटी राजति। गजता गजसमूहः। सा च यूथमतिपाति—अतितरां रक्षति। कीदृशी? अविरतेन दानेन वरा उत्कृष्टा। सा प्रसिद्धा। सारा बलवती वनदा वनस्य खण्डयित्री। योजनायाह– अत्र यमकेत्यादि। पादावृत्तिलक्षणं यमकम्। आदितोऽन्ततश्च पाठे सन्दर्भैक्यादनुलोमप्रतिलोमता**

---

१. अत एवा°—अ०। एव चार्था°—शा१।
२. उक्तः – नि० शा१।
३. °रति°—शा१।
४. °ङ्गिभावसंकर – अ०।
५. °योश्चात्र—शा१। च अ० नि० नास्ति।

वदुपकार्योपकारकत्वाभावेनाङ्गाङ्गिभावाभावात्[१]। शब्दालंकारसंसृष्टि-स्त्वत्र श्रेयसी। यथोदाहृतं पूर्वम्[२]। यद्वा अत्र शब्दालंकारद्वयमेकवाचकानुप्रविष्टमिति तृतीयः संकरो ज्ञेयः। एवमेकः प्रकारश्चर्चितः[३]। द्वितीयः प्रकारस्तु संदेहसंकराख्यः। [४]यत्रान्यतरपरिग्रहे साधकं प्रमाणं नास्ति बाधकं वा प्रमाणं[५] न विद्यते तत्र न्यायप्राप्तः संशय इति [६]संदेहसंकरस्तत्र विज्ञेयः। यथा—

शब्दालंकारों में (दो) शब्दों की भांति (आपस में) उपस्कारक और उपस्कार्य का सम्बन्ध न होने से अंग और अंगी का सम्बन्ध नहीं हो सकता है। इस (उदाहरण) में शब्दालंकारों की संसृष्टि मानना अधिक उचित है। जैसा कि उदाहरण (श्लोक २६३ में) पहिले दिया जा चुका है। अथवा यहाँ दो शब्दालंकारों के एक वाचक (पद) में प्रविष्ट होने के कारण एकवाचकानुप्रवेश (नामक) तीसरा संकर (संकर का तीसरा भेद) माना जा सकता है।

इस प्रकार प्रथम भेद (अंगांगिभाव संकर) की चर्चा समाप्त हुई। सन्देह-संकर नाम से (संकरालंकार का) दूसरा भेद है। जहाँ दो में से एक को स्वीकार करने का साधक प्रमाण न हो और न बाधक प्रमाण उपस्थित हो वहाँ न्यायतः संशय होता है। इसलिये ऐसे स्थलों में सन्देह-संकर समझना चाहिए। जैसे—

च। तदेतदुभयं सापेक्षमिति शब्दालङ्कारसङ्करः। तदेतद् दूषयति - एतत्त्विति। अनावर्जकत्वे हेतुमाह—शब्दालङ्कारयोरिति। यथा हि शब्दयोर्मिथो नोपकारस्तथा शब्दालङ्कारयोरपि। कस्तर्हि ईदृशि विषये प्रकार इत्यत आह—शब्दालङ्कारेति। मिथोऽनुपकारान्नैरपेक्ष्यम्। अतः संसृष्टिः श्रेयसी। सङ्करत्वे चैकवाचकानुप्रवेशः स्यादित्याह—यद्वेति। अतः शब्दालङ्कारपरिहारेणाङ्गाङ्गिभाव इति निर्णयति—एवमेष इति। सन्देहसङ्करं विवेचयति—द्वितीय इति। सन्देहं दर्शयति—यत्रोभयोरित्यादि।

१. °ङ्गिभावात् शा१। २. प्राक्—अ० शा१।
३. दर्शितः—नि०।
४. यत्रोभयोरेकतरस्य—अ०।
५. प्रमाणं न विद्यते—अ० नास्ति।
६. °संकराख्यालंकारः—अ०।

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र[1] सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ।।२७१।।

अत्र विभावनाविशेषोक्त्योः संदेहसंकरः[2] । तथा ह्युत्कण्ठाकरणाभावे उत्कण्ठाया उत्पत्तौ विभावना । स च कारणाभावो 'यः कौमारहरः' इत्यादिना कारणविरुद्धमुखेन प्रतिपादितः । तथा च[3] 'यः कौमारहरः' इत्याद्यनुत्कण्ठाकारणसद्भावेऽपि अनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः । सा चानुत्पत्तिः 'समुत्कण्ठते' इति विरोधोत्पत्तिमुखेनोक्ता । अत एव

जिसने (मेरे) कुमारीपन का हरण किया था वही पति हैं, वे ही चैत की रातें हैं, खिली हुई चमेली की तरह सुगंधित और संपुष्ट कदम्ब की उन्मादक हवाएँ भी वे ही हैं, और मैं भी वहीं हूँ पर फिर भी (न जाने क्यों आज) उसी रेवा नदी के तट पर वेतसी-तरु के नीचे काम की लीलाओं के लिए मन उत्कण्ठित हो उठा है ।।२७१।।

यहाँ विभावना तथा विशेषोक्ति का संदेह-संकर है । उदाहरण के लिए (यहाँ) उत्कण्ठा का कारण न रहने पर भी उत्कण्ठा की उत्पत्ति हुई है अतः विभावना है । कारण के इस अभाव का प्रतिपादन, 'जिसने कुमारीपन का हरण किया था' इत्यादि के द्वारा कारण का विरोध करते हुए हुआ है । साथ ही 'जिसने कुमारीपन का हरण किया था' इत्यादि से (व्यक्त) अनुत्कण्ठा का कारण रहने पर भी अनुत्कण्ठा की उत्पत्ति न होने से विशेषोक्ति भी है । और (अनुत्कण्ठा की) इस अनुत्पत्ति का अभिधान, 'उत्कण्ठित हो रहा है' इस (पद) से विरोधी कार्य की उत्पत्ति द्वारा किया गया है । अतएव दूसरी दृष्टि से

यः कौमारहरेति । प्रथमसम्भोगेन कौमारं हृतवान् । मालतीवत् सुरभयो मालतीसुरभयः । कदम्ब इह वसन्तभूः । व्याख्यातं प्राक् । योजयति—अत्र विभावनेत्यादि । अन्यत्र काव्यप्रकाशादौ । इत्थमुपमा-

१. चौरसुरत°—शा० ना० । चौर्यसुरत°—शा १ ।
२. सन्देह°—अ० नास्ति ।
३. च—अ० ना० नास्ति ।
४. इत्यादावनु°—अ० ।

[१]द्वयोरप्यस्फुटत्वमन्यत्रोक्तम्[२]। न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति संदेहसंकरोऽयम्। यथा वा—

यद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलेनोल्लिखितश्चकास्ति[३]।
उद्दामरामादृढमानमुद्राविद्रावणो मन्त्र इव स्मरस्य ॥२७२॥

अत्र वक्त्रं चन्द्र इवेति किमुपमा, उत वक्त्रमेव चन्द्र इति[४] रूपकमिति संशयः। [५]उभयथापि समासस्य भावात्। 'उपमितं व्याघ्रादिभिः' इति [६]ह्युपमासमासः, व्याघ्रादीनामाकृतिगणत्वात्। मयूरव्यंसकादित्वाद्[७]

दोनों अलंकारों का स्फुट न होना अन्यत्र (काव्यप्रकाश में) बताया गया है। इन दोनों (अलंकारों) में से किसी के लिए भी साधक या बाधक प्रमाण उपस्थित नहीं हैं। अतः (इस उदाहरण में) यह (उपर्युक्त) सन्देहसंकर (अलंकार) है। अथवा जैसे—

जिसके मुखचन्द्र पर डाढ़ी-मूछ के बहाने नवीन यौवन द्वारा लिखा हुआ, उद्दाम युवती की प्रगाढ़ मान-मुद्रा को नष्ट करने वाला, कामदेव का मन्त्र-सा शोभित हो रहा है ॥२७२॥

यहाँ 'चन्द्र के समान मुख' इस रूप में उपमा है? अथवा 'मुख ही चन्द्र है' इस रूप में रूपक है यह संशय होता है क्योंकि समास दोनों ही तरह से (वक्त्रं चन्द्र इव, तथा वक्त्रमेव चन्द्रः) होता है। 'उपमितं व्याघ्रादिभिः (सामान्याप्रयोगे २।१।५६ इस सूत्र) से (मुखचन्द्र में) उपमासमास होता है क्योंकि व्याघ्र आदि (शब्द) आकृतिगण है[८]। (मुखमेव चन्द्रः में) मयूर-

रूपकयोः सन्देहं दर्शयितुमाह—यथा चेति। यद्वक्त्रचन्द्र इति। श्मश्रुच्छलान्नवयौवनोल्लिखितो मन्त्रश्चकास्तीव। योजयति—अत्र वक्त्रेत्यादि। संशयस्य हेतुमाह—समासस्योभयथापीति। व्याघ्रादीनामाकृतिगणत्वाद् विशिष्टगुणानां चन्द्रादीनामप्युपसंग्रह इति। मुखं चन्द्र इवेत्युपमासमासः।

---

१. अपि—अ० नास्ति। २. अन्यत्र ज्ञेयम्—ना०। अत्रो (?) क्तम्—शा१।
३. °छलादु°—नि०। ४. इति किं—शा०।
५. समासस्योभयथापि भावात्—अ० शा० ना० क्रमः।
६. हि—नि० नास्ति। ७. °त्वात्तु°—शा०।
८ जब उपमित (उपमेय) और उपमान साथ-साथ आएँ, उपमा का शब्द उत्तर (द्वितीय) हो, साधारण धर्म का निर्देश न हो तो पुरुषव्याघ्र की तरह समास उपमा-समास या उपमित समास कहलाता है। जहाँ

रूपकसमासः, मयूरव्यंसकादीनामाकृतिगणत्वात्। नात्र[1] क्वचित्साधक-बाधकप्रमाणसद्भाव इति संदेहसंकरः।

यत्र तु कस्यचित्परिग्रहे साधकं बाधकं वा प्रमाणं विद्यते, तत्र नियतपरिग्रहः[2]। तत्रानुकूल्यं साधकत्वम्,[3] प्रातिकूल्यं[4] बाधकत्वम्[5]। तत्र साधकत्वं यथा—

प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने।
नमोऽनन्तप्रकाशाय शंकरक्षीरसिन्धवे ॥२७३॥

व्यंसकादि होने से रूपकसमास होता है क्योंकि मयूरव्यंसक आदि (शब्द) आकृतिगण हैं। ऐसे स्थलों में (अत्र) किसी के पक्ष में (क्वचित्) साधक या बाधक प्रमाण न होने से सन्देहसंकर होता है। किन्तु जहाँ किसी एक को स्वीकार करने का साधक या बाधक प्रमाण वर्तमान हो वहाँ (प्रमाण से) निश्चित का (ही) ग्रहण होता है। साधक होने का अर्थ है अनुकूलता और बाधक होना प्रतिकूलता है। इनमें से साधक का उदाहरण है—

बिन्दु एवं नाद का प्रसार करने वाले, शुद्ध अमृतस्वरूप, अनन्त प्रकाश, शंकर-क्षीरसागर को नमस्कार है ॥२७३॥

यहाँ अमृत (शब्द) 'शंकर ही क्षीरसिन्धु है' इस रूपक का साधक है

अपिहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य इति नीत्या मयूरव्यंसकादीनामाकृतिगणत्वान्मुखमेव चन्द्र इति रूपकसमासश्च। साधकबाधकप्रमाणविरहादनयोः सन्देहः। साधकबाधकान्यतरसद्भावे तु नियतपरिग्रह इत्याह—यत्र त्विति। साधकबाधकस्वरूपं विवेचयति—तत्रानुकूलत्वमिति।

प्रसरद्बिन्द्विति। बिन्दुः शुद्धाध्वोपादानं महामायानादोऽनाहतस्तौ प्रसरतो यस्मात् सिसृक्षोस्तस्मै। शुद्धं मम तन्निकृष्टं चेत्यन्यम्(?)। तन्मयात्मने। अनन्तो दिक्कालाद्यनवच्छिन्नः प्रकाशो यश्च तस्मै। अन्यदा तु बिन्दवः शीकराः। नादो लहरीघोषः। अमृतं सुधा। अनन्तः शेषो मथनादौ शेषीभूतस्तेन प्रकाशः प्रथितः। इह शङ्कर एव क्षीरसिन्धुरिति रूपके साधकं दर्शयति—अत्र

मयूरव्यंसक की भाँति मुखचन्द्र का समास होता है वहाँ ऐसे रूपक-समास को मयूरव्यंसकादि समास कहा जाता है।

१. न चात्र—नि०।　२. नियमपरि° - ना०।
३. साधकम्—नि०।　४. प्रातिकूल्यं बाधकत्वम्—शा१ न दृश्यते।
५. बाधकम्—नि०।

अत्र शंकर एव क्षीरसिन्धुरिति रूपकस्यामृतमयत्वं[१] साधकम्। तस्य[२] शंकरापेक्षया क्षीरसिन्धावनुकूलत्वात्। उपमायास्तु न बाधकम्। [३]संकरेऽप्युपचरितस्य तस्य संभवात्। यथा वा—

एतान्यवन्तीश्वरपारिजातजातानि [४]तारापतिपाण्डुराणि।
संप्रत्यहं[५] पश्यत दिग्वधूनां यशःप्रसूनान्यवतंसयामि ॥२७४॥

अत्रावतंसनं प्रसूनेष्वनुगुणमिति रूपकपरिग्रहे[६] साधकं प्रमाणम्। [७]बाधकत्वं यथा—

शरदीव प्रसर्पन्त्यां तस्य कोदण्डटंकृतौ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥२७५॥

क्योंकि शंकर की अपेक्षा वह क्षीर-सिन्धु से (अधिक) अनुकूल है, किन्तु उपमा के प्रतिकूल भी नहीं है क्योंकि उपचरित अर्थ में (अमृत शब्द) शंकर के लिए भी प्रयुक्त हो सकता है। अथवा जैसे[१]—

उज्जयिनीश्वररूप हरसिंगार से उत्पन्न, चन्द्रमा द्वारा पाण्डुर इन कीर्ति-कुसुमों को अभी मैं दिशा-वधुओं का आभूषण बनाने जा रहा हूँ ॥२७४॥

यहाँ आभूषण का विधान कुसुमों के अनुकूल है। अतः (कीर्तिकुसुम पद में) रूपक मानने का साधक प्रमाण है। बाधक (प्रमाण) का उदाहरण—

उसके धनुष की टंकार फैलने पर निद्रा से उठकर जँभाई लेते हुए 'हरि' (सिंह, विष्णु) से युक्त विन्ध्य-समुद्र शरत्काल का सा हो गया ॥२७५॥

शङ्कर एवेत्यादि। अमृतशब्दो हि सुधायां प्रचुरप्रसिद्धिकः। क्षीरसिन्धावनुकूलतर इति रूपक एव समासोऽयम्। अमृतमयत्वं च नोपमां प्रति बाधकमित्याह—उपमायास्त्विति। न बाधकमिति किन्तु तटस्थमिति भावः। तत्र हेतुः—शङ्करेऽप्युपचरितस्येति। शङ्करत्वेनोपचरितस्य हि सिन्धो रूपकसमाससिद्धिः। अत उपमोत्थापिते रूपके विश्रान्तिरिति यावत्। उदाहरणान्तरेणापि न्यायमिमं द्रढयितुमाह—यथा वेति। एतान्यवन्तीति। अवन्तीश्वररूपात् पारिजाताज्जातानि यशोरूपाणि प्रसूनानि दिग्रूपाणां वधूनामवतंसयामि पश्यत। अत्राप्युपमाबाधवैमुख्येन रूपकसाधकं दर्शयति—

१. रूपकस्य साधकं शुद्धामृतमयत्वम्—अ०। रूपकस्योभयत्वम्—शा०, शा १ (?)।
२. शङ्करापेक्षया तस्य—ना०।
३. शङ्करेऽपि तस्योपचरितस्य सम्भवात्—नि० पाठक्रमः।
४. ताराधिपपाण्डराणि—अ०।
५. °त्यहो—ना०।
६. °ग्रहेण—नि०।
७. बाधकम्—अ० नि० शा१।

अत्र विन्ध्य उदधिरिवेत्युपमापरिग्रहे विनिद्रजृम्भितहरिरिति साधारणं विशेषणं बाधकं प्रमाणम्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२-१-५६) इति वचनादुपमासमासे प्रतिकूलत्वात्। अतश्च [1]पारिशेष्याद्रूपकपरिग्रहः। न [2]तु शरदीवेत्युपमात्रोपमासाधकत्वेन विज्ञेया। न [3]ह्यौपम्येन कदाचिदर्थसिद्धिः। न ह्येकेनालंकारेणोपक्रान्तेन

यहाँ समुद्र के समान विन्ध्य इस उपमा को स्वीकार करने में 'निद्रा से उठकर जंभाई लेते हुए हरि से युक्त' यह साधारण विशेषण बाधक प्रमाण है क्योंकि वह 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे'—साधारण धर्म का निर्देश न होने पर व्याघ्र आदि के साथ उपमित होना—इस वचन के अनुसार उपमा-समास का बाधक होता है। अतः परिशेषरूप में (उपमा हो नहीं सकती है रूपक ही बचता है अतः अगत्या) रूपक ही मानना पड़ेगा। 'शरत्काल का सा' यह उपमा (विन्ध्य-समुद्र में) उपमा की साधक नहीं मानी जा सकती है। उपमा से ही अर्थ की सिद्धि सर्वदा नहीं होती है। न यह

[1] पहले उदाहरण में अमृतत्व साधक है पर साथ ही बाधक भी नहीं है अतः दूसरा उदाहरण दिया जा रहा है।

राजाज्ञा है कि जिस किसी एक अलंकार से प्रारम्भ हो उसी में अन्त भी हो।

अत्रावतंसनमिति। बाधकार्थमुदाहरति—शरदीवेति। हरिः सिंहो विष्णुश्च। उपमाबाधकं दर्शयितुमाह—अत्र विन्ध्य इत्यादि। विनिद्रजृम्भितहरित्वं हि साधारणमुपमासमासं बाधते। "उपमितं व्याघ्रादिभिः सामान्याप्रयोग' इति वचनात्। ननु रूपकसिद्धिः साधकाभावे कथमित्यत आह—अतश्च पारिशेष्यादिति। ननु शरदीवेति समभिव्याहृतेयमुपमा कथं नोपमासाधिकेत्यत आह ननु (?नतु) शरदीवेति। न्यायतो वाक्यार्थीभूतं रूपकमाभासत एकदेशविवर्तिन्युपमा नहि बाधितुमीष्टे। यावता स्वयमप्याभासीभवतीति भावः। [ अत्रोपहासायाह—*न हि चाषेणेति। चाषाणां समूहश्चाषमिति स्थितौ पञ्चाशच्छब्दे शषयोरभेदाश्रयेणाव्युत्पन्नप्रतीता येयं चाषश्रुतिर्न खलु तन्निबन्धना पञ्चाशद्रूपसमूहसिद्धिः। ] नन्वितरथालङ्कारप्रक्रमभेदः

---

[1] परिशेषात्—शा१। [2] हि—अ०।

[3] न हि चाशेषेण पश्चात् सिद्धिः, ना०। न हि चान ??? मत् (?) सिद्धिः शा१। 'न हि चाषेण पन्चाशतरूपसमूहसिद्धिः' संजीविनीपाठः प्रतिभाति।

[4] °ह्यौपम्याल°—अ० नि०।

* एतत्प्रतीकपरः पाठस्तु मूले नास्तीत्येष भागः कोष्ठके निवेशितः।

**निर्वाहः कर्तव्य इति राजाज्ञैषा। नापि धर्मसूत्रकारवचनम्। नाप्येष न्यायः। उत्तरोत्तरसाम्यप्रकर्षविवक्षणे प्रक्रान्तोपमापरित्यागेन रूपक[1]-निर्वाहस्योचित्तत्वात्[2]। विपर्ययस्तु दुष्ट एव। यथा—'येनेन्दुर्दहनो[3] विषं मलयजो हारः[4] कुठारायते' [5]इति। तस्मात्प्रकृते सामान्यप्रयोगे उपमा-परिग्रहे बाधक इति [6]मयूरव्यंसकादेराकृतिगणत्वाद्रूपकसमासाश्रयेण[7]**

और न किसी धर्मसूत्रकार का ही वचन है। और न यह न्याय (उचित) ही है। जहाँ उत्तरोत्तर साम्य का प्रकर्ष बताना अभीप्सित हो वहाँ प्रारम्भ की हुई उपमा को छोड़कर रूपक का निर्वाह उचित होता है। हाँ व्यतिक्रम अवश्य दोषपूर्ण होता है जैसे—"जिससे चन्द्रमा अग्नि, चन्दन विष और हार कुठार के समान बन जाता है"।[8] इस (उदाहरण) में (क्रम का विपर्यय, रूपक से प्रारम्भकर उपमा में अन्त, दोषपूर्ण है)। अस्तु, प्रकृत (उदाहरण 'शरदीव' आदि) में साधारण (विशेषण) का प्रयोग होना उपमा को स्वीकार करने में बाधक है अतः मयूरव्यंसक आदि (शब्दों) के आकृतिगण का होने से रूपक-

**स्यादित्यत आह—न ह्येकेनेति। प्रक्रान्तेनैकेनैव निर्वहणीयमिति नैषा राजाज्ञा यल्लङ्घनेन दृष्टबाधः स्यात्। नाप्येतन्मन्वादिधर्मसूत्रकारवचनम्। यल्लङ्घनेनादृष्टबाधः स्यात्। ननु दृष्टादृष्टयोर्द्वयोरपि बाधः स्याद्यतो न्यायोऽयमित्यत आह—नाप्येष इति। प्रक्रान्तेन निर्वहणीयमिति न सार्वत्रिको न्यायः किन्तु विशेषाविवक्षायामेव। इह तूत्तरोत्तरं प्रकर्षविवक्षेत्युपमापेक्षया रूपके साम्यप्रकर्षः। अतोऽवयवगतोपमापरित्यागेन वाक्यार्थीभूतरूपकपरिग्रह एवोचितः। विपर्ययस्तु साम्यनिकर्षाद् दुष्ट एव। तदेतद् प्रत्युदाहरणेन द्रढयति—येनेन्दुरिति। अत्रेन्दुमलयजयो-र्दहनविषयत्वरूपणात् साम्यप्रकर्षः प्रक्रान्तो हारः कुठारायत इति तूपमया निष्कर्षं नीतः। चर्चां निगमयति—तस्मात् प्रकृत इति। सामान्यप्रयोग उपमा-बाधक इति न्यायोपपन्नो रूपकप्रक्रम एव निर्वहणीय इति यावत्। न्यायोऽ-**

---

१. रूपके—शा१।
२. °निर्वाहेणोचितत्वात्—ना०।
३. दहनम्—नि० शा १।
४. मलयजम्—नि० ना०
५. इति—शा१ नास्ति।
६. मयूरव्यंसकेनाकृ°—शा १।
७. °समाश्रयेण—नि०।
८. यह प्रत्युदाहरण इस विचार को स्पष्ट करने के लिए दिया गया है कि साम्य का प्रकर्ष अभीप्सित होने पर उपमा से प्रारम्भ और रूपक में

रूपकमेव बोद्धव्यम् । एवं 'भाष्याब्धिः क्वातिगम्भीरः' इत्यादौ द्रष्टव्यम् । साधकबाधकाभावे[1] तु संदेहसंकरः । यथोदाहृतम्[2] ।

तृतीयस्तु प्रकार एकवाचकानुप्रवेशलक्षणः । यत्रैकस्मिन्वाचकेऽनेकालंकारानुप्रवेशः, न च[3] संदेहः[4] । यथा—

मुरारिनिर्गता नूनं नरकप्रतिपन्थिनी[5] ।
[6]तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥२७६॥

समास के आधार पर रूपक ही मानना चाहिए । इसी प्रकार "कहाँ अत्यन्त गम्भीर भाष्य-समुद्र" इत्यादि (उदाहरणों) में (रूपक) समझ लेना चाहिए । पर जहाँ साधक या बाधक प्रमाण न हो वहां सन्देहसंकर ही होगा जिसका उदाहरण दिया जा चुका है ।

(संकरालंकार के) तीसरे भेद का स्वरूप एक वाचकानुप्रवेश का है । जहाँ एक वाचक (शब्द) में अनेक अलंकार अनुप्रविष्ट हों और सन्देह न हो (वही एकवाचकानुप्रवेश कहलाता है) । जैसे—

(मुर नामक असुर का विनाश करने वाले) विष्णु से निकली हुई, नरक (नरकासुर तथा नरक) को नष्ट करने वाली, गंगा की भाँति चक्रधारा तुम्हारे सिर पर भी गिरेगी ॥२७६॥

यमन्यत्रापि ज्ञेय इत्याह—भाष्याब्धिरिति । गाम्भीर्यसाधारण्यादुपमाबाधे रूपकमेव द्रष्टव्यम् । साधकबाधकाभावे तु सन्देह इत्युक्तमनुस्मारयति—साधकबाधकेति । इत्थमङ्गाङ्गिभावसन्देहरूपं प्रकारद्वयं विवेच्य तृतीयं प्रकारं विवेचयति—तृतीयस्त्विति । तं विशदयति—यत्रैकस्मिन्निति ।

मुरारिनिर्गतेति । नरकोऽसुरो निरयश्च । गङ्गेवेति सद्गतिप्राप्ति-

अन्त सर्वथा उचित क्रम है, ऐसा न करना दोष है जैसे कि उपर्युक्त उदाहरण में चन्द्रमा तथा चन्दन का क्रमशः अग्नि और विष के साथ रूपण है पर अन्त में 'हार कुठार के समान बन जाता है' यहाँ उपमा का प्रयोग है; यह अनुचित है क्योंकि यह साम्य का प्रकर्ष न होकर निकर्ष है ।

१. °बाधकप्रमाणाभावे—ना० । २. °हृतः—शा१ ।
३. च—शा१ नास्ति । ४. सन्देहो नाप्यङ्गाङ्गिभावः—अ० ।
५. प्रतिबन्धिनी—अ० । प्रतिपत्ति(?)नी—शा० ।
६. तथापि—शा१ ।

अत्र मुरारिनिर्गतेति साधारणविशेषणहेतुका उपमा, नरकप्रतिपन्थिनीति श्लिष्टविशेषणसमुत्थापितोपमाप्रतिभोत्पत्तिहेतुः[१] श्लेषश्चैकस्मि-[२]न्नेव शब्देऽनुप्रविष्टौ[३], तस्योभयोपकारित्वात्। अत्र च यथार्थश्लेषेण सहोपमायाः संकरस्तथा शब्दश्लेषेणापि सह[४] दृश्यते। यथा—

[५]सत्पुष्करद्योतितरङ्गशोभिन्यमन्दमारब्धमृदङ्गवाद्ये।
उद्यानवापीपयसीव यस्मामेणीदृशो नाट्यगृहे रमन्ते ॥२७७॥

यहाँ 'विष्णु से निकली हुई' इस (गंगा तथा चक्रधारा के) साधारण विशेषण के कारण होने वाली उपमा तथा नरकप्रतिपन्थिनी (नरकासुर तथा नरक को नष्ट करने वाली) इस श्लिष्ट विशेषण से उत्थापित श्लेष (अलंकार), जो उपमा की प्रतीति का भी उत्पादक हेतु है, एक ही शब्द में अनुप्रविष्ट हैं। यह शब्द दोनों ही (अलंकारों) का उपकार कर रहा है। यहाँ जिस प्रकार अर्थश्लेष के साथ उपमा का संकर है उसी प्रकार शब्दश्लेष के साथ भी दिखाई देता है। जैसे—

जहाँ सुन्दर मृदंग से शोभित, नाटच से अलंकृत एवं सुन्दर कमलों से शोभायमान लहरियों से सुशोभित, मृदंग की अमन्द ध्वनि से एवं मृदंग की भाँति जलास्फालन की ध्वनि से पूर्ण उद्यान-वापी के जल की भाँति नाट्यगृह में स्त्रियाँ रमण करती हैं ॥२७७॥

यहाँ जल के समान नाट्यगृह में रमण करती है इतने से ही समुचित

हेतुता। योजयति—अत्र मुरारीति। गङ्गेवेत्युपमा मुरारिनिर्गतेत्यर्थभेदाभावात् साधारणेन विशेषणेन समुत्थापिता। नरकेति श्लिष्टविशेषणोत्थोऽर्थश्लेषश्चोपमाप्रतिपत्तिहेतुरेकत्रैव नरकशब्देऽनुप्रविष्टौ श्लिष्टशब्देनोभयोपकारात्। शब्दश्लेषेणाप्युपमासङ्करार्थमाह—अत्र च यथेत्यादि।

सत्पुष्करेति। पुष्करं वाद्यभाण्डमुखं, पद्मं च। द्योतिनस्तरङ्गाः, द्योतितो रङ्गश्च। रज्यन्तेऽस्मिन् सामाजिकमनांसीति रङ्गो नाटचारम्भक्रिया। मृदङ्गसदृशं जलास्फालनवाद्यं मृदङ्गवाद्यं च। योजयति—अत्र पयसीवेत्यादि।

---

१. °समुत्थोपमा प्रतिभो°—अ० शा१। °समुत्थश्चोपमा°—नि०।
२. °न्निव—शा० ना०।
३. शब्दे—शा१ नास्ति।
४. सह—ना० नास्ति।
५. सत्पूरुष°—नि०।

**अत्र "[1]पयसीव नाड्यगृहे रमन्ते' इत्येतावतैव समुचितोपमा निष्पन्ना 'सत्पुष्करद्योतितरङ्ग' इति शब्दश्लेषेण सहैकस्मिन्नेव[2] शब्दे सङ्कीर्णा। शब्दालंकारयोः पुनरेकवाचकानुप्रवेशेन संकरः पूर्वमुदाहृतो 'राजति तटीयम्' इत्यादिना। एकवाचकानुप्रवेशेनैव चात्र संकीर्णत्वम्। अत एव [3]व्यवस्थितमन्यानुभाषितमप्रयोजकम्। तुल्यजातीययोरप्यलंकार-[5]**

उपमा (रमणरूप साधारण धर्म के आधार पर स्वतन्त्र रूप में) सिद्ध हो जाती है। इस उपमा का 'सत्पुष्करद्योतितरंग' – इस (सभंग) शब्दश्लेष के साथ एक ही शब्द में संकर है। और दो शब्दालंकारों के एक वाचक में अनुप्रवेश द्वारा होने वाले संकर का उदाहरण पहले ही 'राजति तटीयम्' इत्यादि (श्लोक २७०) में दिया जा चुका है। इस (उदाहरण) में एकवाचकानुप्रवेश के द्वारा ही (न कि अंगांगिभाव एवं सन्देह का) संकर हुआ है। अतएव यह निश्चित हो गया कि दूसरे आचार्य (मम्मट) का कथन (—कि विजातीय शब्दालंकार का ही एकवाचकानुप्रवेश संकर होता है) अर्थहीन है क्योंकि सजातीय दो अलंकारों (शब्दालंकार अथवा अर्थालंकार) का भी, एक वाचक में अनुप्रवेश सम्भव है।[6] भट्टोद्भट ने शब्द तथा अर्थ में रहने वाले अलंकारों के जिस

**रमन्त इति साधारणो धर्मः। अतः सामग्रीयोगात् संपन्ना द्योतितरङ्गशोभिनीत्येकस्मिन्नेव शब्दे सभङ्गपदत्वात् शब्दश्लेषेण सङ्कीर्णा। शब्दालङ्कारयोरेकवाचकानुप्रवेशमुदाहृतचरमनुस्मारयति - शब्दालङ्कारयोः पुनरित्यादि। विजातीययोरेवैकवाचकानुप्रवेशव्यवस्थेति यदाद्यैरुक्तं तदप्रयोजकमित्याह - एकवाचकेत्यादि। अत्र राजति तटीयमित्यादौ एवकारेणाङ्गाङ्गिभावसन्देहसङ्करावपोहति। शब्दालङ्कारत्वं तुल्यजातीयता। उद्भटप्रकाशितस्तु प्रकारान्तरगोचरः**

---

1. वापीपय°—ना०।
2. °न्निव—शा० ना०।
3. संकीर्ण—शा१ नास्ति।
4. पर्यवस्थितमन्या°—अ०। व्यवस्थितत्वम्—नि०।
5. °रेकवाच्यवाच°—शा१।
6. मम्मट के अनुसार एकवाचकानुप्रवेश संकर केवल शब्दालंकारों अथवा केवल अर्थालंकारों का ही होता है किन्तु रुय्यक के अनुसार विजातीय अलंकारों अर्थात् शब्दालंकार का अर्थालंकार तथा अर्थालंकार का शब्दालंकार के साथ भी संकर हो सकता है। राजति तटीयम् (श्लोक २७०) उदाहरण दो सजातीय शब्दालंकारों के एकवाचकानुप्रवेश संकर का ही है।

योरेकवाचकानुप्रवेशसंभवात्[1]। [2]शब्दार्थवर्त्यलंकारसंकरस्तु भट्टोद्भट-प्रकाशितः संसृष्टावन्तर्भावित इति त्रिप्रकार एव संकर इहोक्तः[3]। इदानी-मुपसंहारसूत्रम्—

**एवमेते शब्दार्थोभयालंकाराः संक्षेपतः[4] सूत्रिताः ।।सू० ८७।।**

एवमिति पूर्वोक्तप्रकारपरामर्शः। 'एते' इति प्रक्रान्तस्वरूपनिर्देशः। सूत्रिता इति[5] अलंकारसूत्रैः सूचिताः संक्षेपतः प्रतिपादिताः[6]।

संकर का निरूपण किया है उसका अन्तर्भाव संसृष्टि में होता है।[7] इस प्रकार संकर तीन प्रकार का ही होता है, उसी का यहाँ प्रतिपादन हुआ है।

अब (विषयवस्तु का) उपसंहार करने वाला सूत्र (प्रस्तुत) है।

इस प्रकार इन शब्दालंकार, अर्थालंकार तथा उभयालंकारों का संक्षेप में सूत्रण कर दिया गया है ।।सू० ८७।।

'इस प्रकार' यह (पद) पूर्वोक्त भेदों का परामर्श करता है। 'इन' (एते) शब्द से प्रस्तुत (अलंकारों) के स्वरूप का निर्देश हुआ है। 'सूत्रण कर दिया

शब्दालङ्कारसङ्करः संसृष्टावन्तर्भावित इति तस्य सङ्करत्वमङ्गाङ्गिभाव एवोक्तमित्याह—**शब्दालङ्कारेत्यादि**।

अङ्गाङ्गिभावात् सन्देहात् प्रवेशादेकवाचके।
त्रिधा तु सङ्करः शब्दालङ्कृत्योरेकवाचके।

प्रकरणमुपसञ्जिहीर्षुराह—**इदानीमिति**। तत्र सूत्रम्—

"एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः।"

व्याचष्टे—**एवमितीति**। तत्र पुनरुक्तवदाभासोऽर्थस्य पौनरुक्त्ये, छेक-वृत्त्यनुप्रासौ व्यञ्जनमात्रस्य, यमकः स्वरव्यञ्जनसमुदायस्य, लाटानुप्रासः शब्दा-र्थयोरिति पौनरुक्त्ये पंचकम्। स्थानविशेषश्लिष्टवर्णपौनरुक्त्ये चित्रम्।

---

१. °शे सं°—ना० शा०। २. °वृत्त्यलङ्कारस्तु भट्टोद्भटेन प्रकाशितः—अ० शा०।
३. इह दर्शितः—शा१। इह प्रदर्शितः—नि०।
४. संक्षेपेण—ना०। विमर्शिन्यनुसारमपि अयमेव पाठः।
५. इति—नि० नास्ति। ६. प्रकाशिताः—नि०।
७. उद्भट के अनुसार शब्द तथा अर्थ पर आश्रित अलंकार जहाँ एक स्थान पर वाक्य में वर्तमान हो वहाँ संकर होता है। देखिए—काव्यालंकार संग्रह, ५।२२। किन्तु रुय्यक के अनुसार शब्दालंकार तथा अर्थालंकार का मिश्रण स्फुट होने के नाते ऐसे स्थलों में संसृष्टि अलंकार होगा।

**तत्र शब्दालंकारा यमकादयः। अर्थालंकारा उपमादयः। उभयालंकारा लाटानुप्रासादयः। [1]संसृष्टिसंकरप्रकारयोरपि कयोश्चित्तद्रूपत्वात्[2]।**

गया है (सूत्रिताः) का अभिप्राय है अलंकारसूत्रों द्वारा (अलंकारों का स्वरूप) सूचित कर दिया है या संक्षेप में बता दिया गया है।

इनमें से यमक आदि शब्दालंकार हैं। उपमा आदि अर्थालंकार हैं। लाटानुप्रास आदि उभयालंकार हैं। संसृष्टि और संकर ये दो (मिश्ररूप अलंकारों के) भेद भी तद्रूप अर्थात् उभयालंकार होते हैं (इसीलिये उभयालंकार में बहुवचन का प्रयोग विवक्षित है)।

अथ सादृश्यविच्छित्तौ भेदाभेदतुल्यतायामुपमानन्वयोपमेयोपमास्मरणानि, अभेदप्राधान्य आरोपाश्रयतया रूपकपरिणामसन्देहभ्रान्तिमदुल्लेखापह्नुतयः, अध्यवसायाश्रयेणोत्प्रेक्षातिशयोक्ती, गम्यमानौपम्याश्रयेण तुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिविनोक्तयः, विशेषणविच्छित्त्या समासोक्तिपरिकरौ, विशेषणविशेष्यविच्छित्त्या श्लेषः, अप्रस्तुतात् प्रस्तुतावगतावप्रस्तुतप्रशंसा, सामान्यविशेषभावादिना निर्दिष्टप्रकृतसमर्थनेऽर्थान्तरन्यासः, गम्यस्य भङ्ग्यन्तरोक्तौ पर्यायोक्तं, स्तुत्या निन्दया वा स्तुतेर्गम्यत्वे व्याजस्तुतिः, प्राकरणिकयोर्विशेषार्थं निषेधाभासेऽनिष्टविध्याभासे चाक्षेपः, विरोधगर्भतया विरोधविभावनाविशेषोक्त्यतिशयोक्त्यन्तरासङ्गतिविषमसमविचित्राधिकान्योन्यविशेषव्याघातद्वयानि। शृङ्खलावैचित्र्येण कारणमालैकावलीमालादीपकसाराः, तर्कन्यायेन काव्यलिङ्गानुमाने, वाक्यन्यायेन यथासंख्यपर्यायपरिवृत्तिपरिसंख्यार्थापत्तिविकल्पसमुच्चयद्वयसमाधयः, लोकन्यायेन प्रत्यनीकप्रतीपनिमीलितसामान्यतद्गुणातद्गुणोत्तराणि। गूढार्थपरत्वे सूक्ष्मव्याजोक्तिवक्रोक्तिस्वभावोक्तयः, स्फुटार्थत्वे भाविकम्, औदात्त्येनोदात्तद्वयं, चित्तवृत्त्यालम्बेन रसवत्प्रेयऊर्जस्विसमाहितभावोदयसन्धिशबलत्वानीति शुद्धाः। मिश्रतया तु संसृष्टिसङ्करौ। तदिदमभिसन्धायाह—**एवमिति**। पूर्वोक्तप्रकारपरामर्शः। **एत इति**। प्रक्रान्तस्वरूपनिर्देश इति शब्दार्थोभयालङ्कारान् वर्गशो विविनक्ति—**तत्र शब्दालङ्कारा इत्यादि**। **लाटानुप्रासादय इत्यादि**। शब्दपरामृश्यानुद्घाटयति—**संसृष्टिसङ्करेति**।

---

१. °संकरप्रकारौ कौचिदलङ्कारौ। तद्रूपत्वात्—अ०। °संकरयोरपि°—शा०। °संकरयोश्चित्ररूपत्वात्—ना०।

२. °तद्रूपात्—शा१।

